॥ श्रीः ॥

# जीवसञ्जीविनीनाटकम्

अय ग्रन्थ

नवरसोल्लासिन्याख्यव्याख्यासहितः

निवृत्तमहीशूरदेशीयसंस्कृतशालोपद्रष्टृपदेन चेन्नरायपत्तनाभिजनेन

**श्री वेङ्कटरमणार्येण**

विरचितः

बेङ्गलूरु सैंट् जोसेफ् कलाशालायां संस्कृतभाषाचार्यपदमलङ्कुर्वद्भिः

एम्. ए. सुपदालंकृतैः विद्वद्भिः

**एम्. रामकृष्णभट्टमहोदयैः**

बेङ्गलूरु वेदमहापाठशालायामध्यक्षपदमलङ्कुर्वद्भिः

एम्. ए. सुपदालंकृतैः विद्वद्भिः

**एन्. मल्लिकार्जुनशास्त्रिपण्डितैश्च**

संशोधितः

बेंगलूरु वि वि सुब्बय्य अण्ड् सन्स् मुद्राक्षरशालाया समुद्रित

विजयते

१९४५

## प्रकटनम्

एतद्ग्रन्थसम्बन्धाधिकारः कोऽपि ग्रन्थकर्त्रा न स्वायत्तीकृतः। तस्माद्यदा कदावाप्यधिकानि पुस्तकान्यपेक्षितानि भवन्ति, तदा यस्य कस्य वा एतद्ग्रन्थस्य पुनर्मुद्रणकार्ये भवति निरर्गलोऽधिकारः। परन्तु ग्रन्थस्य स्वायत्तीकरणे न तस्याधिकारः। तथाप्ययं ग्रन्थः व्याख्यान्तर-समेतो वा, विवरणसहकृतो वा भाषान्तरपरिवर्तनपरिष्कृतो वा यदि भवेत्, तदा तद्व्याख्यादिकर्तुः तत्प्रतिनिधेः, विश्वविद्यापीठादेः, तादृश-व्याख्याद्युपेतस्यास्य ग्रन्थस्य न्यायतः स्वायत्तीकरणपूर्वकमेव सर्वे मुद्रणाद्यधिकाराः निश्चिताः, ग्रन्थकर्तृसम्मताश्च भवन्ति ॥

बेङ्गलूरु, २५-२-१९४५

श्रीवेङ्कटरमणार्यः
ग्रन्थकत

---

## Announcement



Bangalore,
**25th Feb. 1945**

(Sd.) C. VENKATARAMANAIYA,
***Author.***

## कृतज्ञता ।

समयेऽस्मिन् एतद्ग्रन्थपरिशीलनकार्ये साहाय्यमाचरितवतां श्रीमन्म-हीशूरमहाराजास्थानमहाविदुषां साहित्यरत्नमित्यादिसुपदालङ्कृतानांकल्ल-म्बाडि गोपालकृष्णशास्त्रिणाम्, ग्रन्थशोधने मुद्रणकाले अक्षरस्खलनादि-दोषशोधने च परमसहायभूतानां बेङ्गलूरु सैण्ट्जोसेफ् कालेज् (महापाठ-शालायाम्) संस्कृतभाषाचार्याणाम्, भारतभाषोपद्रष्टृणाम् एम्. ए. सुपदालङ्कृतानाम्, विद्वान् एम् रामकृष्णभट्टमहोदयानाम्, बेंगलूरु वेदमहापाठशालायामध्यक्षपदमलङ्कृतवतां एम्. ए. सुपदालङ्कृतानां एन्. मल्लिकार्जुनशास्त्रिणां च मुद्रणकार्ये अपेक्षितानुकूल्यानि कल्पितवतां श्रीमतां वि. बि. श्रीकण्ठशर्मणा तत्सुतानां च कृतज्ञो भूत्वा सप्रश्रयमभि-वन्दनसन्ततिं समर्पयेऽहम् ।

बेङ्गलूरु, १९४९

श्रीवेङ्कटरमणार्यः
ग्रन्थकर्ता

## ॥ प्रस्तावः ॥

---

राजमान्यैः राजश्रिया विराजमानैः विश्रांतमहीशूरसंस्थान-संस्कृतसर्वशालाध्यक्षैः सि. वेंकटरमणार्यमहाशयैः निर्मितेषु अनेककाव्य-प्रबन्धेषु निसर्गरमणीयमिदं जीवसञ्जीविनीनाम नाटकमामूलाग्रमवालोकि। "गुणालंकारचारुत्वयुक्तमप्यधिकोज्ज्वलम्। काव्यमाश्रयसंपत्या मेरुणेवा-मरद्रुमः ॥ तस्मात्कीर्तिमुपादातुमकीर्तिं च व्यपोहितुम्। काव्यालंकार-शास्त्रार्थः सपाद्यः कविपुङ्गवैः" ॥ इत्यादिपुराणवचनानुसारेण प्रबंधान्त-रापेक्षया सत्काव्यानि प्रेक्षावतां लोकोत्तरचमत्कृतिमादधति हि। एतादृश-श्रव्यकाव्यापेक्षया नाटकारूपदृश्यकाव्यस्य "काव्येषु नाटकं रम्यम्"। "नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्" इति कवितिलककालिदास-सूक्त्यापि सहृदयहृदयाह्लादकत्वं निश्चप्रचम्। "मल्लीसुमचयविलसत्परिमल-मुचि वाचि यो न मोदेत। ब्रह्मदयूर्वा सुदयूर्वा मदयूर्वा किमेतेने"त्यभियुक्तो-क्तिमनुसन्दधानानां सरसोक्तिसुधारसैः सुधीस्वांतेषु नितांतममंदानंददायिनां रसालंकारगुणोल्लसितशब्दार्थसंघटनचातुरीधुरीणानां कविपुङ्गवानां सरणि-मनुसरन्तः तत्रभवंतः सि. वेंकटरमणार्याः पूर्वं स्तुतिकुसुमांजलिसर्व-समवृत्तप्रभावहरिश्चन्द्रकाव्यकमलाविजयनाटकादीन् बहून् ग्रन्थान् व्यरी-रचन्। वार्धके तत्रापीक्षणपाटवशून्यत्रयोविभूषिता अपि असाधारणकविता-निर्माणमार्मिकधुरीणाः एते चारुतररचनाविन्यासपरिकर्मीणं रमणीयार्थ-प्रतिपादकं जीवसञ्जीविनींनाम नाटकमिदं निरमासिषुरिति पण्डितप्रकाण्डा-स्सर्वेऽपि आनदसंदोहतुंदिलान्तरंगाः भवेयुरिति न केऽपि संशेरते। अस्मिंश्च नाटके तत्तच्छास्त्रप्रतिपादिताः दुरूहाः विषयाः विद्यार्थिनां स्वांतेषु आंजस्येन यथाधिगच्छेयुः तथा सम्यक् समग्रथ्नन्। दुरूहस्थले च सोपज्ञ-व्याख्यया समग्राणं ते ते विषयाः व्यवारिषत। तथाहि—

प्रथमांके प्रथमे दृश्ये मार्गशीर्षमासस्य वैदिकाब्दप्रसिद्धं सवत्सरादित्वं सप्रमाणं प्रसाध्य, अभिनवशाल्यादिधान्यवास्तुकशाकादिशालित्वेन, शीतातपशून्यत्वेन च सुखहेतुत्वं लौकिकं च प्रदर्श्य "कोदण्डस्थे सवितरि प्रत्यूषे कमलापतेः। सहस्रवार्षिकी पूजा दिनेनैकेन लभ्यते। हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः" इत्यादिपुराणभाषणपर्यालोचनया, "मासानां मार्गशीर्षोऽह" मिति भगवदुक्त्या च मार्गशीर्षमासस्य प्रशस्यत्व स्फोरितम्। द्वितीये दृश्ये औपनिषददर्शनप्रसिद्धः मायाविचारः व्याख्यायां सप्रमाणं परिशीलितः। सुषुप्ते अज्ञान नास्तीति नूतनसिद्धान्तमारभमाणानां पाश्चात्यविपश्चित्प्रदर्शितपथानुवर्तिनाम् आधुनिकानां च चेतसि यथा चमत्कृतिमावहेत् तथा "अविद्यात्मकत्वात् त्रयाणां तुरीयः" "राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्" "अज्ञानमस्ति च सुषुप्तिगतस्य पुंसः" इत्यादिभगवत्पादाचार्यसूक्तिसुमनोमालां शिरसि संधाय मूलाविद्या सुषुप्तेऽप्यस्तीति निर्धारितम्। तृतीये दृश्येऽपि योगशास्त्रप्रसिद्धः ज्योतिष्मतीसंयमः प्राचीनगुरुकुलादिषु विद्याभ्यासक्रमः चतुर्दशविद्यास्थानं च आधुनिकविद्यार्थिव्यूहसौकर्याय प्रदर्शितम्। चतुर्थदृश्येऽपि "कर्तादयो भवतीह सृष्टिनिवहेति श्लोके तद्व्याख्यायां च "पायत्येष तपत्येष वर्षत्येष गभस्तिभिः" इत्यादिशास्त्रतत्वं बालसुबोधार्थं सम्यक् निरूपितम्। तथा प्रश्नोपनिषत्प्रसिद्धं जगतः अग्नीषोमात्मकत्वमायुर्वेदसृष्ट्यादिकं च सम्यगुपपादितम्। पञ्चमे दृश्येऽपि, जात्या न स्त्रीणां वेदाध्ययननिषेधः उपपत्त्या तु तदसाध्यम् इति शास्त्राकूतं तद्व्याख्यायां च आधुनिकलौकिकहृदयावर्जकत्वेन विवृतम्। तथा भूलोके आयुर्वेदाधिगमपरिपाटीं शास्त्रसंप्रदायरीत्या न्यभान्त्सीत्। इति बुधानामामोदः॥ द्वितीयेऽङ्के प्रथमदृश्ये विद्यमानस्थले यन्त्रसाहाय्यात् दूरदेशस्थवृत्तान्ताधिगमवत् स्वशरीरे दिव्यश्रोत्रमहिम्ना युगपत् सूक्ष्मव्यवहितविप्रकृष्टवस्तुग्रहणसामर्थ्यं भवेदिति अर्थप्रतिपादनपरः श्रोत्राकाशयोः "संबंधसंयमात् दिव्यं

श्रोत्रम् " इति योगशास्त्रप्रसिद्धो राद्धान्तः त्रिकालज्ञऋषिद्वारा प्रकाशितः। तृतीये दृश्येऽपि आयुर्वेदप्रसिद्धः शस्त्रचिकित्साक्रमः पूर्वमासीदेव, युद्धसमये शरीरप्रविष्टान् बाणाग्रशलाकादीन् संदंशादिना निष्कृष्य सद्योव्रणविरोपणार्थमौषधं विलिप्य पानादिसेवनेन सुखं सुप्त्वा प्रातः पुनर्युद्धसन्नद्धा बभूवुरिति भारतादिषु प्रसिद्धः। तथा मञ्जीविन्यौषधीभिः सञ्जीविनीमंत्रैश्च मृतस्वबन्ध्वादीनां प्राणाः प्रत्यागता आसन्। तथा महाभारते वनपर्वणि मृतं स्वकुमारं सञ्जीवनीमंत्रेण पुनः प्रत्युज्जीव्य " न नो मृत्युभयं हि नः " इति प्रत्युत्तरेण विसयमादधताम् ऋषीणां वचनानि च श्रूयंते हि। तादृशलोकोत्तरचिकित्साविधानदक्षायुर्वेदशास्त्ररहस्यं ब्रह्मेन्द्रभरद्वाजात्रेयकाश्यपविश्वामित्रदिवोदासादिद्वारा लोकोद्धारार्थं प्रसृमरमिति वैद्यशास्त्रप्रणयिनं तत्प्रकाशितच्यवनप्राशनादिमहौषधिरसायनादिकं च सुलभया रीत्या अभिहितं सुमनसामामोदाय च भवेत्। तृतीयेऽङ्के तावत् ललितपदविन्यासविशेषेण तत्तल्लौकिकव्यवहारानुगुण इति वृत्तगुंभनेन " यूनोरन्योन्यविषया परस्परविभाविका। स्पृहाह्वया चित्तवृत्तीरतिरित्यभिधीयते ॥" इत्यालंकारिकशास्त्रपरिपाट्या आलेख्यसन्दर्शन, परस्परवीक्षणस्पर्शनभाषणादिना च परां कोटिमापादितः रत्याख्यस्थायिभावः अलौकिकरसतां नीतः कामनीयकमतिशेते। रसोचितगुणालंकारवृत्तयः सर्वत्र साधिताश्च। वैवाहिकविधिनिर्वर्तनादिकं लोकमर्यादां नातिशेते। अतिशेते च वधूप्रषणकालिकः पित्रोरुपदेशः नाटकान्तरस्थितं सन्देशम्। विशेषतः षोडशवार्षिकप्रौढकन्याप्रदानकालेऽपि "अष्टवर्षा भवेत्कन्या पुत्रवत् पालिता मया" इत्येव भाषमाणानां पुरोहितानामुक्तिः "इयद्वर्षा भवेत्कन्या" इति पाठपरिवर्तनेन परिष्कृता सती याथार्थ्यं नीता। कलानिधिः कुमुदबंधुः चन्द्रिका सञ्जीविनी जीवदेवः ज्योत्स्नावती इत्येवमादयश्शब्दाः तत्तत्पात्रस्वरूपाभिधायिनः रसानुगुणतया परिकल्पिता। किं बहुना भवभूत्यादिमहाकविप्रणीतमालती-

माधवादिग्रन्थकर्तस्यासु इदमपि नाटकं कृतपदविन्यासमिति पण्डितप्रकाण्डा विदांकुर्वन्तु । नाटकेऽस्मिन् सर्वत्र लगप्रक्रियामनुसृत्य नूतनतया अनेकानि वृत्तानि परिकल्प्य तल्लक्षणानि च स्वयं निर्माय उदाहरणमुखेन संयोजितानीति कविपुंगवस्य अस्य वृत्तनिर्माणशैली असाधारणेति तद्विरचितसर्वसमवृत्तप्रभावग्रंथेनैव परिज्ञायत इति हेम्नः परमामोदः ॥ चतुर्थांकेऽपि श्रीकालिदासादिमहाकविभिः प्रदर्शिताः गर्भिणीनां मृद्भक्षण दोहदनिर्वर्तनं भूषणादित्यागः कुसुममालायामपि भारबुद्धिः एवमादयः शास्त्रसम्मताः खलु । तामेव सरणिमत्यजन् एष कविः तत्प्रकरणानुसारेण सर्वं प्रादर्शयत् । तथा जातकर्मादिसंस्कारः पुत्रोत्पत्ति श्रावयितुः तत्क्षणममूल्याभरणवितरणं शर्कराखण्डभारभूषितशकटानां वीथीषु संचारणं जातकसंपत्तिः इत्येवमादयो विषयाः रमणीयतया विन्यस्ताः । "द्वादशाष्टमजन्मस्थाः शन्यङ्गारका गुरुः । कुर्वन्ति प्राणसंदेहं स्थानभ्रंशं धनक्षयम्" इत्यादिप्रमाणेन जातकपरिशीलनराशिकुंडलीपरिष्करणादयः ग्रन्थस्थाः कवेरस्य ज्योतिश्शास्त्रेऽपि महान्परिचय इति प्रफुल्लयन्ति ॥ तृतीयतुर्यदृश्ययोः खलु अर्शः, पाण्डुरोगः कर्णशूलः शिरोवेदनादिरोगाणां तत्कालिकप्राप्तिमुपवर्ण्य तेषां निवारणोपायः "मलायत्तं बल पुंसां शुक्रायत्तं च जीवितम् । तस्माद्यत्नेन संरक्षेत् यक्ष्मिणो मलरेतसी ॥" इत्यादिशास्त्रपुरस्कारेण रोगनिदानतत्परिहारोपायचिकित्साक्रमादिकं च सुविस्तरं प्रतिपादितम्, शिष्यजनशिक्षार्थं विन्यस्तमिति सर्वशास्त्रेषु कवेः प्रागल्भ्यं वरीवर्तीति कस्य वा चित्ते पदं न विधत्ते । पञ्चमाङ्केऽपि नायकस्य प्राप्तरोगोपद्रवपरिहारद्वारा उभयोर्नायिकानायकयोः सर्वलोकसम्मतं गार्हस्थ्यधर्मं समुपवर्ण्य समीचीनराज्यभारनिर्वहणधुरीणतां च तृतीयाश्रमधर्मानुष्ठानं न्याय्यमित्येवाभिप्रायः प्रकाशितः । प्रसंगात् शृङ्गारशान्तरसयोर्भेदोऽपि निरूपितः । ततः भक्तिध्यानादिना ज्ञानमार्गानुसरणं सम्मतमित्यभिप्राय, जीवन्मुक्तानां च रीतिं प्रदर्श्य स्वपुत्रस्य पाणिग्रहणमंगलपूर्वकं राज्यं

समर्प्य स्वस्य जीवदेवस्य कृतकृत्यता ध्वनिता । एवमादयस्सर्वाः कथाः औचित्योपनिबन्धनतत्तद्रसोच्चलिताः गुणालङ्कारभरिताः शय्यारीतिवृत्तिभिः परिकर्मिता इति जीवसञ्जीविनीनामनाटकमिदं सर्वसुमनोहरं रञ्जकं विद्यार्थिजनसौकर्याय सुव्याख्यानेन परिष्कृतं लौकिकवैदिकपुंगवपरिगृहीतं चिरायुर्जीयादित्यनवरतमाशास्ते ॥

**के. गोपालकृष्णशास्त्री,**
अलंकाररक्षामणिः, साहित्यरत्नम्,
आस्थानमहाविद्वान्,
४-८-१९४५
खिल्लेमोहल्ला. ८२१, मैसूरु.

---

# उपोद्घातः

---

इदमिदानीमावेद्यते महाजनानामवगाहनाय, यत्सनातनायुर्वेद-विषयकतत्वानि वेदेषु तत्र तत्र प्रपञ्चितानि, शास्त्रेषु सविस्तरं सुविशदं प्रतिपादितानि, पुराऽत्र सर्वत्र प्रसिद्धिं नीतानीति। तादृशतत्वानि वेदशास्त्र-मुखाद्विदित्वा, तत्प्रयोजनं महदिति परिभाव्य, तन्निदर्शनपूर्वकं किंचिद्वि वक्षितं ग्रन्थमुखात्परिकल्प्य, तद्दर्शनेऽपि दर्शनांतरेष्विव जनानां पुनः प्रत्ययमुत्पादयितव्यमित्युद्देशेन, विरचितेय कृतिर्जीवसञ्जीविन्याख्य-नाटकाकृतिः।

अत्र तु, कविकल्पितमेव वस्तु। तथापि, कथानायकस्सुप्रसिद्धः, यतोऽत्र कल्पितनायकः जीवदेव एव जीवः। स सर्वप्राणिषु वर्तत एवेति प्रसिद्धः। जीवस्यापद्यमानानां रोगाणां परिहारः आयुर्वेदचिकित्सायत्तः। चिकित्सात्वौषधविशेषसाध्या। औषधं पुनः ओषधिवनस्पतिजन्यम्। ओषधीषु मुख्या सञ्जीविनीलता। एतत्तत्त्वमर्यादया, सैव सञ्जीविनीलता सञ्जीविनीति कल्पितनायिकाभूताऽपि सुप्रसिद्धेति भाव्यते। शृङ्गाररसोऽत्र प्रधानः, शान्तिरसोऽपि तत्समानः, अन्येऽपि रसाः तद्रसपोषकास्तदनुपान-भूताः। अतः "नवरसोल्लासिनी"ति स्वकृतव्याख्यायाः सार्थको निर्देशः कृतः ग्रन्थकर्त्रा। अनेन नाटकमिदं शास्त्रोक्तलक्षणोपेतं भवेदिति भावयन्ति भावज्ञाः।

संति चेदस्मिन्नाटके ये केचित्काव्यगुणाः वृत्तिरीत्यादयः, रसपुष्टिकरा-श्चमत्काराः चमत्कृतिजनकाः विविधालङ्कारादिप्रकाराः, ते सर्वे विमर्शक-समालोचकादिविद्वद्धुरीणैस्सम्भाव्य, परिशील्य केनचित्प्रकारेण वा प्रकाश्यत एव। न कापि तत्र व्यग्रताऽस्य कवेः।

अस्मिन् नाटके पुनः प्रसिद्धवृत्तानां मध्ये कानिचिदप्रसिद्धवृत्ता-न्यपि संयोजितानि, तेषां लक्षणानि कल्पितानि, समुचितनामभिरभि-

हितानि च। तादृशवृत्तान्यपि विविधछन्दोजातान्येवेति "प्रस्तारनष्टोद्दिष्ट लगक्रियासंख्याध्व" रूपषट्प्रत्ययाभिज्ञानां प्रत्ययो जायत एव। अनेन कविना विरचितस्य "सर्वसमवृत्तप्रभावा"ख्य ग्रन्थस्यान्ते निर्दिष्टानां परिशिष्टानामवलोकनेन च तादृशप्रत्ययः सुलभेन भवतीत्यभिप्रेयते।

ग्रन्थोऽयं कविना वाग्देवतानुग्रहान्निर्मितः, स्वार्जितधनव्ययेन बहुप्रयासात्संमुद्रितः, गुणग्राहिणां हस्तपरिचयं प्रापितश्च। एतेनैव ग्रन्थकर्तुः कर्तव्यं निर्वर्तितम्। समुचितपात्रेभ्य. विनियोगवशात्प्रथममुद्रणोपेतानां पुस्तकानामभावः क्षिप्रं जायते। तदा ग्रन्थस्यास्य पुनर्मुद्रणप्रकाशादि कार्यं तु, परोपकारनिरतानां देशवत्सलानां विद्वत्पक्षपातिनामुदारहृदयानां सभ्यानामायत्तं भवेदिति सप्रश्रयमाशास्ते।

बेंगलूरु, १९४९

ग्रन्थकर्ता,
श्री वेङ्कटरमणार्यः

## एतन्नाटकस्य वृत्तपरिचय:
अथवा
## विषयानुक्रमणिका.

---

### प्रथमेऽङ्के—प्रथमदृश्यम्


पृष्ठः

नांदी-मङ्गलाचरणम् .... १-५

प्रस्तावना-नटीसूत्रधारयोः संभाषणम्-हेमंततुवर्णनम् .... ६-१३


### द्वितीयदृश्यम्


ब्रह्मलोके, परेशप्रासादे-परेशमहामाययोः, सख्युः सत्यप्रियस्य च संभाषणम् .... १४-१८

भूलोके मार्तण्डदेशे तेजोवतीनगरे सूर्यवंशे प्रभावतीप्रद्योतपुत्रस्य, कथानायकस्य जीवदेवस्य वृत्तांतश्रवणम्.... १८-२१


### तृतीयदृश्यम्


भूलोके सर्वज्ञगुरोराश्रमे जीवदेवस्य प्रचलितं विद्याप्रावीण्यं द्रष्टुं वृद्धब्राह्मणीब्राह्मणरूपेण महामायापरेशयोरागमनम् २२-२५

जीवदेवेन स्वेनाभ्यस्तविद्यानां विवरणम् .... २५-२७

महामायापरेशयोरंतर्धानम्-जीवदेवेन तयोर्निजस्वरूपकथनम्... २७-२९


### चतुर्थदृश्यम्


सत्यलोके ब्रह्मसभा-वाणीब्रह्मणोः सरससल्लापः ... ३०-३२

भूलोके कुमुददेशे ज्योत्स्नानगरे चन्द्रवंशे चन्द्रिकाकलानिधिसंभूतायाः कथानायिकायाः सञ्जीविन्याः जन्मादिवृत्तांतकथनम् । .... ३३-३८

ब्रह्मणा लक्षसंख्याकस्य आयुर्वेदशास्त्रस्य निर्माणप्रतिज्ञा- संजीविनींनामौषधिविशेषस्य मूर्तिरूपायाः सञ्जीविन्याः करस्पर्शेनैव नायकस्य जीवदेवस्य प्राप्स्यमानविविध- रोगाणां परिहारप्राप्तिसूचनम् .... ३९-४१

## पञ्चमदृश्यम्

ज्योत्स्नानगर्यां संगीतशालायां भगवत्प्रार्थना । .... ४२-४३

गायिकागायकरूपेण तत्र सञ्जीविनीं द्रष्टुं प्रस्थितयो- र्वाणीब्रह्मणोः मार्गे सरसोक्तिप्रसङ्गः .... ४४-४५

तयोस्समीपे सञ्जीविन्या स्वीयाभ्यस्तविद्याकलादिकथनम् ... ४६-५१

सञ्जीविन्या सगेयाभिनयप्रयोगप्रदर्शनम् .... ५१-५२

ततस्तया केवलगेयकलाप्रदर्शनम् .... ५२-५३

सञ्जीविन्याः वाणीब्रह्मणोराशीर्वादः .... ५४-५५

## षष्ठदृश्यम्

स्ववाहनभूतराजहंसमुखेन, अश्विनीकुमारौ आयुर्वेदाधि- गमाय ब्रह्माणं प्रति कठोरतपसि स्थिताविति विदितस्य ब्रह्मणो वाण्या सह तदनुग्रहार्थं प्रस्थानम् ... ५६-५८

मार्गे, तथैव तपसि स्थितस्य दक्षस्य आयुर्वेदरहस्योपदेशानुग्रहः ५८-५९

अश्विनीकुमारावनुग्रहीतु वाणीब्रह्मणोस्तदन्तिकगमनम् ... ५९-६०

ब्रह्मणः आज्ञया अश्विनीकुमारयोः दक्षेण आयुर्वेदरह- स्योपदेशः .... ६१-६२

## द्वितीयेऽङ्के—प्रथमदृश्यम्

इन्द्रसभा—इन्द्रेण अश्विनीकुमारयोरभिनन्दनम् .... ६३-६४

शचीप्रार्थनया स्त्रीणां प्रसववेदनापादितरोगचिकित्सायामपि अश्विनीकुमारयोरवधानाकर्षणम् .... ६५-६६

भैरवेण स्वयंभुवश्शिरश्छिन्नमिति वार्ताश्रवणम्। तच्चिकित्सार्थ-
मश्विनीकुमारयोः प्रस्थानम् .... ६६-६८

## द्वितीयदृश्यम्

अश्विनीकुमारभ्यां स्वयंभुवश्छिन्नशिरस्सन्धानम् .... ६९-७१
देवासुरयुद्धे पूष्णो दन्तभंगस्य वार्ताश्रवणम् अश्विनीकुमाराभ्यां
पतितदन्तानां समीकरणम् .... ७२
भगस्य नेत्रे नष्टे इति वार्ताश्रवणम्-अश्विनीकुमाराभ्यां नेत्र-
चिकित्सया तस्य नेत्रदृष्टिपाटवसाधनम् .... ७३
दैत्यैरापादितास्त्रबलेन अमरपतेरिन्द्रस्य स्तंभीकरणम्-अश्विनी-
कुमाराभ्यां तन्निवारणम् .... ७४
चन्द्रस्य राजयक्ष्मप्राप्ति. अश्विनीकुमाराभ्याम् ओषधिविशेष-
मुखेन तत्परिहारकरणम् ... ७४-७५
च्यवनर्षेः शापेन वार्धकप्राप्तिः-अश्विनीकुमाराभ्यां रसायन-
विशेषप्राशनविधिना तन्निवारणम् .... ७५-७६
अश्विनीकुमाराभ्यामिन्द्रस्य आयुर्वेदोपदेशः-इन्द्रेण आयु-
र्वेदसंहितानिर्माणप्रतिज्ञा .... ७७

## तृतीयदृश्यम्

कश्यपभरद्वाजात्रेयमहर्षीणां परस्परसंभाषणम्- आत्रेय-
भरद्वाजाभ्या आयुर्वेदसंहितारचनवार्ता ... ७८-८१
विश्वामित्रमुखात् चरकसुश्रुताभ्याम् आयुर्वेदशास्त्रनिर्माणकथनम् ८२-८५

## चतुर्थदृश्यम्

उद्यानवने जीवदेवप्रियदेवयोस्संभाषणावसरे शुद्धवायुप्रयोजन-
विचारः ... ८६-८७
तयोस्स्नातकव्रतोद्देशविचारः ... ८९-९१
स्नातकस्य स्वाभिमतकन्यावरणे अधिकारः ... ९२-९३

## पञ्चमदृश्यम्

भुवनेश्वरीमन्दिरे सञ्जीविनीप्रियदेवीभ्यां देवीपूजावसरे
सञ्जीविन्या संगीतमुखेन देवीप्रार्थना-तस्याः आका...-
वाणीमुखेन देव्याः अनुग्रहप्राप्तिः ... ९४-९७
प्रियदेव्या च तथा प्रार्थना-तस्याः च तथा देव्या अनुग्रहः .... ९८-१००
ताभ्यां मङ्गलगीताकलनम्-देवीप्रसादपुष्पस्वीकारः .... १०१

## तृतीयेऽङ्के—प्रथमदृश्यम्

ज्योत्स्नानगरोद्याने चन्द्रिकाकलानिधिसंभाषणावसरे
सञ्जीविनीं विवाहयोग्येति तस्याः जीवदेवएव अनुरूपो
वर इति च सूचनम् .... १०२-१०७
देवयाजिनामकब्राह्मणमुखात् वराधिगमाय प्रद्योतराजस्य
निकटं सञ्जीविन्याः आलेख्यप्रेषणम् ... १०८-१०९

## द्वितीयदृश्यम्

तेजोवतींनगरे राज्ञीराजभ्यां विप्रमुखात्प्रेषितं सञ्जीविन्याः
आलेख्यं वीक्ष्य तत्कन्यास्वीकारे स्वाभिमतनिश्चय-
दर्शनम्, तथाङ्गीकारमधिगतुं प्रभावत्या पुत्रस्य जीवदेवस्य
निकटागमनम्-चित्रदर्शने पुत्रस्य कुतूहलनिष्पादनञ्च... ११०-११५
चित्रदर्शनेनैव संमतिप्रदानमनुचितमिति साक्षात् कन्यादर्श-
नेनैव तथा कर्तुमुचितमिति च जीवदेवेन स्वाभिप्राय-
निवेदनम् .... ११५-११६
ज्योत्स्नानगरप्रांतोद्याने जीवदेवस्य प्रेक्षणार्थं सञ्जीविनी-
सन्निधानसंविधानकल्पनमावश्यकमिति विप्रमुखात्प्रति-
संदेशप्रापणम् ... ११६-११८

## तृतीयदृश्यम्


तदुपवने जीवदेवप्रियदेवप्रवेशः-सञ्जीविनीप्रियदेवीप्रवेशश्च, तयोस्तयोर्मिथस्सँल्लापावसरे स्वस्वाभिप्रायसूचनम-रचित-कुसुममालानयनाय प्रियदेवीं प्रति सञ्जीविनीप्रार्थना-तथा कर्तुं प्रियदेव्या निर्गमनम् ... ११९-१२८

पानीयसंपादनव्याजेन जीवदेवेन स्वसख्युः प्रियदेवस्य सान्निध्यं परिहृत्य कासाराभिमुखगमनम्- सञ्जीविन्यास्तद्दर्शनप्राप्तिः, १२९

चतस्रो मालाः रचयित्वा प्रियदेव्या स्वोपयोगाय द्वे मालिके तत्रैव निक्षिप्य, सञ्जीविनी पूर्वं यत्र स्थिता तत्र द्वयोः मालिकयोः संस्थापनम् १३०

तद्दर्शनार्थं गतायाः कासारतटे स्थितायाः सञ्जीविन्याः जले प्रतिबिंबितां छायां दृष्ट्वा जीवदेवेन तत्सौन्दर्यवर्णनम्, मुखमुन्नमय्य तामेव साक्षात्पश्यतो जीवदेवस्य सञ्जीविनी-सौन्दर्यवीक्षणजनितमोहावेशवशान्मूर्च्छना १३१

अत्रान्तरे पुष्पापचयार्थं प्रस्थितायाः प्रियदेव्याः मार्गे हठात् प्रियदेवस्य दर्शनम् । तयोस्संलापः । प्रियदेवेन प्रियदेव्यामनुरागप्रदर्शनम् । तस्या अपि तस्मिन् अनुरागाविर्भावसूचना, पुनरागमनप्रत्ययोत्पादनानन्तरं तस्याः निर्गमनम् । १३२

सञ्जीविन्याः कासरतटात् करग्रहणपूर्वकं जीवदेवस्य स्वस्थानं प्रत्यानयनं तदाश्वासनञ्च । जीवदेवस्य संज्ञाप्राप्त्यनंतरं, नायिकानायकयोस्सरससंलापेन परस्परपुष्पमालासमर्पण-द्वारा गान्धर्वविवाहसंपादनम् । १३७

स्ववचनपालनेन पुनरागतया प्रियदेव्या सह प्रियदेवस्य पुनस्सरससंलापावसरे उभयोः परस्परानुरागप्रदर्शनम् ।

अवशिष्टपुष्पमालासमर्पणद्वारा तयोरपि गान्धर्वविवाह-घटना १३९

जीवदेवप्रियदेवयोः परस्परमेलनवशात् स्वनगरं प्रति निर्गमनम्। तथैव सञ्जीविनीप्रियदेव्योरपि ज्योत्स्नानगर-प्रवेशः। १४०


## चतुर्थदृश्यम्


राज्ञे राज्ञ्या स्वपुत्र्याः संप्राप्तसंतापकथनम्। तस्य परिहारः तस्याः जीवदेवेन सह विवाह एवेति निश्चयः, १४२

मन्त्रिणा स्वसुतापि ज्वरेण सन्तप्तेति निवेदनम्। स कामज्वर एवेति राज्ञ्या समुदीरिते तस्या अपि प्रियदेवेन सह विवाहः प्रतीकारो भवतीति निश्चयः १४५

तदवसर एव तेजोवतीनगरादागतस्य शीघ्रगामिनामदूतस्य मुखात् सञ्जीविनीजीवदेवयोः प्रकृतिस्थित्यावेदनपुरस्सरं तयोः क्रमेण सञ्जीविनीप्रियदेवीभ्यां सह विवाहस्य संपादनाय प्रभावतीप्रद्योतयोः प्रार्थनानिवेदनम् १४६

प्रद्योताय राज्ञे लग्नपत्रिकाप्रेषणम्। शीघ्रगामिनो निर्गमनम्। १४९

विवाहार्थमपेक्षितसकलपरिकरसम्पादनाय मन्त्रिणे राजाज्ञा।


## पञ्चमदृश्यम्


तद्वार्ताविशेषेण संतुष्टानां विवाहमहोत्सवार्थमाहूतानां प्रद्योतप्रभावतीजीवदेवादीनां विश्वावसुभामतीप्रियदेवानां परिवारयुतानां ज्योत्स्नानगरे कल्याणमङ्गलसाधनाय प्रस्थानं तत्पुरप्रवेशश्च १५१

तत्र राजयोग्यैर्महावैभवैः सञ्जीविनीजीवदेवयोः प्रियदेवीप्रियप्रियदेवयोश्च शास्त्रविधिना विवाहोत्सवसमारम्भः। पुरो-

हितप्रमुखैराशीर्मंगलानुशासनम् । वस्त्रभूषणादिभिस्सत्कृतानां सर्वेषां वरपक्षीयाणां स्वदेशं प्रति निर्गमनम् १६४

## चतुर्थोऽङ्कः–प्रथमदृश्यम्

सञ्जीविनी गर्भिणी जातेति वार्ताप्रचारः तस्या दोहदविचारः । पुत्रजननम्-" ज्ञानसूर्य " इति शिशो' नामकरणम् । सर्वेषा संमोदः १६५-१७५

## द्वितीयदृश्यम्

जीवदेवस्य संपत्स्यमानरोगबाधा ज्ञातवत्याः सञ्जीविन्याः मनोव्यथाप्राप्तिः १७६-१८०

तद्विज्ञानात् कार्तान्तिकमुखैर्जीवदेवस्य जातकपरीक्षा । ग्रहचारविषयावगतिश्च । तस्य तीव्रग्रहचारवशात् रोगप्राप्तिरवश्यंभाविनीति त्रिकोलज्ञवचनम् । तत्परिहारोपायचिन्ता । १८१-१८३

देवत्ररात् तत्परिहारः स्वहस्तस्पर्शेन भवतीति सञ्जीविन्या निवेदनम् । व्याधिग्रस्तस्य समीपे तत्पत्नीसन्निधानं नोचितमिति सञ्जीविन्याः तत्पुत्रेण सह मातृगृहनिवासाय प्रेषणम् । १८४-१८५

## तृतीयदृश्यम्

जीवदेवस्य अर्शोरोगप्राप्तिः । राजवैद्यैस्तच्चिकित्सा । चिकित्साऽसाध्ये रोगे जीवदेवेन सञ्जीविनीस्मरणम् । विमानैरागतयाऽनया, राजवैद्यैर्निष्पादितानामौषधविशेषाणां परीक्षा । तस्या हस्तस्पर्शप्रभावात् तैरेवौषधविशेषैस्तद्रोगपरिहारः । १८६-१९२

कालान्तरे, जीवदेवस्य पाण्डुरोगाक्रान्तिः । राजाज्ञया,

रोगस्य निदानं निवेद्य राजवैद्यैस्तत्परिहाराय शास्त्रोक्त-भैषज्यकरणम् । तेन तद्रोगेऽनिवारिते, पत्युः स्मरणादेव तत्र पूर्ववदागतायास्सञ्जीविन्यास्तद्भैषज्येनैव तद्रोग-परिहारः — १९२-१९५

तथैवान्यदा जीवदेवस्य राजयक्ष्मसंप्राप्तिः। तच्चिकित्सायामपि राजवैद्यानां भैषज्यकौशलेन रोगपरिहारो भवतीत्याशंसा। भग्नाशयेषु भिषगादिषु यथापूर्वं जीवदेवकृतस्मरणादेव सञ्जीविन्या तत्रागत्य तदौषधस्पर्शप्रभावात् राजयक्ष्मपरिहरणम् — १९६-२०४

समयान्तरे तस्यैव कर्णशूलप्राप्तिः। कर्णरोगस्य निदानप्रकारपरिहारविचारानन्तरम् उचितभैषज्यप्रयोगः। तत्रापि जातायां निराशाया तत्कर्णशूलस्यापि, यथापूर्वं सञ्जीविनीहस्तस्पर्शात् तद्भैषज्येनैव कर्णशूलस्य पुनरा निरासः — २०४-२०८

ततः तस्य जीवदेवस्य नेत्ररोगाविर्भावः तन्निवारणेऽपि राजवैद्यप्रयतने निरर्थके जाते, पुनः जीवदेवेन स्वपतीस्मरणम्, तस्या आगमनम्। तया सिद्धतत्कृतस्य चिकित्सोपयोगिन औषधस्य परीक्षा, तत्स्पर्शनम्। तेनैव तदौषधे प्रभावाधिगमः, तत्प्रयोगेण तद्रोगनिवर्तनम्। सञ्जीविन्या अदर्शनम्। सर्वैः तदद्भुतदर्शनसञ्जातहर्षप्रकर्षप्रदर्शनम्। ग्रहबलदेवतानुग्रहनिदर्शनम् — २०९-२१९

## पञ्चमेऽङ्के—प्रथमदृश्यम्

सञ्जीविन्या स्वाधिगतदेववरप्रभावस्य स्वमात्रे निवेदनम्। पुत्रस्य ज्ञानसूर्यस्य स्वजनकगृहनिवासे आसक्तिप्रदर्शनेन तया मातापितृसम्मतिप्रार्थना, तावनुगतयोः चन्द्रिका-

कलानिध्योः तेजोवतीनगरे जामातृदर्शनम्। तयोः बन्धुजनैस्सम्भाषणम्। तादृशसंभाषणावसरे प्रद्योतेन प्रभुणा ऐहिकसुखे अनादरपूर्वकं जीवदेवे राज्यधुरामधिवेश्य वानप्रस्थाश्रमस्वीकारे अभिरुचिनिवेदनम्। तदेव शास्त्रसम्मतं क्षत्रियजनोचितमिति कलानिधिना स्वसम्मतिप्रदर्शनम्। तथाकरणे समुद्यमः। अत्रान्तरे तत्रागतां शान्तिप्रभां दृष्ट्वा सा ज्ञानसूर्यस्य पाणिग्रहणयोग्येति निश्चयः। पूर्वं तावत्तयोः समुचितविद्याभ्यासः प्रचलत्विति निष्कर्षः। २२१-२३४

## द्वितीयदृश्यम्

अभिनवराज्यधुरन्धरस्य जीवदेवस्य राज्यशासनधोरणीसूचना। जीवदेवेन, स्वमहिष्याः सञ्जीविन्याः वैषयिकसुखलालसासंकल्पः। तदर्थं बन्धुजनादीनामाह्वानम्, अपेक्षितानां मङ्गलवस्त्वादीनां सम्पादनम्। अनन्तरं सिंहासने ज्ञानसूर्यं शान्तिप्रभां चोपवेश्य, तयोः प्रदर्शनम्। तदर्थं शृङ्गारविलाससंलापः। सञ्जीविन्या, स्वसुखपराङ्मुखेन प्रजारञ्जनार्थं सन्मार्गेण राज्यशासने परमामक्तिरेव श्रेयस्करीति स्वभर्त्रे ललितोपदेशः तत्रत्ये हास्योक्तिसंदर्भे, स्वभार्याभिमतमेव स्वस्य सम्मतमिति राज्ञानुमोदः- प्रास्ताविके शान्तिप्रभाज्ञानसूर्ययोरुद्वाहसमारम्भे कर्तव्योद्यमसंपादनाय अपेक्षितसंभाराणां सज्जीकरणम्. २३९-२४७

## तृतीयदृश्यम्

जीवदेवेन लोके यद्यदधिगतं तद्विवरणेन सञ्जीविन्याः किमन्यापेक्षा मा भूदिति स्वतनये ज्ञानसूर्ये राज्यभारं निवेश्य वने वासः स्वाभ्यां कर्तव्य इत्युपदेशः। गृहवासवनवासप्रयोजनविचारः।

वनवास एव जीवन्मुक्तये परमसाधक इति सञ्जीवनी, तदर्थं गृहवास एव श्रेयानिति जीवदेवः। अत्र वादप्रतिवादः। जीवन्नेव मुक्तो भवितुमुचितमिति निश्चयः। तत्साधनाय ज्ञानसूर्यस्य राज्ये पट्टाभिषेकनिर्वर्तनं प्रथमं कर्तव्यमिति पट्टाभिषेकव्यापारप्रचलनम्। तदवसरे पुरोहितैर्बन्धुजनैश्च मङ्गलाशीर्मुखेन तयोः सदुपदेशः। यथोपदेशानुवर्तने ताभ्या-मङ्गीकारप्रदर्शनम्। मङ्गलानुशासननिमित्तकं लोककल्याणाय भरतवाक्यघोषणम्। एवमितिवृत्तसंग्रहनिरूपणम् २४८-२६७

---

## एतन्नाटकस्यपात्राणां विवरणम्.

---

### पुरुषपात्राणि.

| | | |
|---|---|---|
| नटः | - | सूत्रधारः |
| परेशः | - | वृद्धब्राह्मणः |
| सत्यप्रियः | - | परेशस्य सखा. |
| प्रद्योतः | - | नायकस्य जनकः |
| विभावसुः | - | प्रद्योतराजस्य मन्त्री. |
| जीवदेवः | - | प्रद्योतस्य पुत्रः (नायकः) |
| प्रियदेवः | - | नायकस्य सखा. |
| सर्वज्ञगुरुः | - | नायकस्य विद्यागुरुः |
| तच्छिष्याः | - | नायकस्य सहाध्यायिनः |
| ब्रह्मा | - | सत्यलोकाधिपः (गायकवेषधारी) |
| कलानिधिः | - | कुमुददेशाधिपः (नायकस्य श्वशुरः) |
| कुमुदबंधुः | - | कलानिधेः मन्त्री. |
| राजहंसः | - | ब्रह्मणो वाहनभूतः (पक्षिविशेषः) |
| दक्षः | - | ब्रह्मणो मानसपुत्रः |
| दस्त्रौ | - | अश्विनीकुमारौ (देववैद्यौ) |
| इन्द्रः | - | अमराधिपः |
| भैरवः | | ईश्वररूपः |
| स्वयंभूः | - | ब्रह्मरूपः |
| पूषा | - | सूर्यरूपः |
| भगः | - | रुद्ररूपः |
| चन्द्रः | - | सोमरूपः |
| कश्यपभरद्वाजात्रेयाः | - | ऋषयः (आयुर्वेदसंहिताकर्तारः) |

| | | |
|---|---|---|
| विश्वामित्रः | - | महर्षिः |
| चरकसुश्रुतौ | - | वैद्यशास्त्रकर्तारौ |
| देवयाजी | - | ब्राह्मणः |
| ज्ञानसूर्यः | - | जीवदेवस्य पुत्रः |
| सुधांशुः | - | कलानिधिपुत्रः (ज्ञानसूर्यस्य श्वशुरः) |
| शीघ्रगामी | - | दूत. |

अन्ये पुरोहितपौरसामाजिकसेवकादयः

---

## स्त्रीपात्राणि

---

| | | |
|---|---|---|
| नटी | - | सूत्रधारस्य भार्या |
| महामाया | - | परेशस्य भार्या |
| प्रभावती | - | प्रद्योतराजस्य महिषी (संजीविन्याः श्वश्रूः) |
| वाणी | - | ब्रह्मणः पत्नी (गायिकावेषधारिणी) |
| चन्द्रिका | - | कलानिधिराजस्य महिषी (संजीविन्याः जननी) |
| कुमुद्वती | - | मन्त्रिणः कुमुदबन्धोः भार्या |
| सञ्जीविनी | - | चन्द्रिका—कलानिधिपुत्री (जीवदेवस्य महिषी-नायिका) |
| प्रियदेवी | - | मन्त्रिणःकुमुदबन्धोः पुत्री (सञ्जीविन्याः सखी) |
| सख्यः | - | बालिकाः सञ्जीविन्याः सहानुयायिन्यः |
| सुप्रभा | - | सुधांशोः पुत्री (शान्तिप्रभायाः जननी) |
| लीलावती | - | सञ्जीविन्याः प्रियसखी |
| शान्तिप्रभा | - | ज्ञानसूर्यस्य महिषी |

अन्याः सुमङ्गलाचेत्यादयः ।

---

॥ श्रीरस्तु ॥

# ॥ जीवसञ्जीविनीनाटकम् ॥

प्रथमोऽङ्कः—प्रथमदृश्यम्—रङ्गस्थलम् ।

— नान्दी —

**वन्दे ब्रह्माणमायुष्करममृतकरं दक्षदस्रेन्द्रमूर्तिं**
**विष्णुं पापापनोदस्थिरमतिमगदाचार्यवर्यर्षिरूपम् ।**
**शम्भुं संसाररोगप्रशमनसुखदं जीवसञ्जीविनीड्यं**
**मायमोहान्धकारप्रहरणकिरणं ज्ञानसूर्यं परेशम् ॥१॥**

---

कविना स्वेनैव रचिता "रसोल्लासिनी" - व्याख्या ।

रसेन नवरसेन उल्लसतीति, रसम्-जीवसञ्जीविनीरसम्-उल्लासयतीति वा रसोल्लासिनी । अथेदं "जीवसञ्जीविनी"नाम नाटकं चिकीर्षुः कविः आदौ तावदार्यागा ग्रन्थकाराणां प्राचीनसम्प्रदायमनुसृत्य त्रिविधमङ्गलान्तर्भूतं स्वेष्टदेवतानमस्काररूपमङ्गलमातनोति-"वन्दे" इत्यादिना । "परेशं वन्दे" । अहमिति शेषः । अनुक्तमपि कर्तृपदमत्र उत्तमपुरुषैकवचनक्रियापदसमभिव्या-हारेण सामानाधिकरण्यं प्राप्तस्य अध्याहरिष्यमाणस्य अहमित्युत्तम-पुरुषैकवचनपदस्य अभिव्यञ्जनं भवत्येव । अत्र महाकवीनां प्रयोग एव प्रमाणम् । यथा-"पार्वतीपरमेश्वरौ वन्दे"-इति रघुवंशे कालिदासः । "वन्दे वाञ्छितलाभाय कर्म किं तन्न कथ्यते" इति नीलकण्ठचम्पूकारः। कं वन्दे ? परेशम्-परश्चासौ ईशश्च तम् । ईष्ट इति ईशः—'ईश' ऐश्वर्ये इति धातोः निष्पन्नोऽयं शब्दः । जगत्पतिरित्यर्थः । भूपतिरितिवत् । तस्य परत्वं नाम सर्वेभ्यो यः परः-यस्मात् परः अन्यो नास्ति स एव परः। "अव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः-" इति हि श्रुतिः । परमपुरुष इति यावत्। स एव परमात्मा परब्रह्मेति कथ्यते । तं नमस्करोमि-

भावरूपेण स्थितां भक्तिं वचसोच्चार्यमाणवन्देइत्यादिपदद्वारेण, कराञ्जलिपुट-रूपकायिकसेवारूपेणाभिवादनेन च परमात्मने समर्पयामीति भावः । परमात्मन. निर्गुणत्वान्नीरूपत्वान्नमस्क्रिया अनुपपद्यत इति चेत् - तस्यैव दिव्यमङ्गलमूर्ति मगुणस्वरूपमाहृत्य परेशशब्द उपात्त.- रूपरहितस्यापि तस्य सर्वरूपत्वात्-सर्वशब्दवाच्यत्वाच्च । तर्हि अयमेव सृष्टि-स्थिति-लयकर्ता भवितुमर्हतीति कथं पुनः ब्रह्मविष्णुशम्भुपदबोध्यदेवताविशेषविशिष्टविशेषण-पदाभिधानमिति ? सत्यम् ! विश्वरूपत्वात् परेश एव सृष्टिस्थितिलयप्रभ-विष्णुः । तथापि सृष्ट्यादिभिन्नव्यापारानुसारेण तस्यैव त्रिमूर्त्यात्मकत्वमङ्गी-क्रियत इति सर्वमुपपन्नम् । अथ वा-केचन ब्रह्मैव पर इति वदन्ति । अन्ये विष्णुरेव पर इति-परे केचित्-शम्भुपदवाच्यमहेश्वर एव पर इति स्वस्वामि-रुच्यभिसन्धिसम्प्रदायानुसारेण मन्यन्ते खलु । तेषामपि ध्यानाद्यनुसन्धा-नार्थं तत्तदभिमतदेवताविशेषवाचकं विशेष्यं कर्तृपदं कलयित्वा अन्यानि पदानि विशेषणत्वेन परिगणयितुमपि सुशकम् । यथा - ब्रह्मणः प्राधान्ये-विष्णुंव्यापकं, शम्भुं सुखकरम्-परेशं श्रेष्ठतमप्रभुरूपम्, ब्रह्माणं परमेष्ठिनं वन्दे - नमस्करोमीत्येकोऽन्वयः । तथा विष्णुमधिकृत्य-ब्रह्माणम्-"अणोरणीयान् महतो महीयान्" इति श्रुत्या बृहन्तम्, शम्भुं सुखकरं परेशम्-श्रेष्ठतमप्रभुम्, विष्णुं श्रीमन्नारायणम्-वन्दे नमस्करोमीति द्वितीयो-ऽन्वयः । तथा शम्भुपदे विशेष्ये ब्रह्माण बृहन्तम्-विष्णु सर्वव्यापकम्-परेशं श्रेष्ठतमप्रभुम्-शम्भुं महेश्वरं वन्दे-नमस्करोमीति तृतीयोऽन्वयः । एतेन सर्वमताभिमतोऽयं भवति मङ्गलश्लोकः- तन्मूलादेव नाटकमपीत्याकूतम् । तथापि कविहृदयमनुसृत्यैव व्याख्यानमुपपद्यते । कथंभूतं परेशम् ? ब्रह्माणम्-ब्रह्मस्वरूपम्-'बृहि' धातोः 'मनिन्' प्रत्ययः । नकारस्याकारे-'ऋतोरत्वम्' (उणादि ४-१४८) । कथंभूतं पुनः ब्रह्मस्वरूपम् ? आयुष्करम्-दीर्घायु.प्रदम् । "शतायुर्वै पुरुषः" (ऐ-ब्रा) "आयुर्वर्षशतं नृणाम्" (बृ-३-१०७) । "प्राणो हि भूतानामायुः तस्मात्सर्वायुषमुच्यते"-इत्यादिश्रुतयः प्रमाणम् । अत्र 'प्राण' शब्देन ब्रह्मोच्यते । यथा-"ॐ नमो ब्रह्मणे । नमस्ते वायो ।

त्वमेव प्रत्यक्षं ब्रह्मासि" ( तै-उ ) इत्यादि श्रुतिबलात् । पुनः कथंभूतम् ? अमृतकरम् मोक्षप्रदमिति यावत्। "ब्रह्मलोके महीयते" इत्यादिवचनेन । तथा- दक्षदस्रेन्द्रमूर्तिम्-ब्रह्मणः मानसपुत्रेषु दशसु प्रजापतिषु मुख्यः "दक्षः"- देववैद्येषु श्रेष्ठौ-"दस्रौ"-अश्विनीदेवते, इन्द्र-स्वर्गाधिपतिः-अमराणां स्वामी- एतदात्मकं ब्रह्माणम् । कथम् ? "यस्मिन् सर्वाणि भूतानि" इति श्रुत्या परमेष्ठिनो ब्रह्मणः सर्वात्मकत्वात् । अथवा "यद्यद्विभूतिमत्सत्वं श्रीमदूर्जित- मेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्" इत्यादिगीतावचनेन दक्षा- दयः भगवदंशा एव । अंशांशिनोरभेदात्ते सर्वे ब्रह्मसत्यात्मका एव । अत्र ब्रह्मा-अमृतकरः (चन्द्र) दक्ष - दस्रौ-इन्द्र. इत्यादिशब्दै सूच्यार्थसूचनमपि कृतं भवति । तत्तत्पात्रकृतप्रवेशे तत्तत्कार्यादीनि पुरतो व्यक्तानि भवन्ति । चन्द्रशब्दाऽपरवाच्यामृतकरशब्दप्रयोगेण ग्रन्थस्य मङ्गलं श्रोतृणां अभिने- तृणां द्रष्टृणां च परमाह्लादश्च सूचितः । पुन कथम्भूतं परेशम् ? विष्णुम्- सर्वव्यापकम्-विष्णुस्वरूपम् 'विष्' व्यापने इति धातोः 'नुक्' प्रत्ययः । (उणादि ३-३९) । "सर्वं विष्णुमयं जगत्"-इत्यभिजनोक्तिरत्र प्रामाणम्, "तद्विष्णो परमं पदम्" इति श्रुतिश्च । कथंभूतं विष्णुस्वरूपम ? पापानोद- स्थिरमतिम्-पापाना-सर्वाघानां-अपनोदे-परिहरणे स्थिरा दृढा मतिः-धी. यस्य तम् । पापपरिहारकमिति यावत् । कथम् ? "यानि कानि च पापानि जन्मान्तरकृतानि च । तानि तानि विनश्यन्ति प्रदक्षिणपदे पदे । पापोऽहं पापकर्माऽहं पापात्मा पापसम्भवः । त्राहि मां कृपया देव शरणागतवत्सल । अन्यथा शरणं नास्ति त्वमेव शरणं मम । तस्मात्कारुण्यभावेन रक्ष रक्ष जनार्दन" । इनि सर्वैरास्तिकैः देवपूजाकाले प्रतिदिनं प्रार्थ्यते खलु । अथवा-पापानां पापमतीनां दुष्टानामिति यावत् । अपनोदने-संहारे स्थिरा- निश्चला, मतिः-सङ्कल्पः यस्य तम् । "परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" इति भगवद्वचनात् । पुनः कथंभूतं विष्णुस्वरूपम् ? अमलम्, न विद्यते मलं पापं यस्मिन् तम् । "निर्मलस्फटिकाकृतिम्" इति वचनबलात् । "निरञ्जनम्" इति

श्रुतिनश्च । पुनः कथंभूतम् ? अगदाचार्यवर्यर्षिरूपम् । न विद्यन्ते गदाः- रोगाः-पापानि वा येषु ते आचार्याः- अथवा न गदः- अगदः-रोगाभाव- आरोग्यमित्यर्थः तस्य आचार्या-उपदेष्टारः । आचारे तिष्ठन्तीत्याचार्याः- तेषां वर्या-श्रेष्ठाः- "आचिनोति हि शास्त्राणि चाचारे स्थापयत्यपि । स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते । उपनीय तु यश्शिष्यं वेदमध्याप- येद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" । इत्यादिवचनात् ऋषयः- व्यासादयः तद्रूपत्वात्-'व्यासो नारायणस्स्मृत'-'इत्यादिना, अथवा विष्णोस्स- र्वात्मकत्वात् । अत्र 'विष्णु'पदेन धन्वन्तरिस्सूचितः । पापापनोदस्थिरमती- त्यादिना रोगनिवारका इति, अमलपदेन-आरोग्यदायिन इति, अगदाचार्य- वर्यर्षीत्यादिना आत्रेय, भरद्वाज, काश्यपादयो महर्षयः, अग्निवेश, चरक, सुश्रुतादयः, आचार्याश्च एतन्नाटकपात्रान्तर्गताः भवन्तीति सूचितम् । पुनरपि- कथंभूतं परेशम् ? शम्भु-महेश्वरात्मकम् । कथम् ? शम् सुखं भावयतीति शम्+'भू'धातोः 'डु' प्रत्ययेन सिद्धोऽयं शब्दः । "वन्दे शंभुमुमापतिं सुरगुरुं वन्दे जगत्कारणम्," इत्यादिना स्पष्टोऽर्थः । कथंभूत शंभुम् ? संसाररोगप्रशमनसुखदम्-संसारे-जन्ममरणात्मके जीविनां व्यवहारे-ये रोगाः- शारीरकाः मानसिकाश्च यानि-तज्जनितदुःखानि त्रिविधानि- आध्यात्मि- काधिभौतिकाधिदैविकरूपाणि तेषां प्रशमनकरम्-निवारणदम्, तद्द्वारा सुखदं सुखप्रदम् आरोग्यस्थितौ हि सुखानुभव- जगद्भिषजमित्यर्थः । "भिषजेभव- रोगिणा" मिति स्मरणात् 'भिषक्तमं त्वा भिषजा शृणोमि' इति बह्वृचश्रुतेः । शिवः शङ्करः इत्यादिपदैस्तस्य सुखस्वरूपमभिव्यज्यते । यथा लोके-यः धनवान् स धनमन्येभ्यो दातु शक्तः । यः बलवान् सः स्वाश्रितेभ्यो बलं दातुं स्वबलेन सहायं कर्तुं वा प्रभवति । तथा यः सुखरूपी स एव स्वभक्तेभ्यः सुखं सम्प्रदातुं समर्थ इति तात्पर्यम् । पुनः कथंभूतं शंभुम् ? जीवसञ्जीविनी- ड्यम्-लोके जीवाः-प्राणिनः ये तेषां सञ्जीविन्यः- जीवनप्रदाः देवताः याः भवन्ति-सुरनरादयः- ताभिस्सर्वाभिः ईड्यं-स्तुत्यम् अत एव महादेवः महेश्वरः इत्यभिहितं सर्वेश्वरम् । तस्य सर्वेश्वरत्वम्-"ॐ नमो हिरण्यबाहवे

सेनान्ये दिशा च पतये नम." इत्यादिभिः कृष्णयजुर्वेदोक्तमन्त्रैः सम्यक्प्रतिपादितम् । अत्रापि - संसाररोगप्रशमनसुखदम्, जीवसञ्जीविनीड्यम्-इति विशेषणद्वयेन जीवदेवाख्यस्य नायकस्य संसारे प्राप्ताना अर्शः पाण्डुत्वादिमहारोगाणा महौषधीसमष्टिरूपसञ्जीविनीनामकनायिकाद्वारा परिहृतश्चेति नाटकोक्तकथावस्तु संसूचितम् । पुनः कथंभूतं परेशम् ? मायामोहान्धकारप्रहरणकिरणम्-मायया-भगवच्छक्तिरूपप्रकृत्या आपादितो यो मोह' पत्नीपुत्रादिव्यामोहः अथवा उपाधिवशादध्यारोपितकर्तृत्वभोक्तृत्वाद्यभिमानः स एव अन्धकारः-अविद्याकृतमज्ञानं समस्तदु:खकारकम्-तस्य प्रहरणरूपाः-नाशकाः किरणाः-मयूखाः-तेजश्शक्तिरिति यावत् यस्य तम्-समस्तशोकमोहविनाशकमिति यावत्। "तत्र को मोहः कश्शोक. एकत्वमनुपश्यतः" इत्यादिकाठकश्रुति., "मायां तु प्रकृतिं विद्धि मयिन तु महेश्वरम् । मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादिगीतावचनम्, "वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे" । "विद्ययामृतमश्नुते" । "तरति शोकमात्मवित्" इत्यादिश्रुतयश्चात्र प्रमाणानि । पुनः कथंभूतं परेशम् ? ज्ञानसूर्यम्-ज्ञानभास्करमित्यर्थ । ज्ञानरूपः-सूर्यः-चिज्ज्योतिरित्यर्थः। यथा सूर्यः स्वतेजसा अन्धकारं निरस्यति तथा स्वयप्रकाशः परमात्मा स्वतेजोमहिम्ना मोहान्धकाररूपमज्ञान विनाशयतीत्यर्थः । अत्र 'ज्ञानसूर्य' शब्देन जीवसञ्जीजिविनीपुत्रस्य नामनिर्देशः सूचित । अनेन ज्ञानोदये सति अज्ञाननिवृत्तिरिति तत्त्वं सूचितम् । तथा कथानायकपुत्रः ज्ञानसूर्यः स्वीयज्ञानबलेन जन्ममरणरूपसंसारात्मकाविद्याकार्यमपोह्य परमात्मप्रसादादनुगृहीतस्वरूपसाक्षात्कारेण जीवन्मुक्तोऽभूदिति कथाशरीरसारोऽप्यत्र ध्वन्यते । अथ नान्दीश्लोकः स्रग्धरावृत्तनिबद्धः। तल्लक्षणम्-"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति । इय नान्दीरूपमङ्गलदेवता भक्तैरभिनेतृभिरर्पितां स्रजं सुरभिकुसुममाला धरतीति सौगन्ध्यप्रसादाभिव्यञ्जनेन अनुरूपं वृत्तमादृतं कविनेति छन्दस्तत्त्वाभिमानिनां विदुषामाशयोऽभ्यूह्य प्रकाशितः । वृत्तप्रस्तारस्तु-(- - -, - ᴗ -, - । ᴗᴗ,ᴗᴗᴗ, ᴗ - । - ,ᴗ - -, ᴗ - -,) मगण-रगण-

## १. ( नान्द्यन्ते सूत्रधारः-परितोऽवलोक्य )

भगण-नगण-यगण-यगण-यगणाः-त्रिमुनिसंख्यया सप्तभिस्सप्तभिस्सप्तभिर्यतिर्भवति। अत्र शब्दालङ्कारा -आयुष्करममृतकरमित्यत्र रेफस्य द्वि' 'दक्षदस्येन्द्र' इति दकारस्य त्रि' श्रवणात्, स्थिरमतिरगदाचार्यवर्यर्षिरूपमित्यत्र रेफस्य त्रि' 'र्य' कारस्य द्विः प्रयोगात्, संसाररोगप्रशमनसुखदमित्यत्र सकारस्य त्रिः, "मायामोहान्धकारप्रहरणकिरणं ज्ञानमूर्यं परेश"मित्यत्र मकारस्य द्विः, रेफस्य पञ्चकृत्वः सान्तरसमानव्यञ्जनप्रयोगात् 'छेकानुप्रास.' । प्रथमपादे 'मम्र' इति द्वितीयपादे 'पापाप'इति तृतीयपादे 'संसा' इति निरन्तरसमानव्यञ्जनप्रयोगाद्वृत्त्यनुप्रास । अयमेव अक्षरानुप्रास इति केचित्। प्रथमपादे "करं करं" चतुर्थे-"प्रहरण किरण" इत्यत्र च यमक बोध्यम्। "आवृत्तिं वर्णसंघातगोचरां यमकं विदुः" इति साहित्यदर्पणे काव्यादर्शे च। तृतीयपादे-जीवजीविनीतिप्रयोगेण शब्दार्थयोरभेदात्-तात्पर्ये भेदात् अयं लाटानुप्रासो भवितुमर्हति। "शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः" इति मम्मटः। अयमेव पदानुप्रास इति केचित्। एषां लक्षणादीनि काव्यप्रकाशादिग्रन्थावलोकनेनविदितानि भवन्ति। अत्र ये केचिदर्थालङ्काराः- ओजःप्रसादमाधुर्यादिकाव्यगुणाश्च सन्ति ते सर्वे सुधीभिरूह्येयाः। ग्रन्थकर्ता व्याख्याता च एक एवेति हेतोः स्वेनैव स्वकृतेः शंसनमनुचितं लज्जास्पदं विनयप्रतिबन्धकं स्वाहङ्कारद्योतकं च भवेदिति धिया श्रद्धोपेतेयं संक्षेपोक्तिः भाविकथोक्तेः साधिका प्रसादिका च भूयात् ॥१॥

१. 'नांद्यन्ते सूत्रधारः' इति-अत्र नान्दीपाठकः सूत्रधारः एकः-तदनन्तरं प्रस्तावनार्थं प्रवेष्टा सूत्रधारः अन्यः-इति नाटके द्वौ सूत्रधारौ अङ्गीक्रियेते कैश्चित्। एक एव सूत्रधारः नान्दीरूपं मङ्गलश्लोकं पठित्वा तदनन्तरं नान्द्यन्ते रङ्गस्थलं प्रवेष्टुमलं भवतीति केषाञ्चिदभिप्रायः। "यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा। द्वाविंशत्या पदैर्वाऽपि सा नान्दी परिकीर्तिता।" इति वचनबलात् नान्दीलक्षणं पदसंख्यया व्यवस्थापयन्ति केचित्। तत्रापि

२. समागता एव सहृदयहृदयास्सर्वे सामाजिकाः ।

३. ( ततः प्रविशति नटी )

सूत्रधारः—४. अयि ! प्रिये ! ममानुपदमेव त्वयाऽऽगन्तव्य-

---

प्रकृतिप्रत्ययोपेत व्यस्तपदं वा समस्तपदं वा श्लोकस्य पादं वा यथाभिलषितं पदमामन्यन्ते । तथैव प्रयोगं कुर्वन्ति केचन कवय । अत्र तु न पदव्यवस्था-हता । किन्तु "नन्दन्ति देवता अत्र" इत्यर्थे 'नन्द्' धातोः 'घञ्' प्रत्ययः। ञित्वादादिवृद्धिः । नान्दीलक्षणम्—"देवद्विजनृपादीनामाशीर्वचनपूर्विका । नन्दन्ति देवता यस्यां सा नान्दी परिकीर्तिता" इत्याद्यर्थबोधकमङ्गलरूपा नान्दी समाहृतेत्यवगन्तव्यम् । सूत्रधारः- "नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत्सूत्रधार इति स्मृतः" । इत्यादिलक्षणोपेतः । परितोऽवलोकन सामाजिकसंख्या पर्याप्ता भवति वा रसिकाः रसास्वादनचतुरास्समादरात्सन्निहिता वा इत्यवगन्तुम् । रसिकानां सान्निध्ये सति हि अभिनेतृणामुत्साह स्वीयकार्यनिर्वाहाय ।

२. सहृदयहृदया-हृदयं-सारः-प्रियमिति यावत्-तेन सह वर्तन्त इति सहृदयानि-सप्रियाणि-प्रीतियुतानि-हृदयानि येषा ते-सहृदयहृदयाः-सारज्ञाः-दयालवः-प्रीतियुता इति तात्पर्यम् । सामाजिका.-समाजःसभावेशनमेव प्रयोजनं येषां ते सामाजिकाः समाजे समवेताः साधव इत्यर्थ । अभिनयदर्शन कुतूहलिनो जनाः । विशेषेण नाटकाभिनयदर्शने रसिकाः विद्वज्जना इत्यर्थः ।

३. नटस्य स्त्री-नटी । अत्र नटशब्दः नटप्रधानस्य सूत्रधारस्य बोधकः । तस्य पत्न्याः प्रवेशः पूर्वरङ्गप्रस्तावनार्थम् । "यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवा प्रकुर्वन्ति पूर्वरङ्गस्स उच्यते" इति पूर्व-रङ्गलक्षणम् ।"पूर्वरङ्गं विधायादौ सूत्रधरो निवर्तते" इति "पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः" इति च आलङ्कारिकाः ।

४. यत्र स्नेहविशेष. तत्र 'अयि' इति सम्बोधनम् । कोमलामन्त्रणे-प्रयुक्तपदम् । 'प्रिये' इति भर्त्रा-'प्रिय' इति भार्ययाऽसकृत्प्रयोगः सर्वत्र

मित्युक्त्वा अहं मन्दमन्दपदविन्यासेनाऽत्राऽऽगतः। तवागमनविलम्बे किं कारणम् ?

नटी—५. प्रिय प्राणकान्त ! अहमपि तवानुपदमेवाजिगमिषुरासम्। कृषीवलैः परं यवादीनि नवधान्यानि असद्गृहमानीतानि। तानि तानि तत्तद्भाण्डेषु निर्बाधं निक्षिप्य कालविलम्बभयाद् द्रुतं द्रुतमागता। क्षम्यताम्।

सूत्रधारः—६. प्रिये ! त्वं गृहिणी खलु। त्वया गृहकृत्यं साधु साधितम्। नितरां तुष्टोऽस्मि। पश्येमां सभाम्। अत्र समाविष्टाः शिष्टाः स्त्रीपुरुषाः अतीव पुष्टाः तुष्टाः भवन्ति।

---

प्रसिद्धः। 'आर्ये' 'आर्यपुत्र' इति सम्बोधनं तु नायिकानायकाद्युत्तमपात्रविषयकम्। अत्र नट्याः आगमनविलम्बस्य कारणविज्ञानाय सूत्रधारेण प्रश्नः।

५. नवानि-नूतनानि धान्यानि-नवधान्यानीति नवसंख्याकानिधान्यानीति च अर्थोऽप्यत्रोपपद्यते। तेषां पुरो निर्दिश्यमाने आग्रहायणिके (मार्गशीर्षमासे) खलु नूतनधान्यानामुत्पत्तिरायश्च। नवसंख्याकानि धान्यानि तु-गोधूम-तण्डुला-(यवावा) ढक-मुद्ग-चणक-बर्बर-तिल-माष-कुलत्थाख्यानि। एतान्येव आदित्यादि नवग्रहप्रीतिकराणीति सर्वे जानन्ति। अथवा-तत्तद्ग्रहप्रभावद्वारा तानि तानि धान्यानि प्रादुर्भवन्तीति भावः। तेषां प्रभावोपनयस्तु वृष्टिद्वारा। वृष्टिः ग्रहसञ्चारवशात् भवतीति एतत्कविना स्वीयसनातनवनस्पतिविज्ञानाख्ये सङ्ग्रहग्रथे सम्यक् प्रदर्शितम्। निर्बाधम्-क्रियाविशेषणम्। मूषकचोरादिभिः यथा बाधा न भवति तथा।

६. "गृहिणी गृहमुच्यते" इति लोकोक्त्या गृहस्य पत्नी गृहकृत्यसमर्था भवतीत्यभिप्राय.। स्वगृहिण्या निर्वर्तितेन धान्यरक्षणरूपेण कर्मणा सूत्रधारस्य तुष्टिः। आग्रहायणिके मासि सम्पन्नानां समासादितानां नूतनधान्यानां चाहारवशात् सामाजिकानां देहे पुष्टिः। यावत्संवत्सरमुपभोगायपर्याप्तानां पदार्थानां समागमेन तेषां मनसि तुष्टिरिति भावः।

नटी—७. तेषां पुष्टितुष्ट्योः किं कारणम् ?

सूत्रधारः—८. काल एव ।

नटी— ९. कथम् ?

सूत्रधारः—१०. अयं हि कालः हेमन्तर्तुसंज्ञकः । ऋतुस्तु द्विमासात्मकः । तत्र प्रथमो मासः आग्रहायणिकनामा ।

नटी—११. आग्रहायणिको नाम ?

सूत्रधारः—१२. हायनस्य अग्रे भवो हि आग्रहायणिकः । अत एव तस्य मार्गशीर्षः इति नामान्तरम् ।

नटी—१३. ज्ञातम् । उत्तमाङ्गमिव शरीरस्य संवत्सरस्यायं प्रधानो मासः । अतोऽस्य ऋतोः नामभाक् ।

---

७. सामाजिकानां पुष्टितुष्ट्योः कारणं पृच्छति ।

८. "स्मृतं कालविशेषणम्" इति श्रुत्या काल एव हि ऋतुप्रवर्तकः ।

९. कालतत्त्वावगमाय 'कथ'मिति प्रश्नः ।

१०. "द्वौ द्वौ माखादिमासौ स्यादृतु" इत्यमरः । तथाऽयं मार्गशीर्षपुष्यमासद्वयात्मको हेमन्तर्तुः । तयोर्मार्गशीर्षमासस्य 'आग्रहायणिक' इति प्रसिद्धिः ।

११. आग्रहायणिकशब्दनिर्वचनं ब्रूहीत्याकूतम्-प्रश्नार्थद्योतक 'किम्' शब्दाप्रयोगेऽपि "नामे" त्यव्ययसमभिव्याहारेण प्रश्नः द्योत्यते ।

१२. हायनस्य-संवत्सरस्य अग्रं प्रथमम् अग्रहायणः। रेफस्य योगात् नकारस्य णकारः। अग्रहायणमेव-आग्रहायणमिति निर्वचनम् । तद्रूपो मासः-आग्रहायणिकः। अथवा-अग्रे हायनम् अस्या इति आग्रहायणी, आग्रहायणी (पौर्णमासी) अस्मिन्नस्तीति आग्रहायणिको मास. । मार्गस्य-श्रौतकर्माचरणस्य शीर्षं प्राधानं प्रथममिति यावत् । मार्ग-सूर्यस्य गति-पन्थाः, तस्य शीर्षम् आरम्भकः । "मासानां मार्गशीर्षोऽस्मि" इति गीतावचनात्तस्य प्राधान्यम् ।

१३. सूत्रधारस्याभिप्राय नटी विवृणोति-अङ्गेषु उत्तमम्-उत्तमाङ्गम् । उत्तमं च तत् अङ्गं चेति वा । "सर्वस्य गात्रस्य शिरः प्रधानम्" इत्यादिना

सूत्रधारः—१४. यदि जानासि तत्प्रभावं तद्धेमन्तमधिकृत्य गीयतां यत्किञ्चिद्गीतं रसिकजनचित्ताह्लादनाय ।

नटी—१५. तथा (इति गायति)

"भज रे मानव हेमन्तम् । भज भज रे मानव हेमन्तम् ।
हेमन्तं बहुधीमन्तं भवभीमन्तं सुखसीमान्तम् ।
मासाद्यं नवधासाद्यं पशुहासाद्यं रविभासाद्यम् ।
धान्यादिं हितकन्यादिं हुतवन्यादिं हृतजन्यादिम् ।
खेलाप्तं वनमालाप्तं सुखलीलाप्तं जनशीलाप्तम् ॥२॥"

---

यथा शरीरस्य शीर्षं प्रधानं तथा संवत्सरशरीरात्मकसूर्यस्य मार्गशीर्षः ।

१४. हेमन्तप्रभावोद्भासि संगीतं त्वयाऽभ्यस्तं यदीत्यर्थः ।

१५. भज रे मानवेति ध्रुवपदस्थानीयं पल्लविनामकं वाक्यं न तु पद्यम् । हेमन्तं बहुधीमन्तमिति तु पद्यम् । तच्च गीतरूपेण गातुं साध्यम् । बहुप्रभावयुक्तं हेमन्तर्तुं भज-सेवस्व इति तस्य समुदायार्थः । भज-सेवाया-मिति धात्वर्थबोधकत्वात् । मानवेति सम्बोधनं स्त्रीपुरुषसाधारणम् । हेमन्त-शब्दोऽत्र प्रकृतार्थप्रयोजकः । हिमप्रधानो यः सः हेमन्तः । हिमप्रादुर्भा-वर्तुमित्यर्थः । "तुलायां जायते शीतं वृश्चिके तु विवर्धते । धनुष्के धनुराकारं मकरे मकरोपमम् । कुम्भे शीतमशीतं वा मीने शीतनिवारणम्" इति काल-विदां समाख्यानम् । हेमन्तमिति-हेमन्तं-हेमन्तर्तुम् । कथंभूतम् ? बहुधीमन्तम्-बहुविधा धीः अस्मिन् अस्तीति बहुधीमान्-तम् । मार्गशीर्षं हि प्राणिनां धीस्थानम् । हेमन्तःमार्गशीर्षपुरस्कः-अतस्तस्य धीमानिति संज्ञा युक्ता । मार्गशीर्षपुष्यमासयोः कृषीवलाः धान्यसंस्कारसङ्ग्रहादिकार्येषु स्वस्वबुद्धिं विनियुञ्जते, वणिजः वाणिज्यकार्ये निसर्गेण स्वस्वबुद्धिं प्रसारयन्ति । राजानः समरसंरम्भे वा देशाभिवृद्धिसमीक्षणकार्ये वा बुद्धियुक्ता भवन्ति । कर्मठाः ब्राह्मणाः आग्रहायणेष्ट्यादिलोकोपकारककर्मसु स्वस्वबुद्धिं प्रेरयन्ति । नियतकार्यविश्रान्तिलाभात् सर्वे जनाः तत्र तत्र मिलन्ति ।

विविधविषयेषु चर्चां कुर्वन्ति । एतत्सर्वं बुद्धिसाध्यम् । तत्कालोचितकार्यस्य तात्कालिकबुद्धिरपेक्षणीयेति हेमन्ते बहुबुद्ध्यारोपः । भवभीमं तम् इति पदच्छेदः । शीतवातास्पदत्वात् संसारे केवलसुखापेक्षिणां किञ्चिद्भयदायकम् । अथवा भवस्य-संसारदुःखस्य-पापस्य वा भीमं निवारकम् । हेमन्ते किल धनधान्यादिसमृद्ध्या संसारदुःखं प्रशाम्यति । यज्ञयागादिकर्मव्यापृत्या पापं च नश्यतीत्यर्थः । सुखस्य सीमा-परा काष्ठा । तया अन्तं मनोहरम् । जनानामतिसुखदायकमिति यावत् । मासाद्यम्-आग्रहायणिकत्वात् । घासाद्यम्-प्रभूतबालतृणसस्यतृणादीनां समृद्धिमत्वात् । अत एव पशूनांगवादीनां हासस्य-तोषस्य आद्यं मूलभूतम् । रविभासाद्यं रवेः शिशिरवसन्तग्रीष्मकालः-आदानकालः भूमिस्थद्रवमादातुं शोषयितुं योग्यः कालः-तम् । तथा वर्षशरद्धेमन्तर्तुकालः विसर्गकालः - वृष्टिविसर्जनकालः इति ऋतुतत्वमालोच्य रविमरीचिप्रसारणं हेमन्ते अत्यल्पमिति-अत एव तत्प्रसारणायायमारम्भकाल इति सूचितम् । धान्यादिं-धान्याद्यं व्याख्यातम् । हिताः कन्यादयः यस्मै सः हितकन्यादिः-तम् । अत्र 'कन्या'शब्दः प्रासार्थमादृत इति भाव्यते । वध्वादय इत्यर्थः । "हसन्तीं च हसन्तीं च हसन्तीं वामलोचनाम् । हेमन्ते यैं न सेवन्ते ते नराः पुरुषाधमाः" इत्युक्त्यर्थोऽनुसन्धेयोऽत्र । हुतवन्यादिम् "उद्भिदा यजेत" इत्यादिश्रुतिमवलम्ब्य-हुताः- वनेभवाः-वन्याः ओषधयः यस्मिन् सः यज्ञार्थं पालाशाद्योषधिपदार्थाः ओषध्या सम्पन्नचरुपुरोडाशादयः हेमन्ते अग्नौ हूयन्त इति भावः । तदाहुः-"य आहिताग्निराग्रहायणेनाऽनिष्ट्वा नवान्नं प्राश्नीयात् तत्र प्रायश्चित्तिरिति । सोऽग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपेत् । गृहेषु नवधान्ये समागते सत्याग्रहायणेष्टिं कृत्वा पश्चाद्भोक्तव्य"मिति वचनात् । श्रिताः-आश्रिताः जन्यादयः युद्धादयः यस्मिन् तम् । समरयोग्यकालमित्यर्थः। खेलानां-समस्तक्रीडानां आप्तम्-अनुकूलं हेमन्ते विद्यार्थिनां राजकार्ये नियुक्तानाम्-अन्येषां कारणान्तरेण विश्रान्तिर्दीयते । वनानां माला-वनमाला तस्याः। आप्तं तद्युक्तमिति यावत् । सुखकराः-लीलाः-विहाराः तासाम् आप्तम्-आश्रयभूतम् । जनानां शीलानि-

सूत्रधारः—१६. अयि प्रिये !

तव गीतं श्रुतिनीतं पीतं पीयूषवत्सभास्तारैः ।
परमेते न रमन्ते वरमभिनयवस्तुदर्शनं हित्वा ॥३॥

तस्मात् श्री वेङ्कटरमणार्येण नूतनतया विरचितम् आयुर्वेदवस्तु-विराजितं "जीवसञ्जीविनी"नामनाटकम् अभिनीय सामाजिकानां मनोरञ्जनमञ्जसा सम्पादयावः ।

( नेपथ्ये )

विजयतां विजयतां परेशो जगदीशः ।
विजयतां विजयतां महामाया जगज्जननी ॥

---

वृत्तानि-तेषाम्-आसम्-अभ्युदयकरम् । अस्मिन् काले जनाः प्रायेण साधुशीला भवन्तीति तात्पर्यम् । अत्र नाटकस्य प्रयोजनं त्रिवर्गरूपं फलं सूचितम् । इदं छन्दोबद्धं पद्यमपि ध्रुवपदसङ्गत्या गीतवद्गीयते । इदं पद्यं धृत्यां (छन्दसि) अष्टादशाक्षरच्छन्दोजातेषु-२६२१४४ वृत्तेषु २९३६९ तम "चतुरुत्प्लव" वृत्तबद्धमिति ज्ञायते । तल्लक्षणम्-"म्सौ त्यौ म्मौ गुणबाणाभ्यामथ बाणाभ्यां चतुरुत्प्लवः" इति । विशेषविज्ञानार्थं अनेन कविना विरचिते "सर्वसमवृत्त-प्रभावा"ख्ये ग्रंथे चतुर्थोऽनुबन्धः द्रष्टव्यः । एवमेव पुरः प्रयुज्यमानानाम् अप्रसिद्धवृत्तानां विषयेष्वपि ॥२॥

तवेति-गीतं नीतं पीतमिति छेकानुप्रासः । गीतस्य पानयोग्यत्वं कथमित्याशंक्य-श्रुतिनीतमित्युक्तम् । श्रुत्या-श्रवणेन पानं तु-श्रवणमेव-समादरेण श्रुतमिति तात्पर्यम् । कथं पीतम् ? पीयूषवत्-अमृतवत्-अमृतपानमिवाऽऽनन्दजनकमित्यर्थः । कैः ? सभास्तारैः- सामाजिकैः । परं किंतु वरं श्रेष्ठम् अभिनयवस्तु - अभिनययोग्यं वस्तु अभिनेयवस्त्वित्यर्थः। वस्तुदर्शनं वस्तु-बोधकनाट्यदर्शनं वस्तु-कथाशरीरम् । हित्वा-तादृशनाटकदर्शनं विना एते न रमन्ते-सामाजिकाः तुष्टिं न प्राप्नुवन्ति । तस्मादयं प्रदर्शनीय इति भावः ।

सूत्रधारः—१७. (आकर्ण्य) अयि प्रिये ! किं श्रुतम् ? परेशः महामायया सह रङ्गस्थलमिदानीमेवायातीति । तदावामपि यथोचितपात्रनिर्वहणाय सत्वरं सज्जीभवावः ।

नटी—१८. तथैव । (इति उभौ निष्क्रान्तौ)

॥ इति प्रस्तावना ॥

---

इदं वृत्तं गीतिनिबद्धम्-तल्लक्षणम्-"आर्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयो. । दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः"। इति ॥३॥

१७-१८. परेशवेषः कश्चिन्नटः- महामायावेषधारिणी काचिन्नटी अभिनयार्थं रङ्गस्थलं प्रविशतः । तस्मात्तयोर्नटीसूत्रधारयोरावश्यकपात्रस्वीकाराय निष्क्रमणमुचितमिति सूचयति सूत्रधारः ।

# ॥ द्वितीयदृश्यम् ॥

ब्रह्मलोके परेशप्रासादः-

(ततः प्रविशति सह महामायया ससखिपरिवारः परेशः)

(मञ्जुलाङ्गी मञ्जुभाषिणीति द्वे बालिके स्वागतमाशंसतः)

उभे-१.

स्वागतं देव ते स्वागतं देवि ते स्वागतं वां प्रियं स्वागतं प्रार्थ्यते ।
जन्मिनां पुण्यतो दर्शनं वां भवेत्कर्मिणां धन्यता स्वागतेनैव वाम् ॥४॥

परेशः—२. भोः सखे सत्यप्रिय ! अस्ति किं किञ्चिदावेदनीयम् ?

---

द्वितीयदृश्यव्याख्या ।

१. उभे एवं स्तुवीतः

सुष्ठु-सुखेन आगतम्-आगमनम्-स्वागतम् । स्वागतमिति-हे देव ते स्वागतम्-भोःपरेश तुभ्यं सुखागमनं भवतु । हे देवि ते स्वागतम्-भो महामाये तुभ्यं सुखागमनमस्तु । वां युवाभ्यां प्रियं स्वागतम्-सुखागमनं प्रियकरं भवतु । स्वागतं प्रार्थ्यते-सुखागमनमेवाशास्यतेऽस्माभिः । जन्मिनां पुण्यतः-प्राणिनां स्वकृतसुकृतविशेषेण वां दर्शनं भवेत् - युवयोस्सन्दर्शनं जायेत कर्मिणां धन्यता-लोकव्यवहारपराणां पुरुषार्थः वां स्वागतेनैव - युवयोस्सुखागमनेनैव भवति । इदं स्रग्विणीवृत्तनिबद्धम् । तल्लक्षणम् । "रैश्चतुर्भिर्युता स्रग्विणी सम्मता"-इति ॥४॥

२. सत्ये प्रियं यस्य अथवा सत्यमेव प्रियं यस्य स सत्यप्रियः-परेशस्य सखा । अस्ति किञ्चिदावेदनीयमिति मुखसन्धौ बीजोपन्यासस्य सूचना ।

सत्यप्रियः—३. भोःपरेश ! न तावदविदितं किञ्चित्तव सर्वज्ञमूर्तेः ।

परेशः—४. तथापि त्वयाऽऽवेदितमेवाङ्गीकारमर्हति। अन्यथा उदासीनोऽहं खलु ?

सत्यप्रियः—तर्हि श्रूयताम्—

सूर्योऽयं तव नेत्रभूतयशसा लोकेष्वहो भासते
　मायेयं तव शक्तिरस्य महिषी संज्ञाभिधानापरा ।
तेजोंऽशो युवयोर्विलासयुतयोर्जीवाभिधानस्तयोः
　संजातो धरणीतले विजयते सूर्यान्वये क्षत्रियः ॥५॥

---

३. यतः परेशः सर्वज्ञः, परमात्मनः सगुणरूपत्वात्-तत्तस्य सर्वं विदितं भवतीत्यभिप्रायः। "यस्सर्वज्ञः स सर्वविदि"ति श्रुत्यर्थोऽपि संसूचितः।

४. परेशः स्वतः उदासीनः प्रकृतिसन्निधानवशात् कर्तेव मन्यते-तस्य सर्वशक्तिमत्वात् । तदा सर्वेषां निग्रहानुग्रहं च करोतीति भावः ।

वक्तव्यं कथयति—

सूर्योऽयमिति-अयं सूर्यः-प्रत्यक्षतो दृश्यमानः तेजोराशिः सूर्यः तव-परेशस्य नेत्रभूतः-"चक्षोस्सूर्यो अजायत" इति श्रुत्या चक्षुस्थानीयः इति यद्यशः महिमा तेन-तन्महिम्नैव तस्य भासकत्वम्-"न तत्र सूर्यो भाति........तस्य भासा सर्वमिदं विभाति" इति श्रुतिरेवात्र प्रमाणम् । लोकेषु-जगत्सु भासते-सर्वप्रकाशको भवति । तव नेत्रभूतसूर्यस्यैव एवं महिमा, तव महिमा तु अनिर्वाच्यः इत्याशयं सूचयति 'अहो' इति निपात ः। माया प्रकृतिः-अव्यक्तम्-पराशक्तिः- विद्याशक्तिरित्यादि नामभिर्विदिता शक्तिः । परमात्मनोऽभिन्नेति केचित् । एकैव शक्तिः- इच्छाशक्ति-ज्ञानशक्ति क्रियाशक्तिरूपेण चैतन्य-सान्निध्यबलात् जगद्व्यापारं निर्वर्तयतीत्यन्ये । सैव सरस्वतीरूपा देवतेति परे। लक्ष्मीरित्यपरे । महेश्वरीत्यवरे । इयमिति महामायां प्रति अङ्गुल्या निर्देशः। यदा परेशलीलाविभूतिरेव सूर्यरूपेणाविर्भूता तदा तन्निष्ठमायारूपतेजःशक्तिरेव

महामाया—५. भो महेश ! सूर्यस्य त्वं पिता अहं मातेति सूचितं ननु । तव माता का ?

परेशः—६. त्वम् । तव पिता कः ?

---

संज्ञेत्यभिधानेनाविर्भूता । अविनाभावसम्बन्धात् पतिपत्नीभाव । स च परेशमहामायाविलासार्थमेव । अत एव "लोकवत्तु लीलाकैवल्य"मिति ब्रह्मसूत्रेषु निर्देश.। एवं विलासयुतयोः युवयोः तेजोंशः-तेजोभागः जीवाभिधानः जीवदेव इति। "स ईक्षांचक्रे बहु स्यां प्रजायेय" इत्यादिश्रुतिवचनबलात् मायोपाधिक-चैतन्यमेव-अविद्योपाधिक चेत् जीवसंज्ञां लभते । मायैव-अविद्या अविद्यैव माया इत्यङ्गीकारेऽपि, मायोपाधिक. स्वतन्त्रः वशीकृतमायः ईश्वरः, अविद्योपाधिकस्तु अस्वतन्त्र. मायावशः जीवः इत्येतावतैव भेदोप्यङ्गीक्रियते। तयोस्संज्ञासूर्ययोस्सकाशात् अंशरूपेण धरणीतले-भूम्याम्-(धरणीतलविवरणम् उत्तरत्र प्रतिपाद्यते) सूर्यान्वये-सूर्यवंशे इति यावत्। क्षत्रियस्संजातः-क्षत्रियरूपेण जात.। यद्यपि जीवस्य क्षत्रियादिवर्णभेदो न सम्पद्यते तथापि व्यवहारार्थं जीवाधिष्ठित-शरीराणां वर्णव्यवस्थामनुसृत्य क्षत्रिय इत्युक्तम् । क्षत्रियराजानां कुले जात इति तात्पर्यम्। अनेन "सूर्य आत्मा जगतस्तस्थुषश्च" इत्यादिश्रुत्या सर्वभूतानां चैतन्यशक्तिस्सूर्यद्वारा प्रसरतीति सूचितमिति स्फुटात्र बीजव्यक्तिः अर्थ-प्रकृतिरूपा-कथाशरीरकारणं वा भवति । अत्र महाकुलीनत्वं नाम उदात्त-नायकगुणवर्णनं स्पष्टम् । तल्लक्षणम्-"महाकुलीनता नाम कुले महति संभवः" इति । इदं पद्यं शार्दूलविक्रीडितवृत्तनिबद्धम्। तल्लक्षणम्-"सूर्याश्वैर्मसजास्ततास्सगुरवः शार्दूलविक्रीडितम्" इति ।

५. परेशस्य चैतन्यांशः सूर्ये प्रसरतीति परेशः सूर्यस्य पिता-सूर्योऽपि पाञ्चभौतिकसारः । पञ्चमहाभूतानि प्रकृतिजन्यानि । अहं प्रकृति-रूपिणी । अतस्सूर्यस्याहं माता । इदं युज्यते परन्तु तव माता का ? इति परिहासोक्तिः हास्यरसस्य स्थायित्वसम्पादिका ।

६. 'त्वम्' इति परिहासोऽपि हास्यरसस्य स्थायी भवति । तव पिता क इति प्रतिप्रश्नः विनोदार्थम् ।

महामाया–७. त्वम् ।

परेशः–८ कथम् ?

महामाया—९. त्वदुक्तं कथम् ।

परेशः–१०. अजोऽप्यहं मायाभूतत्वदुपाधिनैव परेशो जातः। निर्गुणोऽपि त्रिगुणात्मिकायास्तव संसर्गादहं सगुणः- नीरूपोऽपि सरूपः। अतस्त्वं मे माता ।

महामाया–११. त्वमपि शृणु । यदा त्वं सद्रूपमेकमपि "बहु स्याम्" इति सङ्कल्पितवान् तदैव तवेच्छाशक्तिरूपेण, यदा त्वं तपोऽतप्यस्तदा ज्ञानशक्तिरूपेण, यदा त्वं तदिदमसृजः तदा क्रियाशक्तिरूपेण मम सृष्टिरभूत् । अतः त्वं मम पिता ।

---

७. त्वमित्युत्तरं पूर्ववत् हास्यरसपोषकम् ।

८. कथमिति तत्वनिर्धारणाय प्रश्नः ।

९. त्वदुक्तं कथमिति प्रथमं परेशमुखात्तत्वावगमाय प्रतिप्रश्नः ।

१०. त्वं माया-त्वदुपाधिनाऽहं रूपवान् गुणवानिव जातः, अतस्त्वं मातेति ईश्वरस्य सगुणस्वरूपतत्वं बोधयति ।

११. सृष्टेः पूर्वं त्वं सदेवासीः । तदा मम जन्मैव नाऽऽसीत् । तव सङ्कल्पाज्जगदजायत । अहं तव मूलप्रकृतिरूपेण जगदुपादानार्थमुद्भूता । यदा जगन्नास्ति तदाऽहमपि नाऽस्मि । तदा त्वमेक एव । त्वत्सङ्कल्पाज्जातत्वात् मम त्वं पिता । इति तत्वबोधः ।

अत्र मूलप्रकृतिरित्युक्ता या सैव मूलाविद्येत्युच्यते । तस्याः ब्रह्मज्ञानेनैव बाधः न त्वन्यथा । व्यवहारदशायां सा अस्त्येव तदात्मिका एव जाग्रत्स्वप्नसुषुप्त्यवस्थाः- तदभिमानिविश्वतैजसप्राज्ञभेदावस्थाश्च । सुषुप्तिरपि अविद्यात्मिका । तदभिमानिप्राज्ञोपि अविद्यात्मकः । अत

परेशः—१२. अस्तु तावदयं परिहासप्रसङ्गः। जीवदेवस्य विचारमवबुध्यावहै। भोः सत्यप्रिय! कथय कथितव्यम्।

सत्यप्रियः-१३. सोऽयं जीवदेवोऽद्य प्रथमाश्रमे स्थितः सर्वज्ञगुरोरन्ते अन्तेवासी भवति। तस्य प्रतिभा अन्यादृशीति श्रूयते।

महामाया-१४. भो आर्य! भूम्यां जीवदेवस्य जन्म कथमिति श्रोतुमिच्छामि।

परेशः-१५. अहमपि शुश्रूषुः। सविस्तरं कथय।

सत्यप्रियः-१६ श्रूयतां सावधानम्। अस्ति खल्वार्यावर्ते मार्ताण्डदेशे तेजोवती नाम नगरम्।

---

एव न किंचिदवदिषमितित्यज्ञत्वप्रकटनम्। अत एव प्रकृष्टः अज्ञः प्राज्ञ इति व्युत्पत्तिः। एतद्दशायां कथं केन मूलाविद्या निरस्ता भवेत्। भवेन्नाम तथा असंप्रज्ञातसमाधौ ब्रह्मज्ञानदार्ढ्येन। अतः तादृश्येव सुषुप्तिरिति प्रत्ययः न प्रमाजनित इति वेदान्तरहस्यमत्रानुसन्धेयम्।

१२. जीवदेवस्य वृत्तान्तकथनाय सत्यप्रियं चोदयति।

१३. प्रथमाश्रमः- ब्रह्मचर्याश्रमः- तस्मिन्-ज्ञानविज्ञानावगमक्षमे इति यावत्। ज्ञानं ब्रह्मज्ञानम्, विज्ञानं भौतिकादितत्वज्ञानं शिल्पादिकलाविज्ञानं वा। उभयमपि जीवदेवः सर्वज्ञगुरोस्समीपे ब्रह्मचर्यवृत्याऽधिगच्छति। तस्य प्रतिभाशक्तिरसदृशीति जनाः वदन्ति। प्रतिभा-नवनवोन्मेषिणी शेमुषी। तस्य प्रतिभा अन्यादृशीति श्रूयते इत्यनेन आरम्भरूपावस्था द्योतिता। तल्लक्षणम्-'औत्सुक्यमात्रमारम्भः फललाभाय भूयसे' इति। बीजं पूर्वमेव दर्शितम्। अतः आरम्भबीजसम्बन्धो मुखसन्धिरत्र प्रस्फुटः।

१४. संज्ञासूर्ययोरंशः कथं जीवरूपेण जातः ?-कथय।

१५. देशकुलाद्यभिधानपूर्वकं विशद कथय। अहमपि श्रोतुमिच्छामि।

१६. आर्यावर्तपदेन समग्रो भरतखण्डो ग्राह्यः। ननु "आर्यावर्तः

महामाया–१७. ततः ।

सत्यप्रियः–१८. तामधिवसति सूर्यवंशप्रदीपः प्रद्योतनामा राजा येनेयं वसुमती राजन्वती कृता । तस्य धर्मपत्नी प्रभावती सूर्यप्रभेव राज्यलक्ष्मीरिव महिषीपदमलङ्करोति । कदाचित्तौ दम्पती अपत्यार्थं संज्ञासमेतं सूर्यदेवं तपसा तुष्टुवतुः । स भगवान् तयोः प्रसन्नः स्वतेजोंश एव तदपत्यं भवतीति अनुजग्राह । ततो युक्तसमये जीवदेवो जातः संवर्धितश्च । स पञ्चमे वर्षे कृतोपनयनः वेदशास्त्राण्यभ्यस्यन्नास्ते ।

परेशः–१९. अयि महामाये ! किं जानासि मम प्रभावं जीवदेवे ?

---

पुण्यभूमिर्मध्य विंध्यहिमागयो." इति प्राचीनैर्निर्दिष्टः विन्ध्यस्योत्तरभूभाग एव । अतः–"प्राक्प्रत्यक्सागरान्तस्थो हिमसेतुकृतान्तरः । आर्यावर्त इति ज्ञेयः कालतो देशतो महान्" इत्यार्यावर्तस्य निर्देशोऽत्र क्रियते । मार्ताण्डदेश इति कल्पितनाम । तथान्यानि सूर्यस्योत्कर्षप्रदर्शनार्थं तदर्थपराणि नामान्यत्र कल्पितानि । अथवा भवतु नाम पूर्वस्यां दिशि वर्तमानस्य देशविशेषस्य नाम । तत्र उष्णाधिक्यवशात् तस्य नाम "मार्ताण्ड" इति पर्यायेणोक्तम् ।

१७. 'तत' इति कथाश्रवणे कुतूहलं व्यज्यते ।

१८. "अधिशीङ्स्थासां कर्म" इत्यनेन तामिति सप्तम्यर्थे द्वितीया । यस्यां वसुमत्यां राजा सम्यक् प्रजाः परिपालयति सा राजन्वती । सूर्यस्य सूर्यप्रभेव, राज्ञः राजलक्ष्मीरिव तस्यानुवर्तिनी बभूवेति तात्पर्यम् । महिषीपदं राज्ञीपदम् । युक्तसमये गर्भोदयाद्दशमे मासि । संवर्धितः–मातापितृभ्यां पोषितः । प्रभावशालिनां ब्राह्मणकुमाराणां यथा, तथा तादृशानां क्षत्रियकुमाराणामपि पञ्चमे वर्षे उपनयन विहितमेव ।

१९. मम अनुग्रहादेव जीवदेवे विद्यासम्पत्तिरित्यभिप्रायः । इदम् उपक्षेपो नाम मुखसन्धेरङ्गम्–'बीजन्यास उपक्षेपः' इति वचनात् ।

महामाया–२०. स्वामिन् ! जानामि । तस्मिन् मम प्रभावमपि द्रक्ष्यसि ।

परेशः–२१. तव प्रभावमपि ? । (स्वगतम्) कोऽयं भवेदस्याः प्रभावः जीवदेवे ? (किञ्चिद्ध्यात्वा) (प्रकाशम्) ज्ञातम् । त्वमेतं महारोगैः पीडयितुमिच्छसि ।

महामाया–२२. तथा ।

परेशः–२३. तथाऽपि तस्मिन् सकरुणा भव ।

महामाया–२४. तथा भवामि तदा, यदाऽहं तव सुता भवामि ।

परेशः–२५. तर्हि मदंशभूतस्सोमः त्वदंशभूतायाम् ओषधीदेव्यां त्वदिच्छां सम्पादयत्वित्यनुग्रहं करोमि ।

महामाया–२६. कृतज्ञाऽस्मि । तदाऽहं तस्य कल्याणमेव करिष्ये ।

---

२०. कालान्तरे-महामायामहिमाप्यस्मिन् दृश्यत इत्यर्थः ।

२१. परेशः तदुक्त्या विस्मितः किञ्चिदालोच्य सा तं रोगैः पीडयतीति ज्ञातवान् ।

२२. परेशेन यज्ज्ञातं तदेवानुमोदते महामाया ।

२३. रोगपरिहारोपायं चिन्तयेत्यभिप्रायः। अनेन चतुर्थाङ्क तृतीयदृश्यकथावस्तु सूचितम् ।

२४. भूम्यां त्वदंशभूतस्य कस्यचिद्राज्ञः पुत्रीरूपेण यदा जनिष्ये इत्यभिप्रायः ।

२५. स्वांशभूतसोमदेवानुग्रहेण भूम्यां सञ्जीविनी जायतामिति सञ्जीविनीप्रादुर्भावस्य बीजमप्यत्रोपक्षिप्तम् ।

२६. तदा सञ्जीविनीहस्तस्पर्शद्वारा तस्य रोगान् परिहराभीति जीवदेवे अनुग्रहश्च सूचितः । अनेन विमर्शसन्धेर्बीजमत्रोपन्यस्तम् ।

परेशः—२७. भवतु तावत्, इदानीं जीवदेवस्य अन्यादृशीं प्रज्ञां भूलोके स्वयं द्रष्टुमिच्छामि ।

मयामाया—२८. ममापि सैव स्पृहा । तथैव करवाव ।

२९. (इति सर्वे निष्क्रान्ताः)

---

२७. सर्वज्ञगुरोराश्रमे जीवदेवस्यानुग्रहार्थं गच्छामि ।

२८. अहमपि त्वामनुयामीत्याशयः ।

२९. सत्यप्रियादिपरिवाराणां च निर्गमनसूचनायाऽत्र बहुवचनप्रयोगः ।

इति द्वितीयदृश्यव्याख्या

# ॥ तृतीयदृश्यम् ॥

भूलोके सर्वज्ञगुरोराश्रमः

तत्र वटूनां विद्याभ्यासः प्रचलति ।

( ततः प्रविशतः वृद्धस्त्रीपुंसरूपेण महामायापरेशौ )

जीवदेवः—*(सन्निकृष्टे तौ प्रत्युद्गम्य अभिवाद्य साष्टाङ्ग-नमस्कारपूर्वकं प्रस्तुत्य स्वागतमाशसति)

(†सविमर्शं तयोः रूपसौन्दर्यमवलोक्य-स्वगतम् ) किं मानुषावेतौ वृद्धौ? नेति शंसति मे हृदयम् । किं कौचिद्वेषधारिणौ देवविशेषौ भवेताम् ? । नेति निश्चिनोति । परपुरुषावेवेति भावयति मे मनः । (प्रकाशम् )

हे देव !

वारं वारं विभवकलितं रम्यसौम्यस्वरूपं
सारं सारं मुनिजनहितं दिव्यतेजःप्रभावम् ।

---

तृतीयदृश्यव्याख्या

*अध्ययनशालासमीपे । पुरः अभिमुखं किञ्चिद्दूरं गत्वा आगतानां समीपगमनव्यापारः-प्रत्युद्गमः। अभिवाद्य-प्रवरपुरस्सरमित्यर्थः । नमस्कारस्य अष्टाङ्गानि- 'उरसा शिरसा दृष्ट्या वचसा मनसा तथा । पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टाङ्ग उच्यते' इति ।

"†मनुष्यौ" इति न प्रतिपद्यते मे मनः इत्यभिप्रायेण एतादृशरूपलावण्यं मनुष्येषु न कथञ्चित्सम्भवतीति हेतुस्सूचितः । "यादृशी भावना यत्र सिद्धिर्भवति तादृशी"-इति जीवदेवस्य आदावेव परमात्मतत्वनिश्चयेन सर्वदुःखनिवारणपूर्वकं जीवन्मुक्तिर्भविष्यतीति पञ्चमाङ्ककथावस्तुनो निर्वहणसन्धेर्बीजमप्यत्र सूचितम् ।

ध्यायं ध्यायं जितमनसि तत्स्वात्मनि स्वात्मभावात्
पायं पायं सुखदममृतं जन्म मे सार्थकं स्यात् ॥६॥

उभौ-१. सुखी भव ! सुखी भव !!

---

वारं वारमिति-वारं वारं मुहुर्मुहु -विभवकलित त्रिभुत्वद्योतकम्, रम्य रमणीयम् , सौम्यम् आह्लादजनक स्वरूप चेति कर्मवाग्यः । मुनिजनेभ्यो हित योगिनां प्रियम् । तेजसः प्रभावः-कर्तुमकर्तुमन्यथाकर्तु च सामर्थ्यम्-दिव्यः दिवि भवः प्रभावः यस्य तदिति-रम्यसौम्यस्वरूपपदस्य विशेषणम्, तादृशं स्वरूपं स्मारं स्मारं-स्मृत्वा-स्मृत्वा-आदरार्थे द्विर्भावः । एवमन्यत्रापि । स्मृतेरधिकरणं मनः मनसि स्मृत्वा स्मृत्वा, अनन्तरं स्वरूपसन्निधाने सति तत्रैव ध्यायं ध्यायं तादृशरूपं ध्यात्वा ध्यात्वा, कुत्र ? स्वात्मनि-स्वहृदये, कथम् ? स्वात्मभावात् तद्रूपमेव-तेजोरूपमेव स्वस्यापि-उपाधिभूतजीवस्यापि, आत्मा-निरुपाधिकः नीरूप इति भावात्-भावनया, जितमनसि-मनसि लयं गते सति । अनेन ध्यानबलफलं संसूचितम् । तदा चित्तैकाग्र्ये किं भवति ? सुखदममृतम्-आनन्दरूपं मोक्षं मोक्षरूपम् आनन्दमिति च तात्पर्यम् । पायं पायम्-अमृत-रसास्वादनं कृत्वा-नित्यसुखमनुभूयेति यावत् । यदा ज्ञानस्थितिरेवं स्यात्तदैव जन्मसार्थक्यमिति द्योतनार्थं-मम यद्यत् जन्म तत्सर्वं सार्थक-सफलं स्यात्-भवेदित्याशंसा । अयमर्थो जीवन्मुक्तपरः । अन्यथा ब्रह्मज्ञानाग्निना आविद्यकजन्ममरणप्रवाहशोषणे सति-नित्यसुखरूपा मोक्षप्राप्तिरिति विदेह-मुक्तपरोऽर्थः सम्पतेत् । अतः "जन्म जन्मान्तरेऽपि त्वत्पादाम्भोरुहयुग-भवा निश्चला भक्तिरस्तु" इति कुलशेखरगुरुवचनमत्रानुसन्धेयम् । अत्र वारं वारमित्यादि चतुर्षु पर्यायेषु 'आभीक्ष्ण्ये णमुल्' इति सूत्रेण पौनःपुन्येन णमुल्वशात् प्रयोगः । इदं पद्यं मन्दाक्रान्तावृत्तनिबद्धम् । तल्लक्षणम्-"मन्दाक्रान्ता जलधिषडगैम्भौं नतौ तो गुरू चेत्" इति ॥६॥

१. आदरादाशिषो द्विरुक्तिः ।

जीवदेवः—

वाणीश्वराभ्यां वरदायकाभ्यां लक्ष्मीश्वराभ्यां लघुतारकाभ्याम् ।
गौरीश्वराभ्यां गुरुभूतिदाभ्यां भूयो नमो वां परदम्पतिभ्याम् ॥७॥

उभौ—२. दीर्घायुरस्तु, कल्याणमस्तु ।

जीवदेवः—

स्वागतं वां कलये सुस्वागतं वामागतौ वां भजते सन्मानसं मे ।
तां गतिं वां श्रयते तद्यापराऽऽस्ते स्वागताद्वां जननं यन्मे परास्ते॥८॥

---

वाणीश्वराभ्यामिति—वाणी च ईश्वरश्च वाणीश्वरौ - सरस्वतीब्रह्माणौ वरदायकौ-स्वेष्टप्रदौ तद्रूपाभ्यां परदम्पतिभ्यां श्रेष्ठतमपतिपत्नीभावमङ्गीकृतवद्भ्यां वां युवाभ्यां भूयो नमः- वां भूयो भूयो नमस्करोमीत्यर्थः। परत्राप्येवमेवान्वयः । लक्ष्मीश्वरौ-लक्ष्मीनारायणौ लघु - क्षिप्रं सुखेनेति यावत् । तारकौ-भवाम्बुधितारणे समर्थौ । तथा गौरीश्वरौ-गुरुं गुर्वीं भूतिं दत्त इति गुरुभूतिदौ सर्वसम्पत्प्रदौ इत्येव विशेषः। अत्र प्रत्येकनमस्कारप्रतिपादकान्वयोऽप्यपेक्षणीयश्चेत्स सुसाधः। त्रिमूर्त्यात्मकौ जगत्कारणभूतौ यौ ताभ्याम्-प्रकृते वृद्धवेषयुतदम्पतिभ्याम् एकत्वभावनया कायिकसेवारूपं नमस्कारं करोमीति तात्पर्यार्थः। इदं पद्यं इन्द्रवज्रावृत्तनिवद्धम्। तल्लक्षणम्-"स्यादिन्द्रवज्रा ततजास्ततो गौ" इति ।

२. अनयाऽऽशिषा चिरंजीवित्वं कल्याणप्राप्तिश्च आशंसिते ।

स्वागतमिति - वां युवाभ्यां स्वागतं सुखागमनं कलये - कांक्षामि । अयमेवार्थः आदरातिशयद्योतनार्थं वां सुस्वागतमिति द्विरुदितः । सुस्वागतमित्यत्र-"सु" इत्यनेन समीचीनं स्वागतमिति-मम पुण्येनैव दुःखपरिहारार्थं मत्सुखसम्पादनार्थं युवयोरागमनमिति तात्पर्यार्थद्योतनबलात् सत्यप्यर्थभेदे गानसौकर्याय ध्रुवपदमिव योजितमिति ज्ञायताम्। मे मम सन्मानसं सत्वोत्कर्षसहितं मनः अत्रागतौ वां युवां भजते-प्रपद्यते । अथवा भजते-सेवते-इत्यर्थः उभयथान्वये "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते" इत्यादि गीता-

उभौ–३. भो जीवदेव, आवां भृशं सन्तुष्टौ । त्वं जीवन्मुक्तो भव ।

जीवदेवः–३. (a) अनुगृहीतोऽस्मि ।

परेशः—४. अयि कुमार, किमभ्यस्तमत्र भवता ?

जीवदेवः–५. शृणोतु परेशः। चतुर्वेदेषु षड्दर्शनेषु इतिहासपुराणकाव्यादिषु मेऽध्ययनमासीदिति विज्ञापये ।

---

वचनमत्र शरणम् । या गतिः परा-परा काष्ठा आस्ते "सा काष्ठा सा परा गतिः" इति श्रुत्या वां युवयोस्संबंधिनीं तां गतिं तत् मम मानसं श्रयते परमपदत्वेन आश्रयते । यत् मे जननम् (अस्तीति शेषः) अनुभवविषयकं यदिति कुत्सितार्थद्योतकः शब्दः असारमिति तात्पर्यम् । तत्-वां युवयोः स्वागतात्-दर्शनादिति तात्पर्यम् । परास्ते-(दूरे तिष्ठतीति-न भवतीति) पराभूयते । पुनरुत्पत्तिरहितं यथा तथा नश्यतीत्यर्थः । अत्र वामिति प्रथमपादे चतुर्थी द्विवचने प्रयोगः । द्वितीयपादे द्वितीयाद्विवचने । तृतीयतुर्यपादयोः षष्ठीद्विवचने प्रयोगो भवति । इदं पद्यं गीतमिव भाति । विचारे छन्दोबद्धमेव । इदं द्वादशाक्षरात्मकजगतीछन्दोजातेषु ४०९६ वृत्तेषु ९६३ तमवृत्तमिति 'लगक्रिया' तत्वगणनया निर्धार्यते । सा तु अनेनैव कविना विरचिते सर्वसमवृत्तप्रभावाख्ये छन्दोग्रन्थे द्रष्टव्या । अस्य 'स्वागताभा' इति नाम च कल्प्यते । तल्लक्षणम्-"स्वागताभा रभमा योऽब्धित्रिबाणैः" इति ॥८॥

३. तत्कृतस्तोत्रेण तयोस्सन्तुष्टिः । तस्मै समुचिताशीःप्रदानं च । अनेन नायकस्य मुख्यप्रयोजनमभिहितम् ।

३. (a) तथानुग्रहाय कृतज्ञतां सूचयति ।

४. विद्यापरीक्षार्थमयं प्रश्नः ।

५. चतुर्वेदास्तु-ऋग्यजुस्सामाथर्वणाख्याः । षड्दर्शनानि तु-सांख्ययोगन्यायवैशेषिकमीमांसावेदान्ताख्यानि । इतिहासाः- रामायणभारतादयः। पुराणानि - अग्निमत्स्यादीनि अष्टादशसंख्याकानि । काव्यानि विविधानि ।

महामाया–६. सङ्गीतमप्यभ्यस्तम् ?

जीवदेवः—७. साङ्गोपाङ्गवेदाध्ययनेन तदप्यभ्यस्तमेव ।

परेशः–८. किं योगाभ्यासे परिश्रमोऽस्ति ?

जीवदेवः–९. मम गुरुः सर्वज्ञः खलु । तस्यानुग्रहेण सोऽपि संवृत्तप्रायः ।

परेशः –१०. तर्हि विप्रकृष्ट सूक्ष्म व्यवहितविषयान् ज्ञातुमलं भवसि ?

जीवदेवः–११. ज्योतिष्मतीसंयमेन सर्वं साध्यम् ।

---

यद्यपि-"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश" इति चतुर्दशविद्यानामेव अभ्यर्हितत्वम्, तथापि तास्सर्वाः अत्रोक्तविद्यास्वेवान्तर्भूताः । इद परिकराख्यं मुखसन्धेरङ्गम् । बीजस्य बहूकरणं परिकरः इति वचनात् ।

६. अनेन प्रश्नेन स्त्रीणां सङ्गीते विशेषाभिरुचिरिति ज्ञायते ।

७ साङ्गोपाङ्गशब्देन शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं कल्पश्चेति षडङ्गानि आयुर्वेदधनुर्वेदगान्धर्ववेदार्थशास्त्राख्याःचत्वार उपवेदाश्च सङ्गृहीताः ।

८. यद्यपि योगशास्त्रं षड्दर्शनान्तर्भूतं तथापि तत्र अभ्यासं प्रति प्रश्नः ।

९. 'संवृत्तप्रायः' इत्यनेन तत्र कश्चिद्भागः अनभ्यस्तः अवशिष्टश्च इति बुध्यते ।

१०. विप्रकृष्टाः-दूरस्थाः। सूक्ष्माः-अणोरपि सूक्ष्मतराः व्यवहिताः-आच्छादिताः- गुप्ता इति यावत् ।

११. पातञ्जलयोगशास्त्रे तृतीयाध्याये अनेके संयमाः प्रदर्शिताः। धारण-ध्यान-समाधिगम्यो हि प्रतिसंयमः । तेषु ज्योतिष्मतीसंयमेन दिव्यतेजोदर्शनात् विप्रकृष्टादि सर्वं प्रत्यक्षतः साक्षात्कारयोग्यं भवतीति प्रतिपादितम् ।

उभौ–१२. चिरंजीव । नित्यसुखी भव । (इत्युक्त्वा उभौ अन्तर्दधाते) (अध्यापकाः अध्येतारश्च सर्वे क्षण विस्मयमाना भवन्ति)

सर्वज्ञगुरुः–१३. कौ तौ दम्पती ?

शिष्याः–१४. वृद्धब्राह्मणाविव आस्ताम् ।

अध्यापकाः—१५. मा मैवम् । कथं नु सामान्यब्राह्मणानां अन्तर्धानशक्तिः ?

सर्वज्ञगुरुः—१६. जीवदेव, कस्तवाभिप्रायः ?

जीवदेवः—१७. तौ जगदीश्वराविति मे भावना ।

सर्वज्ञगुरुः—१८. कथम् ?

जीवदेवः—१९. मया हि यथा भावनं तथा वचनं यथा वचनं तथा कर्म कृतम् ।

---

१२. नित्यसुखशब्देन मोक्ष इति भाव्यते । इदं युक्तिर्नाम मुखसन्धेरङ्गं भवति-बीजानुकूलसंघटनप्रयोजनवचनतो युक्तिरिति वचनात् ।

१३. तयोः निजरूपनिर्धारणासमर्थतया अयं प्रश्न. ।

१४. अत्र 'इव' शब्देन संशयः द्योत्यते ।

१५. सामान्यब्राह्मणानां अन्तर्धानशक्त्यभावात् तौ दम्पती न सामान्यब्राह्मणाविति निश्चय. ।

१६. जीवदेवः तौ वृद्धब्राह्मणौ स्तुतिभिस्तुष्टाव । अतस्तयोस्स्वरूपं तस्य ज्ञातं भवेदिति भावयित्वा तदभिप्रायज्ञानायायं प्रश्न' ।

१७. 'मे भावनम्' इत्यनेन तस्य निश्चयज्ञानं सूच्यते ।

१८. तथा निश्चयस्यावबोधाय पुनः प्रश्नः ।

१९. यन्मनसा मनुते तद्वाचा वदति । यद्वाचा वदति तत्कर्मणा करोतीति श्रुत्यर्थो बोध्यः । इदं परिन्यासो नाम मुखसन्धेरङ्गम्-बीजनिष्पत्तिः परिन्यास इति वचनात् ।

सर्वज्ञगुरुः—२०. त्वमेव धन्यः । अत्रैव पारमेश्वरानुग्रहो जातस्ते । त्वं सर्वविद्यासम्पन्नोऽसि । इदानीं समावर्तनं कृत्वा स्नातको भव ।

जीवदेवः—२१. सद्गुरो, इदानीमहं सप्तदशवार्षिकः । वर्षत्रयमितो मिताऽऽहारो योगानुष्ठानपरो भवितुमिच्छामि । दयया मामनुगृहाण ।

सर्वज्ञगुरुः—२२. तथास्तु । तदनन्तरमेव गृहमेधी भव ।

स्वस्त्यस्तु जीव बहुपुण्यसमाप्तजन्मन्
स्वस्त्यस्तु तेऽद्य विशुद्दष्टसमाप्तजन्मन् ।
स्वस्त्यस्तु भावपरिशुद्धिसमाप्तजन्म
स्वस्त्यस्तु देवपदवीयुतमस्तु जन्म ॥९॥

---

२०. पारमेश्वरानुग्रहः-परमेश्वरकृतस्य अनुग्रहस्य त्वं पात्रमसि । अत एव त्वं धन्यः। समावर्तन नाम-विद्याभ्यासपरिसमाप्तिसम्बन्धि किञ्चिद्गृह्यकर्म सूच्यते । अनन्तरम् अवभृथ-स्नानं विद्यार्थिना क्रियते । न तदा स्नातको भवति । स्नातककर्म तु उत्तरत्र द्वितीयाङ्के चतुर्थदृश्ये विशदीक्रियते । इदं विलोभनं नाम मुखसन्धेरङ्गम्-बीजगुणवर्णनं विलोभनमिति वचनात् ।

२१. अस्य विद्यारम्भः पञ्चमवर्षे आसीत् । 'इदानीमयं सप्तदशवार्षिक'इत्यनेन द्वादशवर्षावधि विद्या अभ्यस्ता । तथापि योगानुष्ठानाय तत्रैव अधिकवर्षत्रयवासायायमनुज्ञां याचते गुरुम् ।

२२. तदनन्तरमेव-त्वयि वयसा विंशत्यधिकवार्षिके जाते सति गृहमेधी-गृहैः-दारैः मेधत इति गृहमेधी भव । दारशब्दोऽत्र "दाराः पुंसि च भूम्न्येव" इति निघण्टुबलात् पुल्लिङ्गबहुवचने प्रयुक्तः। तावन्मात्रेण नाऽऽशंकनीयमस्य परिग्रहबहुत्वम् । स्वस्त्यस्त्विति-हे जीव - जीवदेव, नामैकदेशग्रहणेन नामग्रहणम् । बहुपुण्यसमाप्तजन्मन्, बहुविधैः पुण्यकर्मभिः सम्यक् सम्पादितं जन्म यस्य-तस्य संबुद्धिः । ते-तुभ्यं स्वस्ति-

सर्वे—२३. तथास्तु ! तथास्तु !

( इति निष्क्रान्तास्सर्वे )

---

कल्याणम् अस्तु-भवतु-इत्याशीरर्थे लोट् । विभुदृष्टसमाप्तजन्मन् - विभुना परमात्मना दृष्टानि-वीक्षितानि समाप्तानि-निश्शेषाणि जन्मानि-जननानि यस्य-तस्य संबुद्धिः । भावपरिशुद्ध्या-शुद्धभावेनेति यावत् । समाप्तं लयं गतं जन्म यस्य सः त्वमसीति शेषः । अस्तु-भवत्विति सायुज्यप्रदेयमाशीः । देवपदवीयुतं परमात्मस्वरूपेण युतं समानरूपमिति यावत् । अस्तु-भवतु-इत्यनेन सारूप्यमुक्तिप्रदाशीस्सूचिता । अथवा - देवपदवीं मुक्तजीवदशां युतम्-प्राप्तम् अस्तु-भवत्विति सामीप्यमुक्तिप्रदा वा, देवपदव्यां देवस्य पदे-देवस्य स्थाने सत्यलोक-वैकुण्ठ कैलासादिमुक्तिस्थानेषु युतम्-स्थितम् अस्तु-भवत्विति सालोक्यमुक्तिप्रदावाशीस्सूचितेति तत्तदभिमतार्थोऽत्राभ्यूहनीयः । आशीर्लक्षणं तु - वात्सल्याद्यत्रमान्येनकनिष्ठस्याभिधीयते । इष्टावधारक वाक्यमाशीस्सा परिकीर्तितेति । इदं पद्यं वसन्ततिलकावृत्तनिबद्धम् । तल्लक्षणम्-"उक्ता वसन्ततिलका तभजा जगौगः" इति ।

२३. इमामाशंसां सर्वेऽनुमोदन्ते ।

॥ इति तृतीयदृश्यव्याख्या ॥

---

# ॥ चतुर्थदृश्यम् ॥

सत्यलोके ब्रह्मसभा

( वाण्या सह ब्रह्मा प्रविशति )

ब्रह्मा–१. हे वाणि, त्वमतीव प्रमोदस्थानं मे । यथा शृणु–

वाणीपाणिग्रहणमहिमा कारणं सृष्टिकार्ये
सृष्ट्वा सृष्ट्वा जगति विविधं भूतजातं सदाऽहम् ।
श्रान्तो श्रान्तो गतमतिबलो नातितुष्टोऽस्मि देवि
स्वान्तं मेऽतो विहरणपरं सांत्वनेन त्वयाऽऽस्ते ॥१०॥

वाणी–२. भो देव, त्वमपि मे तथा । शृणु—

साधुशीलं देवमाद्यं त्वामिहोद्वालोकमान्या ।
सेवितुं त्वां शुद्धभावात् बद्धभावाऽस्म्यन्तरङ्गे ॥११॥

---

चतुर्थदृश्यव्याख्या

१ त्वं मम प्राणप्रिया भवसि । निरन्तरं त्व हर्षप्रदेति भावार्थः । वाणीति-हे देवि, वाणीपाणिग्रहणमहिमा-तव पाणिग्रहणप्रभावः (मे) सृष्टिकार्ये-जगत्सृष्टिकर्मणि कारण हेतुः तव सान्निध्यमात्रेण समस्तवस्तुसर्जने मे बुद्धिः प्रभवतीति तात्पर्यम् । अहं जगति बहुविधं भूतजातं सृष्ट्वा सृष्ट्वा-बहूनि वस्तूनि सदा-अनवरतं सृजन् श्रान्तः आयासयुक्तः भवामि । भ्रान्तः-उत्तरसृष्टौ विकलबुद्धिर्भवामि । मम बुद्धेः इतोऽप्यधिकसृष्टौ न शक्तिरस्तीति भावः । अतः मे स्वान्तं ममान्तरङ्गं विहरणपरम्-विश्रान्तिपरं भवति । सा विश्रान्तिः त्वया कृतेनेति शेषः सान्त्वनेन आस्ते-त्वत्कृतसमाधानोक्तिभिस्सम्पादनीयेति विलासोक्तिः । इदं पद्यं मन्दाक्रान्तावृत्त-निबद्धम् ॥१०॥

२. त्वमपि मे तथा प्रमोदस्थानमिति भावः । साधुशीलमिति-साधु-समीचीनमेकपत्नीव्रतरूपं शीलं वृत्तं यस्य तम् । आद्यं देवं लोकेश्वरं त्वां

ब्रह्मा— ३. हे देवि ! कथय भुवने किं विचित्रं पश्यसि ?

वाणी—४. भोः परमेष्ठिन् तव सृष्टिवैचित्र्यं महदद्भुतं पश्यामि ।

ब्रह्मा—५. कथम् ?

वाणी–६. देव भूलोके सूर्यान्वये महान् क्षत्रियकुमारः सर्वविद्यासम्पन्नः भूत्यष्टकसिद्धः परतत्वज्ञानपरो भवति खलु । तस्यानुरूपा कन्या कुतो न सृष्टा ? कुत्र प्रादुर्भवेन्न जाने । इदमेव चित्रम् ।

---

इह इदानींतनस्थितौ रूढ्वा तव पाणिग्रहणेन कलिताऽहम् लोकमान्या लोके पूज्या भवामि । अतोऽहं त्वामेव शुद्धभावात्-परिशुद्धभावात्-पतिव्रताभावा-दिति यावत् । सेवितुम् अनपायिनी भूत्वा परिचरितुम् अन्तरङ्गे-हृदये, बद्धः-युक्तः भावः-स्नेहातिरेकः यस्याः सा बद्धभावा-त्वदेकायत्तचित्ता भवामीति पतिप्रशंसालोके शुद्धभावयोर्दम्पत्योस्सहजस्सुखानुभवः । इदं पद्यम्-अनुष्टुप्छन्दोजातेषु २९६ वृत्तेषु २९ तमवृत्तं भवति । अस्य गीतेति नामनिर्देशः क्रियते । तल्लक्षणम्-"वेदतो तौं गौ हि गीता" इति ।

३, भुवने - लोकेषु-जात्येकवचनम् । विचित्रमाश्चर्यकरं यत्रकार्य-विशेषे कारणं न सम्यक् ज्ञायते तत्र आश्चर्यभावः उत्पद्यते । पश्यसि जानासीति प्रश्नः ।

४. हे देव त्वया कृतविचित्रसृष्टिः महादाश्चर्यं भवति ।

५. कथमिति सृष्टिवैचित्र्यावबोधनार्थं प्रश्नः ।

६, महान् क्षत्रिय इति-बहुप्रभावोपेतस्य जीवदेवस्य प्रशंसाद्योत-नाय प्रयोगः । भूत्यष्टकसिद्धः-अणिमा-महिमा-गरिमा लघिमा - प्राप्तिः-प्राकाम्यम् ईशत्व वशित्वं चेत्यष्टभूतयः याः तासु सिद्धः ताभिस्सिद्धो वा-स्वेच्छया द्रष्टुं-दर्शयितुं च समर्थः । परतत्वज्ञानं ब्रह्मज्ञानम् । अत्रापि नाय-कस्य गुणवर्णनेन विलोभनं नाम मुखसन्धेरङ्गं स्पष्टम् । अनुरूपा-रूपेण-

ब्रह्मा–७. ज्ञातासि तदा यदाऽऽवां सञ्जीविनीकलाकौशलं प्रत्यक्षतो द्रष्टुं लोके सञ्चरिष्यावः ।

वाणी–८. केयं सञ्जीविनी ?

ब्रह्मा–९. शृणु परमेश्वरांशभूतस्सोमराजः पारमेश्वरतेजः-प्रभावात्मिकया ओषधीदेव्या सहधर्मचरो भवति ।

---

शीलेन गुणैश्च समाना तथा चोक्तम्-तेजसा-सौन्दर्येण-वंशेन-वयसा-शुभलक्षणैः-विद्यया यशसा च यःअसमानः सः वरः । कन्यापि-या पतिमतानुकूला सुकुमारशरीरा-सत्कुलप्रसूता-अभिज्ञा-सच्छीला-सा विवाहयोग्या । एतादृश-वधूवरयोरेव साम्यं भवेत् । प्रकृते तादृशवरगुणोपेतः जीवदेवः त्वया सृष्टः । तत्सदृशीं कन्यां न कुत्राऽपि पश्यामि तादृशकन्यानिर्माणे तव औदासीन्यं कुतः इति तव सृष्टौ वैचित्र्यं पश्यामीत्याक्षेपोक्तिः ।

७. ज्ञातासीति लुण्मध्यमपुरुषैकवचनं भविष्यदर्थे प्रयुक्तम् । तादृशीं कन्या पश्यसीति पर्यायोक्तिः । सञ्जीविनीति नामनिर्देशेन कलाकौशलमिति बुद्धिप्रभावद्योतनेन च जीवदेवस्य अनुरूपा कन्या सृष्टा भवति । सा ह्यद्य विद्याभ्यासयोग्यवयोवती भवतीति ब्रह्मणा वाणीसंशयपरिहारः कृतः । तस्याः कलाकौशल्यं द्रष्टुमहमुत्सुको भवामि । त्वमपि मामनुगता भव । तदा मद्वचनं तव अनुभवसिद्धं भवतीति सूचितम् ।

अत्र नायिकायाः सञ्जीविनीति नामनिर्देशेन कलाकौशल्यमित्यनेन च मुखसन्धेरङ्गभूतौ उपक्षेपपरिकरौ निर्दिष्टौ ।

८. सञ्जीविनीवृत्तान्तविशेषावगमाय प्रश्नः ।

९. परमेश्वरांशभूतः सोमः- सर्वदेवात्मको हि परमेश्वरः । ओषधी-देवीति सोमराजपत्न्याः नाम । अत्र सोमः यतः ओषधीशः-ततः आयु-र्वेदानुगतकथावस्त्वपि सूचितं भवति । ओषधीनां तेजः प्रभावः सकलरोग-निवारणक्षमः-स धर्मः सोमप्रभासङ्क्रमणेनैव भवतीति मौतिकतत्त्वम् । अतः सहधर्मचरः इति प्रयोगोऽयं युक्तः ।

वाणी–१०. जाने । ततः ।

ब्रह्मा—११. भूलोके भारते पुनः कुमुददेशे ज्योत्स्नानगरे सोमवंशप्रभवः कलानिधिर्नाम राजा चन्द्रिकादेवीं परिणीय सर्वजनाह्लादको भवति । तौ सोमौषधीतेजोंऽशौ ।

वाणी–१२. अतिकुतूहला भवाम्यहं शेषवृत्तमशेषं श्रोतुम् ।

ब्रह्मा—१३. तयोर्विहारपरयोः परिहाससंरंभावसरे - भाव्य पत्यं पुत्र इति राज्ञा, पुत्रीति देव्या मिथः प्रतिज्ञा कृता । दीर्घेणाऽपि कालेन उभयप्रतिज्ञा सफला नाभूत् ।

वाणी–१४. इदमपि चित्रम् ।

ब्रह्मा – १५. एवमेव जगद्व्यापारः ।

---

१०. जाने इत्यनेन सोमराजौषधीदेव्योः दाम्पत्यभावः मया विदित इत्युक्तम् । तत इति सञ्जीविनीजननादिकथावबोधनाय सकौतुकः प्रश्नः ।

११. कलानिधिः चन्द्रिकादेवीति नामव्यवहारेण सतीपत्योः राज्ञीराज्ञोः अविनाभावसम्बन्धस्सूचितः । यतः कलानिधिः चन्द्रः चन्द्रिका ज्योत्स्ना-तयोरविनाभावसम्बन्धस्सहज एव । तादृशसम्बन्धः वाणीब्रह्मणोः लक्ष्मीनारायणयोः उमामहेश्वरयोः सीतारामयोः संज्ञासूर्ययोः भवत्येवेति लोकेऽपि सद्भार्याभर्त्रोस्सर्वांशेषु सर्वकार्येषु तादृशसम्बन्धो भूयादित्याशंसा ।

१२. अशेषं सम्पूर्णम् ।

१३. पुंसः पुत्रे, स्त्रियाः पुत्र्यां पक्षपातः स्वाभाविकः। अतः राज्ञा देव्या च विलासप्रसङ्गे भाव्यपत्यविषये क्रमेण पुंस्त्रीव्यक्तिप्राप्तिप्रतिज्ञा कृता ।

१४. अत्रापि किञ्चिच्चित्रम् । किं तत् ? तदुभयोराशाभङ्गः ।

१५. जगद्व्यवहारे जनानाम् ईदृशाः आशाभङ्गाः बहुधा भवेयुरेव । किमत्र चित्रमित्याकूतम् ।

वाणी—१६. अन्यत्प्रतिज्ञातं दैवमन्यत्करोति । इदमपि तव सृष्टौ परं वैचित्र्यम् ।

ब्रह्मा—१७. धर्मपराः न कदाचिद्व्यर्थमनोरथाः ।

वाणी—१८. कथावशेषः पुरश्चलतु ।

ब्रह्मा—१९. ततस्तौ दम्पती ओषधीमहिषीयुतं सोमराजमुद्दिश्य महाव्रतान्याजगृहतुः । तदा तयोर्धर्मबुद्ध्याऽऽकृष्टौ ओषधीसोमराजौ तयोस्स्वप्नयोः एकदैव पुत्रीजननमाशशंसतुः । कालक्रमेण जातं स्त्र्यपत्यम् । तस्य संजातं सञ्जीविनीति नाम । सा शिशुभाव एव सङ्गीतपराऽभूत् । सप्तमवर्ष एव विद्याभ्यासरता सा इदानीं तौर्यत्रिकमभ्यस्यतीति श्रूयते ।

वाणी—२०. तर्हि सैव जीवदेवस्यानुरूपा भार्या भवेत् ।

ब्रह्मा—२१. भवेदेव—परं जीवदेवस्य भविष्यं न सुखभूयिष्ठमिति दिव्यदृष्ट्या विदितोऽस्मि । यतः—

---

१६ "अन्यथा चिन्तितं कार्यं दैवमन्यत्र कारयेत्" इत्यर्थं बोधयति । तथेदं कुतो भवितव्यमिति वाण्या चित्रधीनिष्ठा प्रदर्शिता ।

१७. धर्मवतां मनोरथाः सर्वदा सफला इति तात्पर्यद्योतनेन अधर्मवतां स्वीयकर्माण्येव आशाभङ्गे कारणानीति चित्रपरिहारः कृत इति ध्वनिः ।

१८. अवशिष्टवृत्तान्तकथनाय प्रेरणम् ।

१९. महाव्रतानि-व्रतोपवासादीनि-अथवा-पुण्यक्षेत्रयात्रादीनि अथवा-तपोजपादीनि । तौर्यत्रिकं नृत्तगीतवाद्यरूपम् । अत्र सञ्जीविनीजन्मवृत्तान्तेन मुखसन्धौ तस्यैवाङ्गभूतौ उपक्षेपपरिकरौ च सूचितौ । इदानीमित्यनेन सञ्जीविनी तदा त्रयोदशवर्षवयस्केति परिगण्यते ।

२०. सा सञ्जीविनी जीवदेवस्य भार्या भवितेति भवतानुग्रहः कार्यः इति वाण्या अभिप्रायः ।

२१. भवेदेवेत्यनुमोदः । परमिति निपातेनैव त्वया शंसितं पूर्णं

संसारोऽयं कर्मबन्धो जनानां
सोऽयं सृष्टौ पुण्यपापैर्निबद्धः ।
तस्माच्छान्तो जन्तुरत्रैव भुङ्क्ते
स्वेनोप्तं यत्तत्फलानि क्रमेण ॥१२॥

वाणी—२२. भो देव ! त्वं करुणामयोऽसि । अतः दुःख-प्रत्यर्थिप्रतीकारोऽपि चिन्त्यताम् । यतस्त्वं सर्वशक्तः—

शरणागतभरणे हितकरणे करुणालो
तरणिर्भवतरणे भयहरणे वरुणस्त्वम् ।

---

वैवाहिकसुख जीवदेवस्य न सम्पद्यते इति गूढार्थ. दु खं भवतीति सूचयति । 'यत' इत्यादिना स्वाभिप्राय विशदयति । संसारेति-अयं सर्वैरनुभूयमान. संसारः-जननमरणात्मकसस्मृतिव्यवहारः, जनानां सर्वेषा प्राणिना कर्मबन्ध.- तत्तत्क-र्मार्जितफलानुभवाय नियमितो बन्धः । बद्धस्य स्वैरगतिर्न भवति । यथा गोष्ठे बद्धाः गवादिपशुप्राणिनः स्थलान्तरसंचाराय सत्यामपीच्छायां गोष्ठ एव तिष्ठन्ति । यथाभिरुचिघासादिचर्वणाय न समर्थाः स्वस्वामिदत्तकाष्ठप्राय-कशुष्कतृणान्येव चरन्ति । भारावहशकटतैलयन्त्रादीन् दु खदुःखमाकर्षन्तः सङ्कटमनुभवन्ति । तथा कर्मबद्धा जना. अपीति तात्पर्यम् । सोऽयं तादृश-कर्मबन्धःपुण्यपापैर्निबद्धः- स्वकृतपुण्यपापायत्त इति यावत् । तस्मात्-अतः जन्तुः-प्राणी शान्तस्सन्-प्रतीकारासमर्थः सन् अत्रैव-अस्मिन्नेव लोके स्वेनोप्तं यत्-स्वकृतमिति यावत्, तत्फलानि-तेषां कर्मणां फलानि सुखदुःखरूपाणि क्रमेण यथाकालं भुङ्क्ते-अनुभवति । शालिनीवृत्तम् । तल्लक्षणम्-"शालिन्युक्ता म्तौ तगौ गोब्धिलोकैः" इति ॥१२॥

२२. भो देव ! यदि तस्य सुखं न सम्पद्यते तत्प्रतिबन्धस्य परिहारो-पायोऽपि चिन्त्यतामिति प्रार्थनावचनम्-प्रतीकारकल्पने सामर्थ्यद्योतनाय त्वं सर्वशक्तोऽसीत्युक्तम् । शरणागतेति-शरणागतभरणे-अन्यरक्षकाप्राप्त्या त्वामेव भजतां रक्षणे तेषां हितकरणे-आनुकूल्यसम्पादने च करुणालो-हे दयामूर्ते

धरणीजनमरणाश्रयकरणातुरबाधा-
हरणं तव करणं निजसरणिं परिपाहि ॥१३॥

ब्रह्मा—२३ चिन्तितः। स सञ्जीविनीपाणौ समर्पितश्च।
वाणी—२४ यद्येवं तर्हि तस्य तया पाणिग्रहणमनुजानीहि।

---

त्वं समर्थोऽसीत्यध्याहारः। तथा भवतरणे-बहुविधक्लेशात्मकसंसारसागरपार-गमनाय त्वं तरणिभव-योग्या नौः भवेति तात्पर्यम्। भयहरणे-शोकमोहा-दीनां जनकानि, तेभ्यो जातानि वा यानि भयानि तेभ्यः संरक्षितुं त्वं वरुण एव। वरुणः खलु भयपापपरिहाराधिष्ठानभूता देवता "मिनीमसि द्यवि द्यवि, यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्ती यत्तव धर्मायुयोपिम मानस्तस्मादेनसो देव रीरिषः" इति श्रुतिप्रमाणात्। धरणीजनमरणाश्रयकरणातुरबाधाहरणम्-धरणीजनाः-मनुष्याः तेषामेव जनन-मरणसद्भावः न त्वमराणाम्, तादृशमनुष्याणां मरणं नाश एव अत्यन्तदुःखं तदाश्रयकरणानि-विविधाः रोगाः तेभ्यः पीडिताः आतुराः-रुग्णाः तेषां बाधाः- सङ्कटानि तेषां हरणं परिहारः तव करणं ते कर्तव्यम्। अन्यथा तव आर्तत्राणयोग्यत्वं नान्वयेत्। तस्मात्तव सरणिं-नैजमार्गं परिपाहि-पालय। आर्तत्राणनाशभीत्या अतिजागरूकतया संरक्षेति तात्पर्यम्। अनेन भक्तिमार्गधोरणी प्रदर्शिता। इदं वृत्तं अत्यष्टिच्छन्दोजातेषु १३१०७२ वृत्तेषु २८९४० तमवृत्तं भवति। अस्य 'दीप्ति'रिति नामनिर्देशः क्रियते। तल्लक्षणम्-"सनजैर्नभगगतो वसुशरयुग्युगदीप्तिः" इति। इदं करणीवृत्तमिव दृश्यते-नतु करणीवृत्तम् ॥१३॥

२३. चिन्तितः- मया दिव्यदृष्ट्या परिभावितः त्वदपेक्षितप्रती-कारः। स च सञ्जीविन्यायत्तो भवति। सञ्जीविनीद्वारा जीवदेवबाधाः निवृत्ता भवेयुरित्याकूतम्।

२४. जीवदेवस्य अनुरूपकन्यायाः वृत्तान्तः प्रसक्तः। स एव अधुना वाण्या दृढीक्रियते स्वाभिनन्दनाय।

ब्रह्मा—२५. अनुजानामि । त्वमप्यनुजानीहि । त्वं ज्ञानदेवता किल ।

वाणी—२६. तथास्तु । इदमपि ज्ञातुमिच्छामि-किं तस्य भविष्यं यद्भवता सूचितम् ?

ब्रह्मा—२७. बहुविधाऽऽमयाक्रान्तिरेव ।

वाणी—२८. गदानां धाता कः ? त्वं खलु । तेषां विधातापि त्वमेव भवितुमर्हसि । तदद्य प्रतिक्रियाव्यापारः कीदृशोऽङ्गीकृतस्त्वया ?

ब्रह्मा—२९. स न कदाऽपि चिन्तितः ।

वाणी—३०. तर्हि न साध्वाचरितम् । यतः—

कर्ता यो भवतीह सृष्टिनिवहे प्रारब्धदुःखोन्नते-

---

२५. त्वमप्यनुजानीहीत्यनेन ज्ञानदेवतायाः वाण्याः अनुज्ञा, प्रसादश्च आवश्यकौ इति सूचितम् । विद्यावतोर्वधूवरयोर्विवाहः सुकलयोगक्षेमाय कल्पते इति प्रायशो बहुजनाभिप्रायः । अत्र परिन्यासो नाम मुखसन्धेरङ्गं संसूचितम् ।

२६. ब्रह्मणा उपरि संसूचिते जीवदेवस्य भविष्यविषये पुनः प्रश्नः सुविशदं साकल्यार्थावगाहनाय ।

२७. चतुर्थाङ्के जीवदेवस्य यो रोगानुभवः वर्ण्यते तस्य अवतरणिकारूपेयं सूचना ।

२८. प्राणिकृतकर्मानुसारेण सृष्टिकार्ये धाता । शरणागतानां भक्तानां व्यसनपरिहाराय विधातेति एकस्यैव ब्रह्मणः भिन्नव्यापारवशात् भिन्नाभिधाने सम्यगुत्प्रेक्षिते अत्रेति बोध्यम् ।

२९. सः- प्रतिक्रियाविषयः मया नैवालोचित इत्यभिप्रायः ।

३०. न साध्वाचरितमित्यसम्मतिद्योतकोऽयमुपालम्भः ।

कर्तेति—इह सृष्टिनिवहे-जगत्सर्गप्रताने, यः-ब्रह्मा प्रारब्धदुःखोन्नतेः

स्तस्यास्स्यात्परिहारकोऽपि स हितो लोकोपकारार्थतः।
नो चेद्वा परिणाममत्र न जनो दुःखस्य सोढुं क्षमः
सूर्योऽयं परितापदोऽपि हितदो वृष्टिप्रदानाद्भुवः ॥१४॥

ब्रह्मा—३१. ज्ञातम्। देवि यद्यनुग्रहं करोषि ज्ञानवैभवेन तदाऽहं प्रतिक्रियां सुलभं सम्पादयामि। यतः--

---

कर्ता भवति-फलोन्मुखरोगादिदुःखाना आधिक्यकरणे कारणं भवति स एव लोकोपकारतः- लोकाभ्युदयाय-प्रतीकारोपायनिर्माता, हितः- सुखप्रदश्च स्यात्-भवेत्। सुखं कल्पयेदित्यभिप्रायः। नो चेत्-अन्यथा, अत्र जनः दुःखस्य परिणामं सोढुं न क्षमः- प्राणिनां शोकमोहादिद्वारा दुःखस्य परिणामः प्राणात्ययपर्यवसायी भवेत्। न तादृशपरिणामानुभवाय ते न शक्ताः भवन्ति। अतः दुःखप्रदः त्वमेव दुःखनिवारकोऽपि भवेत्याकूतम्। अत्र निदर्शनम्-यद्यपि अयं सूर्यः अंशुभिः परितापकरः-ग्रीष्मे तापाधिक्याज्जनानां सन्तापकृत् इति प्रसिद्धम्। स एव सूर्यः वर्षाकाले वृष्टिप्रदानात्- वृष्टि-विसर्जनद्वारा सन्तापनिवारको भवति खलु। अत्र कश्चिद्विचारः। सूर्यस्य आदानविसर्गाख्यौ द्वौ कालौ भवतः। आदानकालः शिशिरः- वसन्तः- ग्रीष्म इति ऋतुत्रयात्मकः षण्मासा इति यावत्। तदा सूर्यः भूम्यां समुद्र-नदीतटाकादिषु स्थित जलं स्वकिरणैरादत्ते शोषयतीति यावत्। विसर्गकालः- वर्षाः- शरत्-हेमन्त इति ऋतुत्रयात्मक.- षण्मासाः। तदा स एव सूर्यः शोषितं जलं बाष्परूपमापन्नं वायुसाहचर्यात् स्वकिरणैरन्तरिक्षं नीत्वा तत्र पुनः तन्मेघरूपं विधाय भूम्यां वर्षरूपेण विसृजतीति वेदशास्त्र-संमतं वृष्टितत्वमत्र सङ्ग्रहेण निरूपितम्। शार्दूलविक्रीडितं वृत्तम्।

३१. हे वाणि तवाभिप्रायो विदितः। तव सहायेन प्रतिक्रियोपायं सुलभं कल्पयामि।

यथेति—अन्धकारस्य तमसः निरासाय- प्रतिक्रिया रविप्रदीपः- सूर्यतेजः यथा, अग्नितेजोऽभिभवाय-अग्नेः प्रशमनाय-शान्तये तोयम्-

यथान्धकारस्य रविप्रदीपो यथाऽग्नितेजोऽभिभवाय तोयम् ।
यथा विषस्यामृतमीहितं स्यात्प्रतिक्रियैवं रुज ओषधिस्स्यात्॥१५॥

३२. भामिनि किं बहुना?
अद्यैवाहं तपसि नियतो लक्षसंख्यातमारा-
दायुर्वेदं मनसि कलये लोकगुप्त्यै सुखाप्त्यै ।
सोमो जीवो रविरसबलं ह्योषधीबृन्दकाये
तद्विज्ञानादखिलभिषजो दुःखनाशे धुरीणाः ॥१६॥

---

जलम् । यथा, विषस्य प्राणापहारकवस्तुनः नाशाय-प्रतीकाराय अमृतं सुधा यथा ईहितम्, एवं रुज.- समस्तरोगाणाम् (जात्येकवचनम्) ओषधिः- सञ्जीविन्याद्योषधीभि' निष्पादितम् औषधं प्रतिक्रियापरिहारकारणं स्यात् भवतीत्यर्थः । इदं पद्यम् उपेन्द्रवज्रावृत्तनिबद्धम् । तल्लक्षणम्-"उपेन्द्रवज्रा जतजास्ततो गौ" इति ॥१५॥

३२. सङ्ग्रहेण ब्रवीमीति तात्पर्यम् ।

अद्यैवेति—अहंअद्यैव-इदानीमेव, तपसि नियतस्सन् - सम्यगालोचयन्, लक्षसंख्यातं लक्षग्रन्थ इति वेद्यमानम्, आयुर्वेदं वैद्यशास्त्रम्, लोकगुप्त्यै-प्रजारक्षणाय, सुखाप्त्यै-प्रजानां सुखाधिगमाय च आरात्-शीघ्रमेव, मनसि कलये-मनसा विभाव्य रचयामि । ओषधीबृन्दकाये-सर्वौषधीशरीरे सोमो जीवः-चन्द्रः जीवो भवति । रसात्मकप्राणं जनयतीति यावत् । तादृक्-प्राणभूतस्य रसस्य-ओषधीरसस्य, रविरसबलं रविणा - सूर्येण आपादितस्य रसस्य - तेजोरूपस्य बलं शक्तिः, ओषधीलतासु चन्द्रकिरणसङ्क्रान्त्या रसोद्भवः, सूर्यकिरणसङ्क्रमेण वीर्योद्भव इति ओषधितत्वं निरूपितम् । तद्विज्ञानात्-आयुर्वेदाध्ययनतदर्थतत्वविमर्शबलात्, अखिलभिषजः-सर्वे वैद्याः दुःखनाशे-विविधरोगोद्भवदुःखपरिहारकर्मणि धुरीणाः- समर्थाः भवन्ति । अनेन आयुर्वेदसृष्टिरिहोपपादिता । मन्दाक्रान्तावृत्तम् ॥१६॥

वाणी-३३. गदानां प्रतिक्रिया सञ्जीविनीहस्ते कथं प्रत्यर्पिता ?

ब्रह्मा—३४. देवि अवहिता भव-

सर्वौषधीषु निहितो रसधातुसार—
स्सञ्जीविनीति विदितो गदतापहारी ।
तन्मूर्तिरेव जनिता कृतनामवेषा
सञ्जीविनीति भुवि जीवसुजीवनाय ॥१७॥

वाणी—३५. तामेव द्रष्टुमुत्सुकाऽहम् ।

---

३३. प्रतीकारस्सञ्जीविनीपाणौ समर्पित इति पूर्वं ब्रह्मणा यदुक्तं तदर्थावगमाय तद्विषयकप्रश्नः पुनरप्यत्रोत्थाप्यते वाण्या ।

३४. 'अवहिता भवे'त्यादिना वक्ष्यमाणश्लोकार्थावगाहनाय वाण्या अन्तःकरणमावर्ज्यते ।

सर्वौषधीष्विति—सर्वौषधीषु-सर्वेषु ओषधीविशेषेषु, रसधातुसारः-रसः (पृथिव्यप्तेजस्सङ्क्रान्त्याऽऽपादितरस) धातूनां सप्तधातूनां सारः-मूलभूतः निहितः प्रतिष्ठितः-ओषधीषु सारभूतो रसस्तिष्ठतीति यावत् । तासु सञ्जीविनीति प्रसिद्धा या लता भवति तत्सारः, गदतापहारी-गदेभ्यो रोगेभ्यो जातः य उपतापः- दुःखं, तस्य हारी-शमनप्रदो भवति । कृतनामवेषा-नाम च वेषश्च नामवेषौ-कृतौ नामवेषौ यया सा-सञ्जीविनीनाम्ना स्त्रीरूपेण भुवि-भूम्यां जनिता-जाता इयं सञ्जीविनी तन्नाम्नी नायिका, जीवसुजीवनाय-जीवाख्यनायकस्य प्राणरक्षणाय तन्मूर्तिरेव-सञ्जीविनीलतास्वरूपैव भवति । सञ्जीविनीलतैव जीवरक्षणार्थं मूर्तिमती सती सञ्जीविनीति स्त्रीरूपेण भूमौ तिष्ठतीति सारार्थः । अत्र परिन्यासविलोभननामके मुखसन्धेरङ्गे सूचिते । वसन्ततिलकावृत्तम् ।

३५. एतच्छ्रवणेन वाण्याः सञ्जीविनीदर्शने औत्सुक्यमधिकमभूदित्यभिप्रायः ।

ब्रह्मा—३६. तर्हि आवां गायकस्वरूपेण भूलोके सञ्जीविनी-दर्शनार्थं सञ्चराव ।

वाणी—३७. तथास्तु (इति-सानन्दमनुमोदते)

॥ इति निष्क्रान्तौ ॥

---

३६. तदर्थं गायकस्वरूपमास्थाय तत्र गच्छाव इति ब्रह्मणोऽभि-सन्धिः ।

३७. तदभिप्रायमेवानुमोदते वाणी ।

॥ इति चतुर्थदृश्यव्याख्या ॥

---

# ॥ पञ्चमदृश्यम् ॥

---

ज्योत्स्नानगरे सङ्गीतशाला
(प्रातः देवताप्रार्थना प्रचलति)

सर्वा बालिकाः—श्रीशमुमेशं भावय चित्ते मुरहरशुभकरमघ-
हरसुखदं ।
पूजय तं तं भक्तियुता त्वं मतिकरमतिबलपुरहरनिपुणम् ।

---

श्रीशमुमेशमिति—श्रीशमुमेशं नित्य चित्त भावयेति सङ्गीतशालायां सर्वाः बालिकाः भगवत्प्रार्थनावसरे परस्परोपदेशं कुर्वन्तीति तात्पर्यम् । अतः भावयेति मध्यमपुरुषैकवचनप्रयोगः । श्रीशं लक्ष्मीपतिम्, उमेशं गौरी-पतिं चित्ते-मनसि, नित्यं सर्वदा भावय-चिन्तयेति ध्रुवपदस्थानीयस्य प्रथम-पादस्य वाक्यांशस्यार्थः। तद्वाक्यशेषार्थः श्रीशमित्यस्य विशेषणरूपेणान्वेति । यथा-कीदृशं श्रीशम् ? मुरहर मुरारिमिति यावत् । मुरनामकदैत्यनाशेनैव लोकानां शुभकरं कल्याणदायकं तथा अघानां पापानां नाशकं तन्मूला-त्सुखदं सुखप्रदायकम् एतादृशं तं श्रीशं त्व भक्तियुता सती भक्त्योपेता सती पूजय-बाह्यकरणैः षोडशोपचारादिभिरर्चयेत्यर्थः । तथैव तम् उमेशम् । कीदृशम् उमेशम् ? मतिकरम्-ज्ञानप्रदं तथा-अतिबलपुरहरनिपुणम्-अत्यन्त-बलयुक्तानां (समर्थाना-सेनायुक्तानाम्) पुराणां त्रिपुरासुराणा हरे संहारे निपुणं दक्षम् । तैरेव बाह्यकरणैः षोडशोपचारादिभिः पूजय-अर्चयेति सामान्यार्थः ।

लोकसुपालं जगतां सम्यक्पालनकर्तार लोकसुलील लोकेषु (लोक-संबन्धिनीषु वा) समीचीना लीला यस्य तम्। एते द्वे "श्रीशम्" "उमेशम्" इत्येतयो क्रमेण विशेषणे भवतः । विष्णोः- स्थितिरूपलोकपालनाधिकारः, शिवस्य-लयरूपलीलया सर्वप्राणिनां समापततां शोकमोहादिदुःखानां परिहारा-

**लोकसुपालं लोकसुलीलं स रि ग म प ध नि ज रसकृतकृतितो ।**
**गाय सुदेवं गाय सदैवं परपदगतिकरमनुपमवरदम् ॥१८॥**

धिकारः समभिव्यज्यते । अथवा विशेषणद्वयमपि प्रत्येकं "श्रीशम्" "उमेशम्" पदयो अन्वेतव्यम् तत्र पूजाविधानं कथम् ? स रि ग म प ध नि जरसकृतकृतितः- स-रि-ग-म-प-ध-नि- इत्येतानि, षड्जर्षभ-गान्धार-मध्यम-पञ्चम-धैवत-निषाधाख्यसप्तस्वराणां सङ्गीतशास्त्रसङ्केतनामानि । तेभ्यः- जानां जातानां रसानां शृङ्गार-वीर-करुणाद्भुतहास्य भयानक बीभत्स-रौद्र-शान्तनामकनवरसानां मेलनेन, अथवा रस- आनन्दरसः तज्जनकरागाः अत्र लक्षणया गृह्यंते । ते च रागाः षड्जमध्यमगान्धाराख्य-ग्रामत्रयोत्थमूर्छनाविशेषैः सम्पाद्यन्ते इति च व्यज्यते । तैः कृता निर्वर्तिताः रचिता वा या कृतयः-कर्माणि कीर्तनानि वा तेभ्यः इति पञ्चम्यास्तसिल् । सङ्गीतपुरस्सरमाराधयेति तात्पर्यम् । अथवा-गायेत्यर्थ । सदा अनवरतम् एवं पूर्वोक्तप्रकारेण । कुतः तमाराधयेत् ? सुदेव समीचीनां देवताम् इष्टदेवतामित्य-भिप्रायः । कथम् ? परपदगतिकरम्-परम्-आमुष्मिकसम्बन्धि यत्पदं स्थानं (स्थितिर्वा) तस्य गतिकरम्-प्रापणयोग्यम् अत एव अनुपमवरदम्-न विद्यते उपमा येषा ते-तादृशान् वरान् भक्तेभ्यो ददातीति हेतोः । एतेन शिव-विष्णवाराधनेन नित्यसुखं भवतीत्यभिमन्धिः । पद्यमिदं 'तुल्यगति' वृत्तनि-बद्धम् । तत् अभिकृतिच्छन्दोजातेषु ३,३९,९४,४३२ संख्याकवृत्तेषु १,६७,७६,२९१ तमवृत्तं भवति । तस्य तुल्यगतिरिति नामनिर्देशः क्रियते । तल्लक्षणम्-"तुल्यगतिर्म्मौ सो भनना ना वथगुरुरिषुशरवसुमुनिगयतिः" इति । इदं क्रौञ्चपदावृत्तमिव दृश्यते । न तु तद्वृत्त तच्च तस्मिन्नेव च्छन्दसि जातवृत्तेषु १६७७४९६७ तमवृत्तं भवति । एतद्गणितसंख्यावबोधः एतत्कविरचित "सर्वसमवृत्ता"ख्यग्रंथे द्वितीयचतुर्थानुबन्धपरिशीलनेन भवति ॥१८॥

(ततः प्रविशतः गायिकागायकवेषधारिणौ गायन्तौ वाणीब्रह्माणौ)

यथा—नन्दतु लोको हितसुखभावै-
स्सुन्दरमूर्तेर्भजनविलासैः ।
वन्दितपादं भज भज मोद
बन्धुरदेवं बहुविधरूपम् ॥१९॥

वाणी—तव कृपया भवति सुखम् ।
ब्रह्मा—तव सुधिया जगति हितम् ।
वाणी—तव कृतितो भुवि सकलम् ।
ब्रह्मा—तव वशतो भुवनबलम् ॥२०॥

---

नन्दत्विति—लोकः-जन, सुन्दरमूर्ते - मनोहराकृतेर्भगवतः, हितसुखभावैः- हिताः अभीष्टा, सुखरूपाः- आनन्दजनकहेतवः भावाः- अन्तःकरणवृत्तयः येषां तैः । तादृशैः भजनविलासैः भगवद्भजनमेव विलासाः-विनोदाः तैः । नन्दतु-आनन्दं प्राप्नोतु । किंच वन्दितपादं-सर्वैस्सुरनरादिभिरभिवन्दितौ पादौ यस्य तम् । भज-सेवस्व । तया सेवया मोदम्-आह्लादं तोषं वा भज प्राप्नुहि । कीदृश सुन्दरमूर्तिम् ? बन्धुरदेवं मनोहरं देवं यद्दर्शनमात्रेण भक्ताना मनः आह्रियते तादृशं देवं द्योतनशीलं भगवन्तमित्यभिप्रायः । न केवलमयं बन्धुरदेवः अपि तु बहुविधरूपः- अनेकप्रकाराणि रूपाणि धर्तुं शक्तः । तं भज ! इत्यनेन तत्रागतौ वाणीब्रह्माणौ स्वभावतः बन्धुरौ - बहुविधरूपधारणसामर्थ्यादिदानीं गायकरूपधारिणौ सन्तावत्रागताविति ध्वनिरप्यूहनीयः । भगवत्सेवया अनिर्वचनीयानन्दस्समुद्भवतीति सारांशः । इदं पद्यं त्रिष्टुप्छन्दोजातेषु २,०४८ संख्याकवृत्तेषु ४८७ तमवृत्तं भवति । अस्य भूवृत्तमितिनामकल्प्यते । तल्लक्षणम् "पञ्चरसैर्भूर्भतनगगैस्स्यात् ।" इति ॥१९॥

तवेत्यादि पद्येन वाणीब्रह्मविलासोक्तिः प्रदर्शिता । यथा तव-(ब्रह्मणः) कृपया-दयया, सुखं-(जनानां) दुःखनिवृत्तिपूर्वकनिर्वृतिः भवतीति

वाणी—तनु मम मोदम् ।
ब्रह्मा—भज मम पादम् ।
वाणी—भज मम पादम् ?
ब्रह्मा—त्यज तव वादम् ।
वाणी—हर मम खेदम् ।
ब्रह्मा—भर मम वेदम् ।
वाणी—भर मम वेदम् ।
ब्रह्मा—त्यज तव खेदम् ॥२१॥

---

वाण्याः परिहासोक्तिः। तव (वाण्या) सुधिया-सन्मत्या जगति-लोके (जनानामिति यावत्) हितम्-इष्टार्थसिद्धिर्भवतीति ब्रह्मणस्सविलासप्रत्युक्तिः । तथा-तव (ब्रह्मणः) कृतिनः-सृष्टिव्यापारवशात्, भुवि-जगति सकलं-सर्वं भवतीति पुनः वाणीवचनम् । तव (वाण्याः) वशात्-अधीनात् भुवनबलंजगद्व्यापारसामर्थ्यम् इति ब्रह्मोक्तिः। अनया परस्परपरिहासोक्त्या वाणीब्रह्मणोर्व्यापारवशात् जगद्भरणमिति तात्पर्यं सूचितम् । इदं पद्यं 'त्वरितगति' वृत्तनिबद्धम्-तल्लक्षणम्-"त्वरितगतिश्च न ज नगे॰-" इति ॥२०॥ अन्यापरिहासोक्तिर्यथा

तन्विति—मम-(वाण्याः) मोदं हर्षं तनु-विस्तारयेति वाणीवचनम् । मम-(ब्रह्मणः) पादं चरणं भज-सेवस्वेति ब्रह्मवचनम् । अनेन पतिशुश्रूषया सत्याः-सुखमिति तत्वमभिहितम् । तथा मम (ब्रह्मणः) पादं चरणं भज-सेवस्वेति भणसि किमिति वाण्याः आक्षेपोक्तिः । यदि मम पादसेवां त्वं नेच्छसि तर्हि वादं मया सह उक्तिप्रत्युक्तिरूपवादं त्यज विसर्जय । मत्सेवां विना तव मोदः कथं भवेदित्यभिप्रायः। पत्युस्सेवया सत्या मोदः इति ध्वनिः-तर्हि मे मोदः भवतु वा न वा मम खेदं-दुःखम्-(पादसेवारूपदुःखं वा कारणान्तरजनितखेदं वा) परिहरेति वाणीभाषणम् । मम वेदं मत्प्रभूतवेदम् अथवा मन्महिमप्रतिपादिका या श्रुतयः ताः भर-पालयेति ब्रह्मवचनम् । समस्तदुःखनिवृत्तये वेदशास्त्रोक्तकर्मानुष्ठानं निदानमिति वा-वेदान्तोक्त-

सर्वाः—१. नमो वाम् ! नमो वाम् ! नमो वाम् !
गायकौ—२. स्वस्त्यस्तु ! शुभमस्तु ! सन्मङ्गलमस्तु वः ।
सञ्जीविनी—३. सञ्जीविन्यहं शरणागताऽस्मि ।
गायकः-४ मत्सकाशाच्छरणं तवास्तु । लोकसञ्जीविनी भव !
गायिका—५. मम करुणा त्वय्यस्तु । जीवसञ्जीविनी भव !

---

ज्ञानार्जन कारणमिति वा फलितार्थ. । मम वेद भरेति ब्रह्मवाक्यानुकरणेन, कुतोऽह तव वेद भरामि ! पालयामीति वाण्याः पुनराक्षेपोक्ति । तव (वाण्याः) खेद दुःख त्यज त्वमेव परिहरेति ब्रह्मणः उपेक्षापूर्वकसामाधानोक्तिः । अनया वेदशास्त्रोक्तविध्यनुष्ठानमन्तरा-भगवदाराधनं विना-आत्मस्वरूपविज्ञानं विहाय संसारदु.खान्मोचयितुं न शक्यते इति आस्तिकतत्वमत्र परिहासस्सल्लापोक्त्या निर्गलितम् । अत्र "शक्यते" इति 'कर्मणि' 'भावे वा' प्रयोगः । यदि कर्मणिप्रयोगोऽङ्गीक्रियते तदा "संसारदु.खात् मोचयितुम् इतिपदसघातएव कर्तृ पदं भवति तथा प्रयोग· 'तत्कर्तु शक्यते' इति । अत्र मोचयितुं-मोचनमित्यर्थ । इद पद्यं कुसुमविचित्रावृत्तनिबद्धम् । तल्लक्षणन्तु 'नयसहितौ न्यौ कुसुमविचित्रा' इति ।

१. वा युवाभ्याम् (गायकाभ्याम्) नम.- वयं युवां वन्दामहे इत्यभिप्राय: ।

२. स्वस्तीत्यव्ययं सुखार्थबोधकम् । शुभशब्दः क्षेमवाचकः सन्मङ्गलपदं सम्पदभिधायकम् । एतत्समस्त भवतीभ्यो भवतीत्याशीर्वचनम् ।

३. अत्र दृढभक्ति· प्रदर्शिता ।

४. अहं त्वां रक्षामीति भाव. । लोकानां रोगपरिहारद्वारा कल्याण कुर्वित्याशीरर्थः ।

५ ममानुग्रहः त्वयि भवत्वित्यभिप्राय । जीवाख्यस्य तव भविष्यत्कर्तुं. सम्प्राप्यमाणानां रोगाणां परिहाराय त्वं परमौषधं भव । अनेन भाविकथा सूचिता ।

गायकः—६. अयि ! कुमारि ! काः कलास्त्वयाभ्यस्ताः ?

सञ्जीविनी - ७. श्रुतिस्मृत्यादयः- विशेषतोऽथर्ववेदः ।

गायकः—८. प्रमोदस्थानमेतत् । परन्तु स्त्रीणामपि वेदाध्ययनमुचितं कलयन्ति वाऽत्र सामाजिकाः ।

सञ्जीविनी—९. देव ! बह्वयो ब्रह्मवादिन्योऽपि भवन्त्यत्र ।

गायिका १०. देव ! केयं विचिकित्सा ? अहमपि स्त्री किल ।

गायकः—११. ब्रह्मविद्यायामहमपि त्वया जित एव ।

गायिका—१२. यां विद्यां मय्यनुमोदसे तामस्यां नानुमोदसे किल । पश्य–

वाचक्नवी च मैत्रेयी गार्गीप्रभृतयोऽबलाः ।
ब्रह्मविद्याबलेनैव भूषिता जगतीतले ॥२२॥

---

६. अत्र कलाशब्दः विद्यावाचकः ।

७. "विशेषतोऽथर्ववेद" इत्यनेन अयं वेदः समग्रमभ्यस्तः । इतरे यथोचितमभ्यस्ता इति ध्वन्यते ।

८. सामाजिकाः- धर्मशास्त्रवेत्तारः ।

९. अत्र स्त्रियः न केवलं वेदानभ्यस्यन्ति-अपि तु वेदान्तमपि (उपनिषदः) अभ्यस्य तत्वान्यवगच्छन्ति-इत्युत्तरम् ।

१० अहं स्त्री अपि सकलविद्यापारङ्गतास्मि खल्वित्याकूतप्रदर्शनेन स्त्रीणां वेदवेदान्ताभ्यासः सर्वसम्मत इति स्वाभिप्रायं प्रकटयति गायिका ।

११. ब्रह्मविद्यायां त्वं मत्तोऽप्यतिकुशलेति अहं मन्ये इत्यभिप्रायः ।

१२ देवतास्वरूपत्वात् मयि कथञ्चिद्ब्रह्मविद्याभ्यासमनुमन्यसे इतरासु, विशेषतः अस्यां सञ्जीविन्यां तद्विषये संशयश्चेत्ते तत्संशयनिवारणार्थम् उदाहरणानि ददामीत्यभिप्रायः ।

वाचक्नवीति—वचक्नोः- पुत्री काचिद्ब्रह्मवादिनी । मैत्रेयी याज्ञवल्क्यमहर्षेः भार्या-स्वपतिनैव ब्रह्मविद्यायाम् उपदिष्टेति बृहदारण्योपनिषदा

**गायकः–१३. जात्या न स्त्रीणां वेदाध्ययननिषेधः उपपत्त्या तु तदसाध्यमिति शास्त्राकूतम् । परं तु यत्र तत्साध्यं तत्र न निषेधप्रसक्तिः ।**

---

विदितम् । गार्गी-काचित्तपस्विनी वदान्तविचारे याज्ञवल्क्येन वाद कृतवतीति तत्रैवोक्तम् । प्रभृतिशब्देन अन्या ब्रह्मवादिन्यः बोध्यन्ते । अबला:-ताः स्त्रिय एवेत्यर्थः । तास्सर्वा. जगतीतले लोकेषु ब्रह्मविद्याबलेनैव ब्रह्मवादिन्यः इत्यनेनैव कारणेन भूषिता -प्रसिद्धा. यशस्विन्यो भवन्तीत्यर्थः। अनुष्टुप्-वृत्तम् ॥२२॥

१३. जात्या-स्त्रीजन्माधिगमेनैव स्त्रीणां वेदाध्ययननिषेधो न भवतीत्यनेन सर्वेषां वागिन्द्रियविभूतिमतां वेदाध्ययने न कोऽपि निषेध इत्यभिप्रायस्सूचितः । तर्हि स्त्रीशूद्रादीना तन्निषेध' शास्त्रेषु कथं विहित इति चेत्-तेषां वेदाध्ययनस्यानुपपत्त्या तदसाध्यमिनि समाधानमुक्तम् । अनुपपत्तयस्तु-(१) स्त्रीणां शूद्रादीनां च उपनयनाभावः । (२) वेदाक्षरोच्चारणे स्वरवर्ण-स्खलनम् (३) इतरेभ्यः उपदेशेऽनधिकारः (४) अत एव लोकप्रयोजनाभावः (५) सततं कृष्यादिकार्येषु व्यापृतानां शूद्राणाम्, भूयः गर्भधारणेन अलसानां स्त्रीणा च वेदाध्ययनेऽनवकाशः विघ्नबाहुल्यं च । (६) वेदकर्मानुष्ठानाभ्यर्हित-स्नान-धौतवस्त्रधारणादिकर्माभावाच्छूद्राणाम्, मासि मासि रजोदर्शनादिना मलिनानां स्त्रीणां च, अपेक्षितशौचाभावः इत्यादयः । तासु मुख्यानुपपत्ति स्वरवर्णोच्चारणे प्रायो भ्रंश एव । तादृशभ्रंशो मा भूदित्याशयः । गुरुमुखेन शुद्धस्वरेण स्पष्टवर्णोच्चारणपूर्वकम् अधिकारिणामेव पारम्पर्येण वेदाध्ययनं विहितमिति रहस्यम् । परंतु यत्र साध्यं तत्र न निषेधप्रसक्तिरिति ब्रह्मवचनेनैव "उत्सर्गास्सापवादाः" इति न्यायमनुसृत्य स्त्रीशूद्राणां क्वचिद्वेदाध्ययने अनुज्ञा दर्शिता । अत. निषादप्रमुखानां वेदाध्ययनमनुमन्यते भगवान् बोधायनः। तथैव आंभ्रणी अर्वशी यमीप्रभृतयः स्त्रियोऽपि काश्चित् न केवलं वेदवेदिन्यः ब्रह्मवादिन्य', अपि तु मन्त्रद्रष्ट्र्यश्च अभूवन्निति स्पष्टमवगम्यते ।

गायिका—१४. तथैवात्र ।

गायकः—१५. त्वन्मतमेव मन्मतम् ।

गायिका—१६. जितमन्मथेयं कल्याणी ।

गायकः–१७. अस्याः कल्याणमस्त्वविलम्बेन । जितरतिरियं सीमन्तिनी ।

गायिका—१८. सीमन्तिनीनां पुरंध्रीणां धुरि प्रथमगणनीयास्तु ।

सञ्जीविनी—१९. कृतार्थाऽस्मि ।

गायिका—२०. कलास्वप्यभ्यासः कुतो नु ?

सञ्जीविनी—२१. वेदवेदाङ्गशास्त्रादीनि चतुष्षष्टिकलान्तर्भूतानि ।

गायिका—२२. रूढिमालम्ब्यैव प्रश्नः ।

---

१४. अत्राऽपि तत्साध्यमित्याकूतम् ।

१५. तर्हि तत्राभिप्रायमहमनुमन्ये इत्यर्थः ।

१६. अतिसौन्दर्यशालिनीति जितमनस्केति च यावत् ।

१७. अस्याश्शीघ्रं विवाहोऽस्त्विति श्लेषार्थः। स्त्रीषु रतिरिवेयमतिसुन्दरी ।

१८. पतिव्रताशिरोमणिरस्त्वित्याशीः ।

१९. एतादृशाशीर्भाजनमियमभूदित्यस्याः कृतार्थता-धन्यता।

२०. अत्र कलाशब्दः गीतादिष्वेवाभिप्रेतः ।

२१. वेदवेदाङ्गादिष्वतुष्षष्टिकलासु गीतादिकला अपि निवेशिता इति हेतोः पुनः प्रश्नस्य नावकाश इति साकूतं वचनम्। अथवा परिहासोक्तिः ।

२२. लोकरूढ्या "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश" इत्याद्युक्तिबलात् विद्याभ्यः गीतादिकला अन्या इति परिभाव्य प्रश्नः कृतः इति गायिकया स्वप्रश्नसमर्थनम् ।

सञ्जीविनी—२३. योगाविदां रूढिस्साधारणा ।

गायिका—२४. तदहं रूढिगोचराः कलाः पृच्छामि ।

सञ्जीविनी—२५ तास्सर्वा अप्यभ्यस्ताः ।

गायिका—२६. नामतः ?

सञ्जीविनी—२७. नामतः- विविधशिल्पाः- आलेख्यं-गीतिः- तौर्यत्रिकं स्यूतिः- अभिनयः- लास्यमित्यादयः ।

---

२३. शब्दास्तावत्-यौगिकाः रूढाः इति द्विविधाः । यथा 'जलज' मित्युक्ते जले जातं जलजमिति व्युत्पत्त्या मत्स्यः-, कूर्मः भेकः:- शैवलः कमलम् इत्याद्यर्था भवन्ति । ते यौगिकाः । रूढिस्तु कमलमित्येव । तथाऽत्र कलाशब्देन यौगिकार्थः चतुष्षष्टिविद्याश्च । रूढ्यर्थस्तु-चित्रगीतादिविद्यास्वेव । अतः रूढिमाश्रित्य-"कलास्वप्यभ्यासः कृतो नु ?" इति प्रश्नस्समुचित इत्युक्ते पूर्णपदार्थबोधकयौगिके रूढेः एकदेशत्वात् साधारणतया रूढिर्ज्ञेया भवति । केषाञ्चित् योगाविदां शब्दव्युत्पत्तिज्ञानादित्युत्तरम् । अत्र योगविदामित्यनेन योगानुष्ठानपराणां रूढ्योपस्कृताः ये ये शब्दाः ते सर्वे विदिता भवन्तीति श्लेषार्थोऽप्यभिव्यन्यते ।

२४. गीतं रूढिगोचरं खलु । तदुद्दिश्य पृच्छामीत्यर्थः ।

२५. रूढिगोचराः कला याः तास्सर्वा इति तच्छब्दार्थस्वारस्यमत्र ।

२६. तासां नामनिर्देशः क्रियतामित्यभिप्रायः ।

२७. विविधशिल्पाः- वास्तु - प्रासाद-देवतायतननिर्माण-ग्रावभेदन-विग्रहनिर्माण - अयोदारुयन्त्ररचनादिकमधिकृत्य शिल्पाः अनेकविधा भवन्ति । आलेख्यं चित्रनिर्माणकला । गीतिः- सङ्गीतम् । तौर्यत्रिकं नृत्तगीतवाद्योपेता कला । स्यूतिः-सूचीकला-कवचादिनिर्माणयोग्या । अभिनयः-सात्विकाङ्गिकाहार्यवाचिकनृत्यपरिकलिततनर्तनम् । लास्यं ताण्डवाभिनयोद्युक्तपरमेश्वरेण सह पार्वत्या प्रथममभिव्यक्तोऽभिनयविशेषः । एवमादयः ।

गायिका—२८. तवाभिनयं प्रयोगतो द्रष्टुकामाऽहम्।

सञ्जीविनी-२९. (सगेयमभिनयति)

वन्दे सुन्दरदेवते भुवि बन्धुरे दिवि बन्धुरे
बन्धाद्वारय मां स्त्रियं सर मां स्त्रियं भर मां स्त्रियम्।
वन्दे बन्धुरवेषगौ परवेषगौ नरवेषगौ
सिन्धोस्तारय मां भवाद्धर मां भवाद्धर मां भवात्॥२३॥

---

आदिशब्देन - कुसुममालारचन मणिहारग्रथन सुगन्धनिर्मिति केशभूषणालङ्करणादिकलाः गृह्यन्ते।

२८. अभिनयं कुरु पश्यामीति चोदयति।

२९. वदनाद्गायन्त्येवाभिनयं करोतीत्यर्थः।

वन्दे इति—हे सुन्दरदेवते ! इति सम्बोधनं स्वमनोभीष्टदेवतापरमपि प्रकृते वाणीमभिमुखीकरोति। तद्देवतासौन्दर्यं सुरनरैस्सम्यग्विदितमिति दर्शनाय भुवि-भूलोके दिवि-स्वर्गादिषु च बन्धुरं मनोहरमिति सम्बोधनप्रकारः। परमां तव अत्यन्तप्रियां स्त्रियम्-अबलां मां बन्धात् संसारबन्धात् वारय मोचयेत्यर्थः। स्त्रिय मां सर - सारयेति अन्तर्भावितणिजर्थे प्रयोगः। अभ्युदयगतौ प्रेरयेत्यर्थः। अबलां मां भर-पोषय-ऐहिकसम्पत्समृद्ध्या। परवेषगौ-श्रेष्ठवेषधारिणौ - नरवेषगौ मानवरूपधारिणौ सुन्दरवेषगौ-मनोहराकृतिधारिणौ वां गायिकागायकौ-वाणीब्रह्माणौ वन्दे नमस्करोमि। भवात् सिन्धोः- भवसागरात् (व्यस्तरूपकम्) मां तारय रक्ष। भवसागरे निमग्नां मामुद्धरेत्यभिप्रायः। भवात् संसारात्-हर-आहर। जननमरणात्मकात्संसाराद्विमोच्य परमपदं प्रापयेत्यर्थः। भवात् संसारात् धर-उद्धर-संसारजनितक्लेशापोहं कुरु इति गेयपदार्थः। इदं सङ्गीतज्ञैः सगुम्फितरागेण गातुमपि सुशकम्। इदं पद्यं हरिणप्लुतवृत्तनिबद्धम्। तल्लक्षणम्- "स्सौ जो जो भरसंयुतं करिबाणकैर्हरिणप्लुतम्"। इति।

गायिका—३०. अहह! असदृशोऽयमभिनयचमत्कारः।

गायकः—३१. अयि! अभिनयकलाविशारदे! केवलगेयं किञ्चिच्छ्रोतुमभिलषामि।

सञ्जीविनी—तथा। श्रूयताम्।

जयतु गायको वेषधारको भवतु मङ्गलं ब्रह्मणस्पते।
कलिविडम्बनं कर्तुमुत्सुको मम मनोरथं पातुमीहसे ॥२४॥
तव सखी प्रिया शारदा तथा मम कलेक्षणे गायिकाऽऽगता।
मम हि भाग्यतो दर्शनं च वां सुखमभूदहं भाग्यशालिनी ॥

---

३०. अहहेति अन्यादृशाभिनयदर्शनेन जनितसन्तोषाश्चर्यसूचको निपातः।

३१. 'अभिनयकलाविशारदे' इति सम्बोधनेन गायिकायाः यथा गायकस्यापि तथा अभिनयदर्शनेन हर्षोत्कर्षस्समभूदिति द्योत्यते।

जयत्विति—वेषधारकः-गायकवेषधारी, गायकः-ब्रह्मा जयतु-सर्वोत्कर्षेण वर्तताम्। अनेन गायिकागायकयोः निजस्वरूपे सञ्जीविन्याऽवगते इति व्यज्यते। अतः ब्रह्मणस्पते इति सम्बोधनम्-हे परमेष्ठिन्! ते मङ्गलं सर्वत्र शुभं भवतु। भवत्विति प्रार्थनायां लोट्। कलिविडम्बनं कलौ व्याजेन वेषादिकं यथा जनाः कुर्वन्ति तथा त्वं गायकवेषानुकरणं कर्तुमुत्सुकः-स्वीकर्तुमिच्छन् मम मनोरथं सङ्कल्पमेव पातुमीहसे-पालयसि।

तवेति-प्रिया-प्रीतिकारिणी, तव सखी-तव अनपायिनी; शारदा-वाणी च तथा-यथा त्वं तथा सापि मम कलेक्षणे-अभिनयविद्यापरीक्षार्थम्-'ईक्षणे' इति निमित्ते सप्तमीप्रयोगः। गायिकावेषधारिणी सती आगता-अत्र सन्निहिता, मम हि भाग्यतः- मम पुण्येनैव वां युवयोः दर्शनं साक्षात्कारः सुख यत्नं विनैव अभूत्-सञ्जातम्। अहं भाग्यशालिनी युवयोस्सन्दर्शनेन धन्या भवामीति गीतार्थः। एतत्पद्यद्वयं सम्मतावृत्तनिबद्धम्-तल्लक्षणम्—"नरयुगं भवेत् सम्मता लगौ"। इति।

गायिका—३२. अहह ! गीतमिदं गोपिकागीतस्पर्धीव भासते ।

सञ्जीविनी-(३२$^{a}$) हे मातः-

कलय मे करे वाणि ते करं शपथमीदृशं त्वं कुरुष्व मे ।

'भवतु मङ्गलं सर्वदाऽबले तव हितैषिणी स्यामहं ध्रुवम्'॥२६॥

गायकः-३३. (अपवार्य) अलमलं देवि ! सकलकलानिपुणायाः अस्या विद्यापरीक्षयाऽलम् । इयं योगमहिम्ना आवयोर्निजस्वरूपमवगतवती । अतः अस्यै निजस्वरूपेणैवानुग्रहं करवाव । (इत्युक्त्वा गायिकागायकौ वाणीब्रह्मरूपेण पुरःस्थितौ)

सञ्जीविनी-(३३$^{a}$) (दिव्यस्वरूपिणौ तौ दृष्ट्वा)

वन्दे वां पितरौ समस्तजगतां सृष्ट्यादिकार्ये रतौ

वेदानां हितदौ जितेन्द्रियवतां स्वात्माभिरामौ शिवौ ।

---

३२. अहहेत्याश्चर्यम् । इदं तव गीतं गोपिकागीतमिव भासते-तद्वृत्तेन निबद्धत्वात्, तत्र कृष्णभक्तिर्यथा तथाऽत्र दैवभक्तियुक्तत्वात् गोपीगीतमेवेत्याकलये इत्युपमाप्रयोजनम् ।

३२ $a$. कलयेति—भवत्याः केवलं मम गीताभिनयानुमोदेन नालम् । इदानीं हे वाणि-शारदे ! मे करे-मम हस्ते ते करं तव हस्तं कलय-कुरु ईदृशं वक्ष्यमाणप्रकारं शपथं प्रतिज्ञां च कुरुष्व-कुरु । यादृशमित्याकांक्षायां हे अबले ! - सहायरहिते ते-तव सर्वदा-अनवरतं मङ्गलं सकलसम्पत्समृद्धिः भवतु-भूयात्-आशीरर्थे लोट् । अहं च ध्रुव निश्चयेन तव हितैषिणी-त्वन्मनोरथपालनी स्यां भवामीति निर्बन्धोक्ति भक्तिरसस्य द्योतिका पोषिकेति च विभाव्यते । सम्मतावृत्तम् ।

३३. यतः इय बालिका सकलकलानिपुणा सर्वासु विद्यासु विदुषी ततः तस्याः परीक्षा नोचिता इयं तु आवां वाणीब्रह्माणाविति योगप्रभावेण विदितवती । अतः इमां निजस्वरूपेणैव अनुगृह्णाव ।

पुण्यानां फलदौ भवाब्धितरणे नावौ महत्यौ परे
देवानां जयदौ मुमुक्षुसुखदौ सञ्जीविनीप्राणदौ ॥२७॥

वाणीब्रह्माणौ—३४. अयि धर्मशीले! तव दृढभक्त्या आवां भृशं सन्तुष्टौ। त्वं यदा यदा यद्यदपेक्षसे अस्मदनुग्रहेण तत्तत्सिद्धिः अप्रतिबन्धमस्तु।

सञ्जीविनी—३५. धन्यास्मि!

---

वन्दे इति—समस्तजगतां निखिलभुवनानां पितरौ - मातापितृभूतौ युवां वाणीब्रह्माणौ वन्दे-नमस्करोमि। तौ सृष्ट्यादिकार्ये-सृष्टिस्थितिलय-कार्येष्वित्यर्थः। रतौ आसक्तौ। वेदानां श्रुतीनां हितदौ पालकौ जितेन्द्रिय-वताम्-ऋषिजनानाम् उपदेशमुखेन तदुक्तधर्मरक्षणेन च स्वात्माभिरामौ-स्वात्मनि (सप्तमी) अभिरामौ स्वस्वरूपज्ञाने विहरन्तौ शिवौ-लोकक्षेमकरौ पुण्यानां प्राणिभिस्सम्पादितसुकृतविशेषाणां फलदौ-फलं दत्त इति फलदौ (फलप्रापकावित्यभिप्रायः) भवाब्धितरणे - संसारसागरतारणायेत्यर्थः परे-उत्कृष्टे, महत्यौ इरावतीसदृशौ, नावौ नौस्थानभूतौ। देवानाम्-इन्द्रादीनां जयदौ-दैत्यदानवादिभिः सह युद्धे प्रचलिते देवानां जयमापादयन्तौ। मुमुक्षुसुखदौ-मुक्तिमिच्छूनां सुखप्राप्तिकरौ। सञ्जीविनीप्राणदौ-सञ्जीविन्या-ख्यस्तोत्रीप्राणरक्षकौ (सञ्जीविन्याख्यायाः मम प्राणरक्षणं युवयोरनुग्रहादेव भवितव्यमित्यभिप्रायः) अत्र सञ्जीविनीप्राणदौ इत्यनेन सञ्जीविनीनामौषधी-प्रभावात् प्राणरक्षणं भवतीति व्यज्यते। सकलरोगाः विविधौषधीप्रयोगेण निवार्या इति ध्वनिः। शार्दूलविक्रीडितं वृत्तम्।

३४. सन्तुष्टान्तरङ्गावावामेवं त्वामनुगृह्णीवः-त्वं यदा यदपेक्षसे तदा तदस्मत्प्रसादेन निष्प्रत्यूहं सिद्धं भवति। एतादृशेऽनुग्रहे सर्वानुग्रहाः प्रविष्टा-भवन्तीति भावः। इद नायिकाविषये युक्तिर्नाम मुखसन्धेरङ्गम्।

३५. मम जन्म सार्थकमित्यभिप्रायः।

वाणीब्रह्माणौ–३६. कल्याणमस्तु ।

॥ इत्युक्त्वा निर्गतौ ॥

सर्वे निष्क्रान्ताः–

---

३६. कल्याणमस्त्विति प्रस्थानसमये साम्प्रदायिकाशीः। जीवदेवेन सह तव कल्याणं विवाहोऽस्त्विति च ध्वनिः ।

इति पञ्चमदृश्यव्याख्या ।

# ॥ षष्ठदृश्यम् ॥

## तपोवनमार्गः

(वाणीब्रह्माणौ गच्छन्तौ आकाशे किमपि तेजोवस्तु पश्यतः)

ब्रह्मा–१. अहो ! किमेतत्तेजोबिन्दुः आकाशे दृश्यते ? (परिभाव्य) नायं तेजोबिन्दुः, किंतु पतङ्ग इव दृश्यते । (विमृश्य) पतङ्ग एव न तु खद्योतः । खद्योतस्य एतादृशप्रकाशः कुतः ? तर्हि पतङ्गस्सूर्यो भवेद्वा ? (सम्यक् परिशील्य) नायं सूर्यः स ज्योतिर्मयः सर्वप्रकाशकः अयं त्वल्पप्रकाशकः । अतः पतङ्गः पतङ्ग एव । पतस्स पक्षाभ्यां डयमान इव दृश्यते । (समीपे सम्यगवलोक्य) न न-नायं साधारणपतङ्गः । पतङ्गराज एव मद्वाहनभूतो राजहंसः ।

---

१. तेजोबिन्दुः- गगनं दूरस्थचलद्वस्तु निराकारमिव दृश्यते । तस्य प्रकाशस्तु सूर्यप्रकाशादेव अत एव तेजोबिन्दुरित्युक्तम् । परिभावनं सम्यक्दर्शनं सम्यगालोचनं वा । नेति पूर्वभावितं विकल्पयति । पतङ्गः-पतन् उत्प्लवमानो गच्छतीति व्युत्पत्या पतच्छब्दार्थः खद्योतः- सूर्ये-पक्षिणि-च उपयुज्यते । तथा च महाकविप्रयोगाः– "पतङ्गवद्वह्निमुखं विविक्षुः" (कुमारसम्भवे ३-६४) "विकसति हि पतङ्गस्योदये पुण्डरीकम्" (उत्तररामचरिते-६-१२) "नृप पतङ्गं समधत्त पाणिना" (नैषधे-१-१२४) इत्यत्र क्रमेण तदर्थाः बोद्धव्या इति दर्शिताः । अतोऽत्र द्वितीयपर्याये खद्योतभावना तस्या अपि सम्यग्विमर्शेन सूर्य इति तृतीयो विकल्पः । द्वितीयभावनापरित्यागे दृष्टवस्तुनः खद्योतासाधारण विशेषप्रकाश एव हेतुः । पुनः परिशीलनेन सूर्यभावनां परित्यज्य पक्षीति निश्चयज्ञाने विकल्पितवस्तुनः सर्वप्रकाशकाभाव एव हेतुः । पक्षीति सामान्यप्रतीत्यनन्तरं राजहंस एवेति ज्ञानं पूर्वपरिचयादुद्भूतमिति सर्वविकल्पेभ्योऽत्र वस्तुस्वरूपनिश्चयः ।

वाणी–२. किमेवं परिभावयसि सर्वज्ञोऽपि सामान्यजन इव ।

ब्रह्मा–३. अहमिदानीं गायकः सामान्यजनवदेव परिभावयामि ।

वाणी–४. तत्रोद्देशः कः ?

ब्रह्मा–५. तत्त्वोपदेशः ।

वाणी—६. किं तत्तत्त्वम् ?

ब्रह्मा—७. प्राकृतदृष्टेः दूरस्थवस्तुनः निजस्वरूपं न गोचरं भवति । समीपस्थं चेत् तत्स्वरूपमवगम्यते । इदमेव तत्त्वम् ।

वाणी—८. अहं त्वमिव सर्वज्ञा । कुतो मे तत्त्वोपदेशः ?

---

२. सर्वज्ञेन सर्वदा सर्वं ज्ञायते दर्शनालोचनमात्रादेव । तथा त्वया कुतो न झटिति ज्ञातम् इति प्रश्नस्याकूतम् ।

३. सामान्यजनानां भ्रान्त्या एवं विकल्पस्सम्भवतीति ज्ञापनायेत्युक्तमित्युत्तरम् ।

४. कारणं पृच्छति ।

५. तत्त्वप्रतिपादनमेवोद्देशः ।

६. तत्त्वप्रकारं ज्ञातुमिच्छति वाणी ।

७. प्राकृतदृष्टीनां सामान्यजनानां साधनान्तराणि विना दूरस्थवस्तुनः स्वरूपनिश्चयविज्ञाने एव भूता विकल्पाः स्वभावतो जायन्त एव । यतः- दूरात् द्रष्टृभिमुख चलतो वस्तुनः स्वरूपं न विशदं भवति । अत्यन्तसन्निहिते तस्मिन् इदमित्थमिति निश्चयावबोधो भवति । योगिनां देवादीनां च दूरस्थस्यापि-सूक्ष्मस्यापि व्यवहितस्यापि वस्तुनः प्रथमदर्शनादेव ज्ञानबलेन स्वरूपविज्ञानं भवत्येव । इदमेव तत्त्वम् ।

८. चिद्रूपायाः आत्मकलायाः वाण्या अपि सर्वज्ञताप्रसिद्धिः प्रसज्जिताऽत्र ।

ब्रह्मा–९. त्वमपीदनीं सामान्यजन इव गायिकावेषधारिणी खलु ।

वाणी–१०. युज्यते ।

(अत्रान्तरे राजहंसः अवप्लुत्य तयोस्समीपमायाति)

राजहंसः—११. (प्रणम्य) प्रभुवर्य ! भो जगत्पते ! भो जगज्जननि ! प्रणमाम्यहं वां देवेशौ ।

वाणीब्रह्माणौ—११([a]) अयि ! हंसश्रेष्ठ ! चिरं जीव ।

ब्रह्मा—१२. कुतोऽत्रागच्छसि ?

राजहंसः—१३. स्वामिन् ! अश्विनीकुमारौ त्वामुद्दिश्य कठोरतपसि स्थितौ । तयोस्तपोज्वालाकुलाः महर्षयः एतत्सन्देश-निवेदनाय मां देवस्य सकाशं प्रेषयन्ति स्म । भाविकार्ये देवः प्रमाणम् ।

ब्रह्मा–१४. देवि ! हंसवाहनारूढौ आवाम् आयुर्वेदाधिगमार्थं तपसि स्थितयोः अश्विनीकुमारयोरनुग्रहाय साधयावः । परन्तु तदर्थमेव तपसि स्थिताय मम मानसपुत्राय दक्षब्रह्मणे प्रथमम् आयुर्वेदज्ञानमनुगृह्य तन्मुखादस्मावनुगृह्णाव ।

---

९. गायकवेषेण सामान्यजनवद्दृश्यमानायाः तस्याः प्राकृतदृष्टि-संभवः न्याय्य एवेति समाधानम् ।

१०. तदुक्तिमङ्गीकरोति ।

११. प्रभुवर्येति सम्बोधनं स्वामिभक्तिद्योतकम् ।

११. ([a]) चिरं जीवेति तयोराशीः ।

१२. तवात्राऽऽगमने कारणं किम् ?

१३. भाविकार्ये-नासत्ययोः- तपःकारणं विदित्वा तयोरनुग्रहप्रदान-रूपे कार्ये ।

१४, सर्वज्ञत्वात् ब्रह्मा 'अश्विनीकुमारौ आयुर्वेदाधिगमाय तपः कुरुत' इति दिव्यदृष्ट्याऽवगतवान् इत्यर्थः ।

वाणी–१५ तथा ।

(तौ दक्षतपोवने उभौ सन्निहितौ)

दक्षः–१६ अभिवादयेऽहं मातापितरौ ।

वाणीब्रह्माणौ—१७ अस्मद्दर्शनमात्रेण तव सङ्कल्पसिद्धिर्भवति । परंतु त्वम् आयुर्वेदरहस्यं सर्वम् अश्विनीकुमारयोरुपदिश । तन्मूलाद् त्रिभुवनक्षेमं भूयात् । आवामपि तयोस्तपोनिष्ठामवलोकयितुं तत्समीपं गच्छावः ।

दक्षः—१८ यथा रोचते पितृभ्याम् ।

वाणीब्रह्माणौ–१९. स्वस्त्यस्तु ।

(इत्युक्त्वा अधिष्ठितहंसयानौ नासत्ययोस्समीपे सन्निदधतुः)

अश्विनीकुमारौ—२०. (नेत्राण्युन्मील्य) नमस्कुर्वो वां जगज्जनकौ ।

---

१५. तथा करवावेत्यनुमोदते ।

१६. दक्षः ब्रह्मण मानसपुत्रः । अतोऽस्य ब्रह्मा पिता । कथमस्य वाणी मातेति चेत्-उच्यते । स्वस्य जननी वा अजननी वा स्यात् पितुर्भार्या मातेत्यभ्युपगम्यते । अथवा-यतस्सर्वशक्त्यात्मिका वाणी जगन्मातेति गीयते, अतोऽस्यापि सा मातेति समाधानम् ।

१७. भगवद्दर्शनेनाकृष्टस्सङ्कल्पः सिद्धिं जनयति खलु । अतः दक्षः ब्रह्मदर्शनमहिम्ना आयुर्वेदज्ञानमधिगतवानिति मानसिकवृत्तितत्त्वमत्र सूचितम् । दक्षस्य, तन्मुखादश्विनीदेवतयोः आयुर्वेदोपदेशः जगत्क्षेमार्थमिति भावः ।

१८. भवतोराज्ञां परिपालयामीत्यभिप्रायः ।

१९. तमाशिषानुगृह्णीतः ।

२०. तपसि स्थितस्य नेत्रनिमीलनेन दृग्वृत्तिरन्तर्मुखीभूता ऐकाग्र्यसंपादनाय सहायिका भवतीति योगरहस्यम् । नेत्रोन्मीलने तु तपस्वी

वाणीब्रह्माणौ—२१. दीर्घायुष्मन्तौ भवतम् ।

ब्रह्मा—२२. अयि दस्रौ, कुतो वां तपोव्यापारः ?

दस्रौ—२३. देव ! भूतले जनाः विविधविचित्ररोगाक्रान्ताः अन्तिमां गतिमालिङ्गन्ति सुराश्च असुरबाधार्दिताः सुदुःखमनुभवन्ति । तेषां दुःखपरिहाराय कमपि प्रतीकारमासादयितुं भवदनुग्रहपरौ भवावः ।

ब्रह्मा—२४. मया पुरैवेदं ज्ञात्वा लक्षसंख्यात्मकः आयुर्वेदस्सृष्टः । दक्षब्रह्मणे उपदिष्टोऽस्ति । तमुपगच्छतम् । स एव वां आयुर्वेदरहस्यमुपदिशति ।

अश्विनीकुमारौ—२५. यथाज्ञापयति देवः ।

ब्रह्मा—२६ किं वामनुग्रहान्तरापेक्षा ?

---

बहिर्मुखो भूत्वा पुरस्थितान् विषयान् पश्यति ।

२१. तावाशीर्भिरनुगृहीतः ।

२२. दस्रकृततपःकारणं ज्ञातमपि परीक्षार्थं प्रश्नः । परीक्षा-तु स्वसङ्कल्पस्याश्रयीभूतलक्ष्ये तदेकनिष्ठाऽभूद्वा न वेति विज्ञानाय ।

२३. विविधाः—अनेके, विचित्राः—निदानापरिज्ञानात् जनानामाश्चर्यजनकाः । अन्तिमाङ्गतिं मरणम् । आलिङ्गन्ति - प्राप्नुवन्ति-म्रियन्ते इति यावत् । असुरकृतबाधास्तु-युद्धकाले सुराणा शिरश्छेदः- अङ्गवैकल्यं नेत्रोत्पाटनमित्यादिरूपाः । सुदुःखम् - अत्यन्तव्यसनम् । परिहाराय-प्रतीकारं शस्त्रचिकित्सा च भवत्प्रसादेन लब्धुमावां तपोनिरतौ भवाव इत्युत्तरम् ।

२४. उपदेशः केषुचिदंशेष्वेव ।

२५. तथा करवाव इत्यर्थः ।

२६, अस्त्यन्याऽपि वाञ्छा वाम् इति पृच्छति ।

स्वामिन्निति—स्वामिन्-भो देव ! आवां (अश्विनीकुमारौ) देवदेवस्य तव प्रसादात्-अनुग्रहात्, तपसि-समाधौ नियतौ-तत्परौ-अभवावेति शेषः ।

अश्विनीकुमारौ—स्वामिन्नावां तपसि नियतौ देवदेवप्रसादा-
दक्षाद्वेद्ये तव महिमतो दृष्टमन्त्रावभिज्ञौ ।
रोगज्ञानाद्विविधकरणैश्शान्तिमार्गान्विदित्वा
त्वत्कारुण्यात्सुरनरकृते देववैद्यौ भवावः ॥२८॥

वाणी—२७. मनीषिणीषु नारीमणिष्वपि युवयोर्घृणा सुसम्पादिता भवतु ।

उभौ—२८. नैजोऽयं स्त्रीपक्षपातः लोकमातुस्तव । आवां तु निष्पक्षपातेन निर्व्याजं सकलभूतहितचिन्तकौ भवाव इति सविनयं सशपथं विज्ञापयावहे ।

---

इदानीं तव महिमतः- तवानुग्रहप्रभावात् दक्षात्-दक्षब्रह्मद्वारा वैद्ये-अयुर्वेदे दृष्टमन्त्रौ-उपदेशबलेन प्राप्तायुर्वेदरहस्यौ 'भवाव.' इत्यध्याहारः । रोगज्ञानात्-व्याधीनां निदानमवबुध्य विविधकरणैः औषधविशेषैः शास्त्रविशेषैश्च शान्तिमार्गान् - परिहारोपायान् विदित्वा ज्ञात्वा, त्वत्कारुण्यात्-तवानुग्रहात, सुरनरकृते - रुग्णानां देवानां मनुष्याणां च रक्षणाय देववैद्यौ - देवभिषजौ भवाव.- भविष्यावः । अत्र वर्तमानसामीप्ये भविष्यदर्थे-'लट्' प्रयोग· । अत्र 'सुरनरकृते' इत्यनेन अस्मत: उपदेशं प्राप्य काश्यपप्रभृतयः शिष्य-परम्पराद्वारा लोकक्षेमं कुर्वन्तीति ध्वनि: । मन्दाक्रान्तावृत्तम् ।

२७. मनीषिणीषु विदुषीषु नारीमणिष्वपि - कुशलस्त्रीजनेष्वपि युवयोर्घृणा अनुकम्पा-सुसम्पादिता-प्रदर्शितेतियावत् । भवतु-इत्यनेन वनिता-जनचिकित्साविषये युवां जागरूकौ भवतमिति कुशलमतीनां स्त्रीणामप्युपदेशं दत्वा ताः प्रसूतितन्त्रनिपुणाः कुरुतमिति च ध्वन्यते ।

२८. लोकमातु:-जगज्जनन्यास्तव स्त्रीपक्षपातः- स्त्रीजनेषु विशेषा-भिमान· नैजः- स्वाभाविक एव-स्त्रीत्वात् इति काकुः । जनन्याः स्वापत्य-विषये पक्षपातः न युक्त इत्यभिसन्धिः । अयमुत्तरवाक्येन विशदीक्रियते । आवां तु निष्पक्षपातेन सर्वेष्वेकरीत्या, निर्व्याजं इयं स्त्री-अयं पुमान्-एष

वाणीब्रह्माणौ— २९. महाकार्येष्वपि सर्वदा युवयोः अप्रतिहतकार्यसिद्धिरस्तु । युवां कामचारौ च भवतम् ।

३०. (इत्युक्त्वा अन्तर्दधतुः) (अश्विनीकुमारावपि दक्षादधिगतायुर्वेदमन्त्रप्रभावो स्वस्थानं जग्मतुः) सर्वे निष्क्रान्ताः ॥

॥ इति प्रथमोऽङ्कः ॥

---

बन्धु - असावन्यः- अयं धनं ददाति-एष न ददाति-अयं साहाय्यं करोति-असौ न करोति अयं प्रबलः- असौ दुर्बलः-एष सुर.- असौ नर इत्यादि-निमित्तान्यनपेक्ष्यैव सर्वप्राणिनां क्षेमङ्करकार्येषु व्यापृतौ भवाव इत्यभिप्रायः।

२९. छिन्नशिरस्सन्धानादिगुरुतरचिकित्साकर्मसु सर्वदा सर्वत्र सिद्धिरस्त्विवति वाणीब्रह्मणोराशीः । कामचाराय तद्वरानुग्रहश्च ।

३०. स्वस्थान-देवलोकं-स्वर्गमिति यावत् । इति षष्ठदृश्यव्याख्या ।

इति श्रीवेङ्कटरमणार्यविरचिते 'जीवसञ्जीविनी' नामनाटके प्रथमाङ्कस्य स्वीया 'रसोल्लासि'न्याख्या व्याख्या-समाप्ता ।

---

# ॥ द्वितीयोऽङ्कः ॥

प्रथमदृश्यम्–इन्द्रसभा।

(शचीयुतो महेन्द्रः सभां प्रविशति)

सर्वे—१. विजयताम् ! विजयताम् ! त्रिभुवनपालको महेन्द्रः महाराज्ञी पुलोमजा।

सेवकाः–२. इत इतो देवः अमरेशः।

सेविकाः—३. इत इतो देवी इन्द्राणी।

वन्दिमागधौ–जय जय जय जय जय जय भोः सुरवर वर-
करकरवशगाः।
मदकृतकृतिपरपरबलिनो युधि युधि जितदितिवरतनय ॥१॥

---

१. पुलोमजा-इन्द्राणी-शचीति यावत्।

२. देवः-प्रभुः सुरपतिरिति यावत्। अमर एव अमराणामीशो भवितुमर्हति खलु। अत. इन्द्रोऽपि अमर इत्यनेन अमरत्वस्य स्थायित्वं सूच्यते।

३. 'इदि' परमैश्वर्ये इत्यस्माद्धातोः इन्दतीति व्युत्पत्या 'रन्' प्रत्यये 'इन्द्र' इति रूपम्। ततः इन्द्रस्य स्त्री इत्यर्थे "इन्द्रवरुण ...आनुक्" इत्यनेन आनुक्-ङीप्-इत्येताभ्यां इन्द्राणीति रूपं भवति। इन्द्रस्य पत्नीत्यर्थः।

जयेति–येन शत्रुपराजयपूर्वक स्वस्य जयस्सम्पाद्यते तस्य कृते 'जय जय' इति जयघोषो युक्तः। अथवा सम्प्राप्यमाणजये आशंसा। अत्र उभयार्थस्संभवति। सुरवर-हे अमरश्रेष्ठ, तव वरकरे-सबलहस्ते करवशगाः-करेण-राज्ञे दीयमानद्रव्येण, वशगाः स्वाधीनं गताः। के ? मदेन-अहं बलीत्यहंकारेण कृताः- आचरिताः याः कृतयः- कार्याणि-परहिंसादिरूपाणि तासु पराः आसक्ताः। परबलिनः- परेषु-शत्रुषु ये बलिनः- ते इति पूर्वेणान्वयः। युधि युधि-प्रतियुद्धे जिताः- पराजिताः दितेः- कश्यपभार्यायाः

ऋषयः—४. भो महेन्द्र !

हरिहरपदसक्ता भक्तिरव्याजभावा-
दमरवरपते त्वां रक्षतु प्रत्यहं भोः ।
जगति बलयुतानामाश्रयश्रेयसे स्या-
दबलपरिजनानां भूतये नीतिरेषा ॥२॥

महेन्द्रः—५. भो महर्षयः ! भवतामाशीर्मे सर्वश्रेयोनिदानम् । इदानीमश्विनीकुमारौ जगत्पतेर्ब्रह्मणोऽनुज्ञया दक्षेणायुर्वेदे सम्यगुपदिष्टाविति विदितम् ।

अश्विनीकुमारौ— ६. तथैव महाप्रभो !

---

वरतनयाः- श्रेष्ठपुत्राः दैत्या इति यावत् येन सः तस्य सम्बुद्धिः । अत एव इन्द्रस्य 'जिष्णुः-' वृद्धश्रवाः इत्यादिनामानि । इदं वृत्तं अतिजगतीछन्दसि जातेषु १६३८२ संख्याकवृत्तेषु ४०९६ तमं 'हिताख्यं' वृत्तं भवति । तल्लक्षणम् 'श्रुतियुगशरनननगहिता' इति ॥१॥

४. बहवो भवन्ति किल महीन्द्राः त्वं तु महेन्द्र· सर्वाधिकप्रभुरिति सम्बोधनाभिसन्धि. हरिहरेति-भो अमरवरपते - सुरश्रेष्ठ अव्याजभावात् निर्निमित्तं हरिहरपदसक्ता-विष्णो· शिवस्य च पदेषु सक्ता-विहिता, भक्तिः-प्रेमभाव. त्वां-प्रत्यहं-सर्वदा, रक्षतु-पालयतु । त्वयि रक्षिते वयं सर्वे रक्षिता एव । कथम् ? जगति-लोके, बलयुतानां-प्रबलानां श्रेष्ठानामिति यावत् । आश्रयः- अवलम्बनम् अबलपरिजनानां-दुर्बलसेवकजनानां श्रेयसे-भूतये च स्थिरसुखयशसे, सर्वसम्पदभिवृद्धये च स्यादिति-एषा नीतिः इयं लोकोक्तिः महतामाश्रयः कर्तव्य इत्यभिसन्धिना दर्शिता । इन्द्रस्य श्रेयःप्रार्थनारूपेयमाशीः । मालिनीवृत्तम् ॥२॥

५. भवतामाशीर्मे सर्वश्रेयोनिदानमित्यनेन नम्रभावस्सूचितः । अथ अश्विनीकुमारयोः प्रशस्तिप्रसङ्गः महेन्द्रेण क्रियते ।

६. तथैवेत्यनुमोदः ।

महेन्द्रः–७. ताविह अमरभिषजौ भवितुमर्हत इति ममाभिप्रायः । भवतां मतमत्र किम् ?

ऋषयः–८. सम्मतमेवेदं सर्वेषाम् ।

त्रिकालज्ञः—९. देव ! इतः परं त्रिभुवने रोगभयं न सम्पद्यते इति मन्ये ।

शची—१० अपि च –

स्त्रीणां रोगः प्रसवसहजो नित्य इत्युच्यते हा
तासामाभ्यां समयरचिता सत्फला स्याच्चिकित्सा ।
मातापत्यं कुशलकलिते तोषभाजी तयेति
प्रत्याशा मे सपदि भवतां सन्निधौ नन्दयेत्तौ ॥३॥

---

७ इह-स्वर्गलोके नासत्ययोर्देवभिषक्पदाभ्युपगमाय स्वयं शक्तोऽपि शक्रः ऋषिजनानामङ्गीकारं प्रार्थयते । अनेन राष्ट्रसम्बन्धिमहाकार्येषु राज्ञा प्रजानुमतिरवश्यं सम्पादनीयेति ध्वनिः ।

८ सर्वसम्मतिं दर्शयन्ति ऋषयः । कुतः ? सर्वामराणां प्रतिनिधय इति भावेन ।

९. अश्विनीकुमारमुखादायुर्वेदप्रभावः सर्वत्र प्रचलति । तेन सर्वेषाम् उपतापनिवारणं भवतीत्याशयः ।

१०. 'अपि चेति' शचीवचनम् उत्तरश्लोकाभिप्रायगमकम् ।

स्त्रीणामिति–स्त्रीणां पतिवत्नीनां प्रसवसहजः- प्रसूतिकाले स्वभावतः उत्पद्यमानो रोगः- प्रसूतिबाधोपतापः नित्यः- नियतः । या प्रसवित्री सा नियमेन प्रसवबाधामनुभवत्येवेत्याकूतम् । 'उच्यते' इत्यनेन इदं सर्वविदितमित्यभिप्रायः । 'हे'ति खेदसूचको निपातः शच्या स्वयमनुभूतप्रसववेदनाज्ञानेन सर्वाभिः प्रसवित्रीभिः एतादृशबाधा अनुभूयते इत्यनुतापं सूचयति । तासां तादृशस्त्रीणाम् आभ्याम्-अश्विनीकुमाराभ्यां समयरचिता चिकित्सा-प्रसवकाले कृता चिकित्सा, सत्फला स्यात्-प्रयोजनकरा स्यादित्यनेन प्रसव-

महेन्द्रः—११. देवि ! अभिज्ञासि । तव अभिनन्दनेन एतावाश्विनेयौ स्त्रीरोगचिकित्सायां विशेषावधानपरौ भवेतामिति ममापि प्रत्याशा ।

त्रिकालज्ञः—१२. भो देवि ! भोदेव ! किमत्राशङ्का । इमौ वाणीब्रह्मणोरनुग्रहेण महाकार्येष्वपि प्रतीकारप्रभविष्णू इति चिन्त्यताम् ।

महेन्द्रः—१३. प्रयोगसिद्धिरेव प्रतिष्ठास्थानं भिषजाम् ।

त्रिकालज्ञः—१४. किमद्यापि चिकित्सायां विचिकित्सा ? पश्य भैरवेणेदानीं स्वयंभुवः शिरश्छिन्नम् । तत्संहननार्थं देवादयः दस्रसाहाय्यमपेक्षन्ते ।

---

काले सूतिकागृहे वा, महाजनोपयुक्तसूतिकाशालायां वा सद्वैद्यसान्निध्यबलात् सुमङ्गलास्सुखप्रसवेन मङ्गलभाजो भवंत्वित्यभिप्राय· । तया-तादृशचिकित्सया माता-प्रसवित्री अपत्यं गर्भस्थशिशुर्वा जायमानशिशुर्वा, जातशिशुर्वा उभे कुशलकलिते, क्षेमयुक्ते सती, तोषभाजी-सन्तोषपात्रे भवताम् इति मम प्रत्याशा-निरीक्षणमिति यावत् । सपदि भवतां सन्निधौ-इदानीं सर्वेषां युष्माकं सन्निधाने, तौ नन्दयेत्-अश्विनीकुमारौ प्रोत्साहयेत् । मत्प्रार्थनया नासत्यौ स्त्रीजनप्रसूतिचिकित्सायां विशेषेणावधानपरौ भवतामिति सारांशः । मन्दाक्रान्तावृत्तम् ॥३॥

११. इन्द्रः शचीमभिस्तुत्य तस्याः अभिप्रायमेव प्रकटयति ।

१२. तदितराऽसाध्येषु महाव्याधिष्वपि चिकित्सासिद्धिमेतौ वाणीब्रह्मणोरनुग्रहेण प्राप्ताविति भूतार्थं प्रकाशयति त्रिकालज्ञः ।

१३. प्रयोगः- भैषज्यप्रयोगः । तस्य सिद्धिः रोगपरिहारो भवति चेत्-तदेव तत्प्रयोक्तॄणां कौशलं प्रागल्भ्यं च लोकविदितं भवतीत्यभिप्रायः ।

१४. चिकित्साविषये कुतस्संशयः। तत्परीक्षावसरः प्राप्तः किल । एतोऽद्य नासत्याभ्यां भैरवेण छिन्नस्य ब्रह्मणशिरसः सन्धानकार्यं क्रियते । तदर्थं ताभ्यां तत्रेदानीमेव गम्यते ।

महेन्द्रः—१५. कथं विदितमिदं भवता ? । न कोऽपि सन्देशः केनापि प्रेषितः किल ।

ऋषयः—१६. महेन्द्र ! अयं त्रिकालज्ञो महर्षिः । लोके यत्र कुत्रापि जातः शब्दः तदुत्पत्यनुपदमेवास्य श्रोत्राकाशमधितिष्ठति !

महेन्द्रः—१७. किमिदमाकाशस्य विभुत्वात् ?

ऋषयः—१८. न केवलमाकाशस्य विभुत्वात् - ऋषिजनानां प्रभुत्वाच्च ।

महेन्द्रः—१९. तर्हि सर्वेषां भवतु भवतां प्रभुत्वम् ।

ऋषयः—२०. तद्भवेद्यदि नो बहिर्मुखं न भवेच्चित्तम् । अस्य त्रिकालज्ञमहर्षेस्तु दैवानुग्रहेण इच्छामात्रादन्तर्मुखं भवति चित्तम् । तदा शब्दयोगमहिम्ना सर्वं निमेषकाले विदितं भवति ।

---

१५. केनापि तद्वृत्तान्तो न निवेदितः । तदधिगमनं भवतः कथमासीदिति प्रश्नस्य तात्पर्यम् ।

१६. अयं भूतभवद्भविष्यवृत्तान्ताभिज्ञः। यत्र कुत्र प्रचलितवार्तामयं झटित्यवगच्छति ।

१७. आकाशो विभुः । तत्तस्मिन्नुद्भूताः शब्दतरङ्गाः देशाद्देशमेकदैव प्रसर्पतीति हेतोः किमित्याशंसाऽभ्यर्थितोऽयं प्रश्नकाकुः ।

१८. यथा शब्दप्रसरणाय आकाशस्य विभुत्वं कारणं तथा तदधिगमाय योगविदां प्रभावोऽपि कारणमित्युत्तरम् ।

१९. तथा चेद्भवन्तस्सर्वे प्रभाववन्त एव । तत्कुतो नाधिगम्यते भवद्भिस्तादृशवार्ता ? ।

२०. वयं त्रिकालज्ञ इव न तदैकनिष्ठाः अन्तर्मुखाः । अस्मत्समाधिः चिरस्थायी न भवति । अतः वयं समाधिस्था अपि निमित्तमात्रेण सुलभं बहिर्मुखा भवामः । अस्य चित्तं तु दैवयोगात् क्षणेन समाधिनिरूढं भवति । तत्प्रभावेणायं दूरस्थं विप्रकृष्टं सूक्ष्मं च पश्यति-शृणोति च ।

महेन्द्रः–२१. सत्यम्। किन्तु तत्र अश्विनीकुमारयोस्सान्निध्ये कालविलम्बो भवति किल। पतितशिरसि तावत् रक्तशोषणेन सन्धानशक्तिः कुण्ठिता भवेदिति शङ्के।

त्रिकालज्ञः–२२. न किञ्चिदत्र शङ्कास्थानम्। इमौ नासत्यौ देवदेवप्रसादात् लब्धकामगतिकौ।

महेन्द्रः–२३. तर्हि भो नासत्यौ! गच्छतं तत्र शिरस्संहननाय। अहमपि कामरूपेण यद्यच्चिकित्साकार्यं युवाभ्यां सम्पाद्यते तत्सर्वं दृष्टिगोचरं करवाणि।

सर्वे—२४ तथास्तु।

( सर्वे निष्क्रान्ताः )

---

२१. इन्द्रः एतद्योगप्रभावमुररीकृत्य विचारान्तरे व्यापृतस्सन् अश्विनीकुमारयोः तत्राविलम्बेन सान्निध्यमपेक्ष्य तदर्थं हेतुं दर्शयति। छिन्नशिरसि शोणितं शोषितं चेत् यथावत्सन्धानं दुष्करमिति शङ्के।

२२. भगवत्प्रसादलब्धवरप्रभावात् - अश्विनीकुमारौ स्वेच्छागत्या क्षणादेव तत्र सान्निध्याय प्रभवत इति समाधानम्।

२३. ब्रह्मणशिरस्सन्धानाय अश्विनीकुमारयोरनुज्ञां दत्वा इन्द्रः ताभ्यां करिष्यमाणं चिकित्सासंविधानं साक्षाद्द्रष्टुं स्वयमपि कामरूपेण तत्र सन्निहितो भवतीति सूचितवान्।

२४. तत्सर्वेऽनुमोदन्ते।

इति प्रथमदृश्यव्याख्या।

---

# ॥ द्वितीयदृश्यम् ॥

---

विविधप्रदेशाः

(ब्रह्मर्षयः प्रविशन्ति)

ब्रह्मर्षयः–१. आः ! कष्टम् !! कष्टम् !!! स्वयंभुवशिरः क्रुद्धेन भैरवेण च्छिन्नमत्र पतितं वर्तते - तस्माद्रक्तं प्रवहति - तत्सन्धानाय आश्विनेयावाहूतौ-तावद्यापि नागतौ । रक्ते शोषणं गते तत्सन्धानमसाध्यम् । किं कुर्मः । हा देवाः । (तदैवाश्विनीकुमारौ सशस्त्रौ प्रविशतः । कामरूपी इन्द्रोऽपि अश्विनीकुमारयोश्चिकित्साचातुर्यं सन्द्रष्टुमदृश्यस्सन्निहितः)

ब्रह्मर्षयः–२. (ऊर्ध्वमवलोक्य) अहो आगतावेव नासत्यौ ! भो अश्विनौ ! स्वागतं वाम् । प्रकृतकार्यमविलम्बेन साधयतम् । इदं स्वयंभूशिरः । इदं शीर्षरहितं तद्वर्ष्म । अनयोस्सन्धानमिदानीमपेक्ष्यते ।

---

– द्वितीयदृश्यव्याख्या –

१. 'आः' इति निपातः अश्विनीकुमारागमनविलम्बेन जनितं व्यसनं सूचयति । कष्टं कष्टमिति पदद्वयं तद्व्यसनमुद्बोधयति । अतिशयार्थे द्विरुक्तिः। छिन्नशिरस्स्थितिमुपवर्ण्य देवभिषगागमने विलम्बं परिभाव्य "किं कुर्मः हा देवाः" इति व्यसनस्योत्कटावस्थां प्रकटयन्ति ब्रह्मर्षयः ।

२. ऊर्ध्वावलोकनेन नासत्ययोरागमनं वीक्ष्य सविस्मयहर्षेण तयोस्स्वागतमाशंस्य शिरस्सन्धानकार्ये तौ प्रेरयन्ति। अत्र 'अहो' इति निपातः विस्मयं प्रशंसां च द्योतयति । तथा चोक्तम्–"अहो धिगर्थे शोके च करुणार्थविषादयोः । सम्बोधने प्रशंसायां विस्मये पादपूरणे । असूयायां वितर्के च प्रायशोऽहो प्रयुज्यते । अहो बतानुकम्पायां खेदाऽऽमन्त्रणयोस्तथा"। इति ।

अश्विनौ—३. नमो वो ब्रह्मर्षिभ्यः। कर्तव्यमचिरात्सम्पाद्यते। (इति पटान्तरं कृत्वा रुण्डस्योपरि शिरस्सन्धाय तत्परितः औषधविशेषेण लेपमाधाय सूच्या परिसीव्य सञ्जीविनीरसं वक्त्रेऽभिष्यन्द्य मूलमन्त्रैरभिमन्त्र्य स्वयंभुवं सशिरस्कं सजीवितं कुरुतः)

सर्वे—४. चित्रम्! चित्रम्!! पूर्वक्षणे गतशिरस्कः उत्तरक्षण एव सन्नद्धशिरा भवति स्वयंभूः। अहो! अश्विनीदेवतयोः चिकित्साप्रभावोऽन्यादृशः। भो दस्रौ—

---

३. ब्रह्मर्षीन्नमस्कृत्य प्रकृतकार्ये व्याप्रियेते। चिकित्सा पटान्तरे कुतः क्रियते इति चेदुच्यते। (१) शस्त्रचिकित्साकार्यमतिजागरूकतया निर्वर्तितव्यं खलु। तदर्थं निश्चलावधानमावश्यकम्। जनबहुले स्थले तस्य नावकाशः। (२) चिकित्स्यमानजनसम्बन्धिनो बन्धुजनाः यदि चिकित्सां पश्येयुः तदा ते करुणार्द्रचित्ताः विलपेयुः। तेन चिकित्सकस्यावधानं प्रचाल्यते। तेन महान् प्रमादोऽपि सम्भवेत्। (३) शिरस्संविधानादिमहाचिकित्सोपदेशः गुरुजनात्प्राप्तः। तत्र भगवद्ध्यानपूर्वकं रहस्यमन्त्रोच्चारणमपि कदाचिदावश्यकम्। तत् प्रकाशेन न कार्यम्। एतादृशप्रतिबन्धनिवारणाय चिकित्सा पटान्तरे विहिता। आधुनिकचिकित्साकोविदैरपि तथा क्रियत इति इदमुपपन्नम्। मुण्डस्योपरि रुण्डस्य स्थापनं तत्सन्धिभागस्य सूच्या सीवनं तत्परितः औषधविशेषलेपनं कार्पासादिनाऽऽच्छादनं समुचितपटपेश्या लघुबन्धनमित्यादीनि साधारणचिकित्साकर्माणि। तत्र प्राणप्रवेशस्तु असाधारणं कार्यम्। तद्दैवानुग्रहेण सद्गुरूपदेशबलेनैव भवितव्यम्। तत्र धुरीणावश्विनाविति तयोर्माहात्म्यं तथैव ब्रह्मशिरस्सन्धानकृतिमुखात्प्रदर्शितमिति प्रकृतार्थः।

४. संहितशिरस्कं सजीवं ब्रह्माणं दृष्ट्वा सर्वे आश्चर्ययुक्ताः अद्भुतचिकित्साकर्तारौ अश्विनीकुमारौ बहुधा प्रशंसन्ति यथा—

मोदामहे भृशमहो भवदीयविद्या-
चातुर्यमत्र सुसमीक्ष्य विभिन्नशीर्षे ।
सन्धानमाशुफलदं बहुशंसनीयं
जीयास्तमत्र विभवैर्जगतीहिताय ॥४॥

स्वयम्भूः-५. तथास्तु ! तथास्तु !! भो नासत्यौ इतः परं-
युवभ्यामिह ह्यसाध्यं युवाभ्यां साधितं मयि ।
आशिषा मे युवां लोके भवतं यज्ञभागिनौ ॥५॥

अश्विनीकुमारौ—६. भो देव ! धन्यौ स्वः । कृतज्ञौ स्वः ।

नेपथ्ये—७. हा ! देवासुरसमरे पूष्णो दन्ताः भग्नाः । भो नासत्यौ ! तच्चिकित्सार्थं क्षणादागच्छतम् ।

---

मोदामहे-इति-अत्र-अस्मिन् शिरस्सन्धानकार्ये भवदीयविद्याचातुर्यं युवाभ्यां प्रदर्शितकलाकौशलं विभिन्नशीर्षे सन्धानं ब्रह्मणःशिरस्संहनन-कार्यञ्च, सुसमीक्ष्य दृष्ट्वा, भृशं मोदामहे-अत्यन्तं तुष्टा भवामः। एतत्कार्यम् आशुफलदं सद्यस्सिद्धमिति हेतोः, बहुशंसनीयं बहुभिर्बहुधा स्तूयमानं भवति । अतः जगतीहिताय-लोकोपकाराय युवां नासत्यौ विभवैः समस्तपरि-करैः (ज्ञानवैभवादिभिरिति यावत्) जीयास्तं-दीर्घकालं जयशालिनौ भूयास्त-मिति ऋषिजनाशीः । वसन्ततिलकावृत्तम् ॥४॥

५. तदनुमोदेन ब्रह्माप्येवमाशास्ते । युवभ्यामिति-इह-अस्मिन् जगति युवभ्यां युवाभ्यां यौवनदशामनुभवद्भ्यां भवद्भ्यां मयि-मच्छिरस्सन्धानविषये असाध्यं साधितम्-इतरभिषगसाधारणं कर्म निर्वर्तितम् । 'ह' इत्यवधारणे । एतदुपकाराय मे आशिषा-मम आशीर्बलेन भवन्तौ लोके भूलोके यज्ञ-भागिनौ भवतं यज्ञभागं प्राप्नुतम् इति प्रत्युपकाररूपानुग्रहः ब्रह्मणा कृतः॥५॥

६. एतदसाधारणानुग्रहाय धन्यवादः कृतज्ञता च प्रदर्शिता अश्विनी-कुमाराभ्याम् ।

७. पूषेति सूर्यस्य नामान्तरम् । तच्चिकित्सार्थं दन्तबन्धार्थम् ।

अश्विनीकुमारौ—८. (श्रुत्वा - सर्वानभिवन्द्य पूष्णस्समीपमागतौ)

पूषा—९. अभिवादये वां देवभिषजौ । इदानीमह युवाभ्यां रदनचिकित्सामपेक्षे ।

अश्विनीकुमारौ—१०. नमस्ते पूषन् । व्यादीयतामास्यम् ।

पूषा—११. इदं व्यात्तम् ।

अश्विनीकुमारौ—१२. भोः पूषन् ! क्षणं स्तिमितो भव । अचिरात्सुस्थितो भवसि । (इति वदन्तौ पतितदन्तान् समीकृत्य दन्तमूलेषु निक्षिप्य ओषधीविशेषरसेन विलिप्य अभिमन्त्र्य यथावदकुरुताम्)

पूषा—१३. कृतज्ञोऽस्मि ।

पतिता दन्ता भूयो ह्युदिता युवयोः प्रसादतो मेऽद्य ।
सुलभं खाद्यादीनां चर्वणमास्यस्य भूषणं वाचः ॥६॥

---

८, सर्वान्-पूर्वस्मिन् चिकित्सास्थाने ये सन्निहिताः तानित्यर्थः ।

९. रदनचिकित्सां भग्नानां दन्तानां पुनर्यथावद्बन्धनरूपाम् ।

१०. वक्त्रविवरं विस्तारयेत्यभिप्रायः- दन्तानां पूर्वस्थानानि परीक्ष्य तत्रापेक्षितलेपनादिकार्यसौकर्यार्थम् ।

११. पूष्णा तथा कृतम् ।

१२. स्वल्पकालं निश्चलस्थित्या तदुत्तरक्षणमेव स्वस्थो भवसीति तात्पर्यम् । अत्र दन्तबन्धनकर्मविधानानि सर्वसाधारणान्यपि नैजैः दद्भिरेव बन्धनसिद्धिः 'अभिमन्त्र्य' पदेन द्योतिता मन्त्रप्रभावेण सम्पादितेति विशेषः ।

१३. उत्तरश्लोकेन कृतज्ञतां दर्शयति—

पतिता इति-मे-मम पतिता दन्ताः-आस्यात् च्युताः, च्याविताश्च रदनाः युवयोः प्रसादेन-युष्मच्चिकित्साबलेनेति यावत् । अद्य उदिता हि-पूर्वस्थि-

नेपथ्ये–१४ हा ! भगस्य नेत्रे नष्टे । कुत्रस्थावश्विनौ ।

अश्विनीकुमारौ–१५ (श्रुत्वा) इदमिदमस्त्यवगतम् । आवामागतौ । (इति भगस्यान्तिके सन्निहितौ । नष्टनेत्रस्थानयोः सिद्धाञ्जनलेपेन नेत्रगोलके पुनस्सन्धाय नेत्रमलं रजतशलाकया निस्सार्य रक्तवाहिनीर्धमनीस्संशोध्य-परिष्कृत्य-बीजमन्त्रबलेन पूर्ववन्नेत्रदृष्टिपाटवं साधितवन्तौ)

भगः–बुद्धीन्द्रियेषु प्रमुखं हि नेत्रं तद्धीनमन्धं प्रवदन्ति सन्तः।
अदृष्टदृष्टिर्नहि तुष्टिदात्री प्रयत्नतो रक्षत दृष्टदृष्टिम् ॥७॥

---

तिमापन्ना इत्यभिप्रायः। अनेन खाद्यादीनाम्-आदिपदेन भोज्यमपि गृह्यते । चर्वणं भोजनद्रव्यस्य रसरक्तादिपरिणामेन सात्मतानयनाय विशेषेण वदने दन्तव्यापारेण मार्दवकरणमत्यावश्यकम् । आस्यस्य भूषणं वदनालङ्कारः । दशनविहीनाः युवानोऽपि वृद्धा इव दृश्यन्ते किल । वाचो भूषणं स्पष्टोच्चारणसामर्थ्यम् । भग्नदन्तानां वचनानि शिशुवचनानीवाऽस्पष्टानि खलु । एतत्सर्वमिदानीं सुखेन निर्दुष्ट भवति । एतत्कार्यं युवयोः प्रसादेन साधितमिति कृतज्ञतासूचनम् ॥६॥

१४. भग इति सूर्यस्यैव रूपान्तरनिमित्तकं नामान्तरम् । एतदनिरीक्षितकार्यमपि देवासुरयुद्धे असुरैरेव कृतमित्यर्थः ।

१५. एतच्छ्रवणानुपदमेव अश्विनीकुमारयोर्भगस्य समीपे सान्निध्यशक्तिः ब्रह्मणो वरादिति मन्तव्यम् । प्रथममञ्जनलेपः-तदुपरि नेत्रगोलकस्थापनं नेत्रमलनिस्सारणं धमनीशोधनमित्यादयः नेत्रचिकित्सापरिकर्माणि। बीजमन्त्रबलेन यस्य यस्य इन्द्रियस्य यस्य यस्य रोगपरिहारस्य वा या या देवता विहिता तस्यास्तस्याः प्रभावाभिधायकाः श्रुतिप्रसिद्धाः मूलमन्त्राः । ततः तद्बलात् चिकित्सासिद्धिरित्यार्याणां श्रद्धा । बुद्धीन्द्रियेति-ज्ञानेन्द्रियनाम्ना विदितेषु-त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणेषु प्रथमं प्रधानं नेत्रमेवातिमुख्यमिति । तद्धीनमन्धं नेत्रहीनम् अन्धमिति च प्रवदन्ति सन्तः—तत्त्वविदां मतं

नेपथ्ये–१६. (अहो ! दैत्यानां समरप्रागल्भ्यम् । स्तम्भीकृतोऽमरपतिः। देवसेनाः सर्वत्र क्षताः। अद्य नासत्यावेव नश्शरणम्।)

अश्विनीकुमारौ–१७ (श्रुत्वा) इमावावामागच्छावः । (इति तूर्णं रणाङ्गणं गत्वा क्षतं देवसैन्यं विविधैरौषधैर्लेपविशेषैश्च अक्षतं विधाय वैद्यकलया मन्त्रशक्त्या च वज्रिणो भुजस्तम्भनं निवारयतः)

नेपथ्ये–१८. (अहो ओषधीनां राजा राजयक्ष्मणा पीड्यते । तत्परिहारः आश्विनेययोर्हस्तगतः)

अश्विनीकुमारौ–१९ (श्रुत्वा) (परिधाव्य राजयक्ष्मणो निदानं ज्ञात्वा तत्परिहारमचिरात्सम्पाद्य चन्द्रेणैवं प्रशंसितौ)

---

लोकानुभवश्च । अदृष्टदृष्टिः-न दृष्टा (न ज्ञाता)-अदृष्टा (अज्ञाता) अदृष्टा च सा दृष्टिश्च (दर्शनशक्तिश्च) - अदृष्टदृष्टि. । यस्याः दृष्टेर्दर्शनशक्तिर्नष्टेति तात्पर्यम् । सा दृष्टिः तुष्टिदात्री न-तृप्ति न जनयतीत्यर्थ' दर्शनयोग्यता भावात् । मनुष्याणां सर्वदा अदृष्टाऽवलम्बन न श्रेयस्करमिति श्लेषोऽपि ध्वन्यतेऽत्र । अतः प्रयत्नतः सर्वप्रकारेणापि दृष्टदृष्टिं रक्षन-दृष्टा-ज्ञाता (स्वेन वा अन्यैर्वा विदितेत्यर्थः) च सा दृष्टिश्च (दर्शनशक्तिश्च) दृष्टदृष्टिः दृष्टि' दर्शनयोग्या यथा भवति तथा तामवतेत्यनेन दृष्टं फलं यत् तत्साधने प्रयत्नं कुरुतेति अर्थान्तरमपि ध्वन्यते । दैवपुरुषकारयोः पुरुषकारः बलीयान् इति पुरुषकारवादसमर्थकः । वृत्तमुपजातिः ॥७॥

१६, देवेन्द्रस्य स्तम्भनं तत्सेनायाः क्षतिरित्यादिकं दैत्यानां समरविद्याकौशल्यप्रदर्शकमिति भावः ।

१७, स्तम्भनक्षत्यादिचिकित्सा वैद्यविद्याप्रभावेण मन्त्रशक्त्या च साधितेत्यभिप्रायः ।

१८. ओषधीना राजा-चन्द्र' । "ओषधीशो निशापतिः" इति नामलिङ्गानुशासनम् । राजयक्ष्मा-प्रबलरोगविशेषः - क्षयरोगः ।

१९. निदानं रोगकारणम् । परिहार -औषधेन मन्त्रजपादिना च सम्पादित इत्यभिप्रायः । तथा चोक्तम्-"पूर्वजन्मकृतं पापं व्याधिरूपेण

रोगनिवारणमोषध्या राज्ञि मयीदृशमोषध्या ।
रोगमबाधमपोढु भो भूरि युवामिह शक्तौ भोः ॥८॥

नेपथ्ये–२०. अहो ! च्यवनऋषिः शापेन वृद्धो भूतः विकृतिं च गतः । स इदानीं स्वस्य वीर्यवर्णस्वरसम्पादनाय नासत्यौ प्रार्थयते । कुत्र स्तस्तौ । ?

---

बाधते । तच्छान्तिरौषधैर्दानैः जपहोमसुरार्चनै." इति । क्षयग्रस्तः यथा दिने दिने कृशो भवति तथा चन्द्रकलाः कृष्णपक्षे प्रतिपदारभ्य अमावास्यापर्यन्त क्रमेणादृश्या भवन्तीति कारणेनात्र चन्द्रस्य क्षयः उत्प्रेक्षितः । तन्निवारणम् अश्विनीकुमारमुखात्सम्पादितमिति च उत्प्रेक्षावचनमेव । वस्तुतत्त्वं तु कृष्णपक्षे चन्द्रस्य भूमेस्सुदूरं सञ्चारवशात् सूर्यतेजसा चन्द्रप्रभायाः तिरोधानात् रात्रौ चन्द्रः अस्पष्टमसम्पूर्णं दृश्यते । अमावास्यायां सम्पूर्णकलाः तिरोहिता भवन्ति । अश्विनीनक्षत्रसन्निधानेन चन्द्रप्रकाशः वर्धते । इषमासे पूर्णिमा अश्विनीनक्षत्रयुक्ता भवति । तदा चन्द्रस्य प्रकाशः विशेषेण भवति । अत अत्यन्तशुक्लं वस्तु शरच्चन्द्रचन्द्रिकाधवलमिति कविभिर्वर्ण्यते । इति चात्र ज्योतिश्शास्त्रतत्त्वम् ।

रोगनिवारणमिति–ओषध्याः राज्ञि-ओषधीशे मयि ईदृशं रोगनिवारणं मम राजयक्ष्मपरिहारः ओषध्या-औषधप्रभावात्सम्पादितः । भो भोः-हे अश्विनीकुरौ रोगमबाधमपोढुं सुखेन रोगपरिहारकार्ये इह युवां भूरिशक्तौ-युवामेव बहुधा शक्नुथ. नान्ये इति प्रशंसावचनम् । इदं पद्यं उष्णिक् छन्दोजातेषु ९१२ तमवृत्तेषु ९९ तमं वृत्तं भवति । तस्य हंसपदीति नामनिर्देशः क्रियते । तल्लक्षणम्-"हंसपदी भभमैः ख्याता" । इति ।

२०. शापेन कस्यचिन्महानुभावस्य शापेन । वीर्यवर्णस्वरसम्पादनाय-शरीरे वीर्यं (बलम्) अङ्गेषु वर्णः (कान्तिः) वाचि स्वरः (ध्वनिशक्तिः) तेषां पुनरधिगमाय ।

अश्विनीकुमारौ—२१. आवामत्रैव स्वः अचिरात्तत्र भवावः। (इति स्वयमनुचिंत्य च्यवनं प्राप्य रसायनविशेषप्राशनेन तं युवानं सुवर्णं सुस्वरं च कुरुतः)

च्यवनः—२२. भो आश्विनेयौ! भवदनुग्रहेणाहमिष्टसिद्धो भवामि। भवतोर्भैषज्यकौशल्यं देवेषु यथा, अस्मादृशेषु ऋषिजनेषु यथा तथैव भूलोके रोगपीडितानां जनानां विषयेषु सद्भिषङ्मुखात् प्रसरतु।

अश्विनीकुमारौ—२३. तथास्तु।

(तदा इन्द्रः प्रत्यक्षो भवति। तं दृष्ट्वा)

अश्विनीकुमारौ—२४. अभिवादयावहे अमराधिपमस्मत्स्वामिनम्।

इन्द्रः—२५ दीर्घमायुर्भवतु भवतोः। अहं कामरूपो भूत्वा युष्मदापादितं सर्वमपश्यम्। ममापि युवाम् आयुर्वेदोपदेशे गुरुस्थानीयौ भवतमित्यभ्यर्थये।

---

२१. रसायनविशेषप्राशनेन - अस्मिन्नौषधविशेषे रसः 'पादरस' इति विदितो धातुविशेष एव मुख्य इति व्युत्पत्त्या रसादिधातुविशेषकृतौषधविशेषस्य प्राशनेन-सेवनेन च्यवनस्स्वस्य यौवनं सुवर्णरूपं निजस्वरं च पुनस्सम्पादितवानित्यभिप्रायः।

२२. ब्रह्मादिदेवेषु-च्यवनादिऋषिजनेषु च नासत्ययोः वैद्यप्रभावो विदितः तथा योग्याना भिषजाम् आयुर्वेदतत्वान्युपदिश्य तन्मुखान्मर्त्यलोकनिवासिनामपि आरोग्यभाग्यं तन्वाथां युवामित्याशयः।

२३. अश्विनीकुमाराभ्यामेतदङ्गीक्रियते।

२४. अस्मत्स्वामिनं प्रभुम्।

२५. भवन्तौ गुरुस्थानीयौ भवतम्-मम आयुर्वेदोपदेशं कुरुतमित्यभिप्रायः।

अश्विनीकुमारौ–२६. किमाश्रितजनेष्वप्यभ्यर्थना? आत्मने यद्रोचते तत्सम्पाद्यते। अप उपस्पृशतु भवान्।

इन्द्रः–२७. (तथा कृत्वा) अवहितोऽस्मि। उपदिश्यताम्।

अश्विनीकुमारौ–२८. (कर्णे एवमेवमिति दक्षादधीतां स्वीयामायुर्वेदसंहितां उपदिशतः)

इन्द्रः— हे अश्विनौ!

आयुर्वेदोपदेशादहमिह सुकृती संहितां सङ्ग्रहार्थां
निर्मायाऽस्याविशेषाद्भुवनहितमतिः क्षेमचिन्तापरर्षीन्।
आत्रेयादीन् सकाले भुवि समुपदिशन् रोगबाधां जनानां
हृत्वा श्रित्वाधिपत्यं त्रिभुवनकलितं भामि कीर्त्याप्तदेहः ॥९॥

---

२६. इन्द्रः स्वामी अश्विन्यादयः आश्रिताः। अपां स्पर्शनं मूलमन्त्रोपदेशसिद्ध्यर्थं सम्प्रदायानुगतम्।

२७. एकाग्रचित्तो भवामि।

२८. कर्णे एवमेवमित्यादिना मूलमन्त्र एवोपदिश्यते। तत्प्रभावेण उपदेष्टव्यज्ञातव्यांशास्सर्वे प्रतिभान्तीति द्योत्यते।

आयुर्वेदेति - इह - त्रिभुवने, आयुर्वेदोपदेशात् - अश्विनीभ्यामुपदिष्टस्यायुर्वेदस्य प्रभावात् अहं सुकृती-अहं (इन्द्रः) कृतकृत्यो भवामि। सङ्ग्रहार्थां संहितां निर्माय-सङ्ग्रहरूपामायुर्वेदसंहितामारचय्य अस्याः विशेषाद्भुवनहितमतिः- अनया संहितया भुवनस्य विशेषहितं भवत्विति बुद्ध्या क्षेमचिन्तापरान् आत्रेयादीन् - लोकहितैषिणः आत्रेयादिमहर्षीन् सकाले समुपदिशन्-यदा यदा ऋषयः मदन्तिकमागच्छन्ति तदा तदा तेषामुपदेशं कुर्वन् जनानां रोगबाधां हृत्वा विविधाऽमयसञ्जातानि दुःखानि निवार्य त्रिभुवनकलितम् आधिपत्यं श्रित्वा-त्रिलोकप्रभुत्वमाश्रित्य कीर्त्याप्तदेहः भामि-यशोवान् भूत्वा प्रकाशे। अनेन इन्द्रेणापि सङ्ग्रहरूपायुर्वेद संहिता निर्मिता-सा ऋषिभिरधिगतेति भावार्थो बोध्यः। स्रग्धरावृत्तम् ॥९॥

अश्विनीकुमारौ—२९. तथास्तु । तदेव प्रियमावयोः ।

इन्द्रः— जीवे सञ्जीविनी भूयान्मत्प्रसादाद् भिषङ्मणिः ।
भिषजां जायते वैद्ये परीक्षा तन्मुखाद्भुवि ॥१०॥

अश्विनीकुमारौ—३०. असदनुग्रहेण सर्वे भिषजः यदा चिकित्सापेक्षा तदा तत्परीक्षायां विजयेन समुत्तीर्णा भवन्त्वित्याशास्वहे ।

इन्द्रः—३१. प्रमोदस्थानमेतत् ।

अश्विनीकुमारौ—३२. साधयामः ।

(इति सर्वे निष्क्रान्ताः)

---

२९. तदेव प्रियं लोकक्षेमकरणमेवाऽऽवाभ्यां रोचते ।

जीवेति—मत्प्रसादात् - मदनुग्रहात् जीवे - जीवदेवनामकराजपुत्रे सञ्जीविनी-तन्नाम्नी तत्पत्नी भिषङ्मणिर्भूयात्-भैषज्यकुशला भूयादित्याशीः । इयमाशीः कथं प्रकरणोचितेत्युक्ते-मया ऋषिभ्यो यदुपदिश्यते पारम्पर्येणोपदिष्टानां तत्र निष्णातानां भिषग्वराणा तद्वैद्यकौशल्य सञ्जीविनीकृतपरीक्षया विदितं भवतीत्युच्यते । यथा-भुवि-भूतले भिषजां वैद्ये परीक्षा-वैद्यानां चिकित्साविद्यापरीक्षा तन्मुखाज्जायते-सञ्जीविन्या क्रियते । इत्यनेन अश्विनोरभिप्रेतं लोकक्षेमं मर्त्यलोकभिषगायत्तं तेषामायुर्वेदपाण्डित्यं समीचीनं पूर्ण रोगनिवारणक्षमं भवति वा न वेति परीक्षया निर्धारितव्यमित्याकूतम् ।

३०, परीक्षायां सर्वे भिषजः विजयिनो भवन्त्विति तेषामाशासनमश्विनीकुमाराभ्यां कृतम् ।

३१. यदि ते विजयिनः तदा ममापि सन्तोष इत्यभिप्रायः ।

३२. स्वस्वस्थानं गच्छाम इति यावत् ।

॥ इति द्वितीयदृश्यव्याख्या ॥

# ॥ तृतीयदृश्यम् ॥

---

( विष्कम्भः )

(आत्रेयभरद्वाजकाश्यपविश्वामित्रादय ऋषयः प्रविशन्ति)

काश्यपः—१. भो महर्षिवर्यौ आत्रेयभरद्वाजौ ! भवतोरिन्द्रलोकगमने कोऽयमुद्देशः, कृपया कथ्यताम् ।

भरद्वाजः—२. सुरलोकंप्रति आवाभ्यामेकदैव नागम्यत ।

आत्रेयः—३. मयैव प्रथममगम्यत । मदुद्देशस्तु—

चिन्ताक्रान्तो विविधगदतः पीडितान् जन्मिनोऽहं
दृष्ट्वा श्रुत्वा परिहृतिरतो गोत्रभिद्धस्तगेति ।
आयुर्वेदाधिगमधिषणः प्राप्य तं प्राप तं भू-
लोके रोगापहरणकृते संहिता संस्कृतास्ते ॥११॥

---

'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । सक्षेपार्थस्तु विष्कंभो मध्यपात्रप्रयोजितः ।" इति विष्कम्भलक्षणम् । अत्र मध्यपात्र इत्यस्य शुद्धपात्र इत्यर्थोऽभिधेयः असिन्नाटके सर्वैरपि संस्कृतभाषयैव व्यवहारसिद्धिरिति हेतोः ।

१. इन्द्रस्य सकाशादात्रेयभरद्वाजौ आयुर्वेदसंहितामधिगतवन्ताविति कथामवतारयितुमयं काश्यपस्य प्रश्न. । कृपयेत्यनेन वृत्तान्तश्रवणेऽत्यादरस्सूच्यते ।

२. आत्रेयभरद्वाजौ विभिन्नकाले सुरलोकमगमगच्छतामिति कथनार्थमयं निषेधः । अगम्यतेति भावे लङि प्रयोगः

३. प्रथमगत आत्रेय स्वोद्देशं प्रकटयति—

काश्यपः— ४. भृशं सन्तुष्टास्स्मः । भवताऽधिगतायुर्वेदस्य स्वकृतसंहितां शिष्यमुखात्प्रचारयति भवानिति मन्ये ।

आत्रेयः—५. उपदिष्टाः खलु अग्निवेशादयः । कृतानि तैस्तन्त्राणि श्रुतानि तानि साध्वित्यनुमोदितानि च ।

काश्यपः—६. भो महर्षे ! भूतलवासिनां सौभाग्यमेतत् । भगवन् ! भरद्वाज ! भवान् स्वोदन्तं प्रकटयितुमनाः किम् ?

भरद्वाजः–७ शृणुत भोः—

दृष्ट्वाऽहं रोगबाधा जनततिविसृताः कार्श्यदा वर्ष्मणां ताः ।
चेष्टानां बाधिका या निजबलसरणे रोधका धीतमोदाः ।
कारुण्याद्देवलोकेऽधिगतपरिहृतिर्वज्रिणाऽऽदिष्टमार्गे
ख्यातायुर्वेदराशौ परिचयवशतो रुग्विनाशाय शक्तः ॥१२

---

चिन्तेति—विविधगदत.-अनेकरोगेभ्यः-'गदत.-' इत्यत्र पञ्चम्यास्तसिल्-गदेभ्य इत्यर्थः । पीडितान् जन्मिनः-बाधितान् जनान् अहं दृष्ट्वा श्रुत्वा-कुत्रचित् प्रत्यक्षतो दृष्ट्वा क्वचिच्छ्रुत्वा (साक्षाद्वा-कर्णाकर्णिकया वा) अतः परिहृतिः-तादृशरोगेभ्यः परिहारोपायः, गोत्रभिद्धस्तगेति-सुत्रामायत्तेति श्रुत्वा आयुर्वेदाधिगमधिषणः-आयुर्वेदोपदेशप्राप्तिपरः, प्राप्य तं इन्द्रमधिगत्य प्राप तम्-आयुर्वेदोपदेशमधिगतवान् । किंच भूलोके-मर्त्यलोके रोगापहरणकृते-सर्वव्याधिप्रशमनाय संहिता संस्कृताऽऽस्ते-काचित्संहिता मया रचिताऽस्ति । मन्दाक्रान्तावृत्तम् ।

४. संहिताप्रचारविधानं पृच्छति काश्यपः ।

५. तदेवाऽऽत्रेयो विशदयति । स्वशिष्या अपि पृथक् पृथक् संहिता रचितवन्तः तास्सर्वा निर्दुष्टा इति कथयति ।

६. भरद्वाजवृत्तान्तश्रवणाय पुनः प्रश्नः ।

७. भरद्वाजः कथयति—

किं बहुना ! आयुर्वेदप्रभावेणाऽहं अन्ये रोगपीडिता ऋषयोऽपीदानीं हतगदाश्चिरायुषो भवामः ।

काश्यपः–८. किं भवतापि काचित्संहिता रचिता ?

भरद्वाजः–९. रचिता प्रकटिता च शिष्यमुखात् ।

---

दृष्ट्वेति—लोके-भूतले या रोगबाधाः चेष्टानां बाधिकाः-प्राणिनां शरीरावयवेन्द्रियैर्निसर्गेण कर्तव्यानां व्यापाराणा प्रत्यर्थिन्यः निजबलसरणे रोधिकाः- रसरक्तप्रचलने प्रतिबन्धिकाः वीतमोदाः- बुद्धिमान्द्यप्रदाः ताः वर्ष्मणा कार्श्यदाः- शरीरकार्श्यकारिण्यः जनततिविसृताः- जनसमूहे व्याप्ताः रोगबाधाः- विविधोपतापजनितदुःखानि दृष्ट्वा-विदित्वा कारुण्यात्-सञ्जातानुकम्पस्सन् देवलोके अमरलोके वज्रिणोपदिष्टमार्गे - इन्द्रेणोपदिष्टरीत्या अधिगतपरिहृतिस्सन् - प्राप्तरोगप्रतीकारस्सन् ख्यातायुर्वेदराशौ-प्रसिद्धवैद्यशास्त्रे परिचयवशतः- सम्यगभ्यासबलात् रुग्विनाशाय शक्तः- रोगनिवारणं कर्तुं प्रभवामि । अत्र पदस्वारस्यम्-'जनततिविसृता' इत्यनेन ग्रन्थ्यादिसाङ्क्रामिकरोगा अभिहिताः । 'वर्ष्मणां कार्श्यदाः' इत्यनेन क्षयादयः, 'चेष्टानां बाधिकाः' इत्यनेन धनुर्वायुपार्श्ववाय्वादयः, 'निजबलसरणे रोधिकाः' इत्यनेन आमजनितज्वरादयः 'वीतमोदाः' इति पदेन मूर्च्छापस्मारादयः गृहीताः। 'कारुण्या'दित्यनेन भरद्वाजस्य व्याधिग्रस्तेषु प्राणिषु कियती करुणेति ध्वन्यते । परिहृतिरित्यनेन साध्यसाधनयोरभेदप्रतिपत्तिरङ्गीकृता । स्रग्धरावृत्तम् ।

अथ भरद्वाजेन तन्मित्रबन्धुभिश्चानुभूता आयुर्वेदोक्ता औषधशक्तिरत्र निदर्शनमुखात्सूचिता ।

८. भरद्वाजेनापि आयुर्वेदसंहिता रचितास्ति वेति ज्ञातुमयं प्रश्नः कृतः ।

९. स्वेन रचिता संहिता प्रसिद्धा भवतीति तात्पर्यम् ।

विश्वामित्रः–१०. अहो ! आयुर्वेदप्रभावः ।

भरद्वाजः–११. भवतापि तत्प्रभावः श्रुतपूर्वः ?

विश्वामित्रः–१२. सर्वविदितमेतत् यदादिशेषः मत्स्यमूर्तेर्भगवतो विष्णोस्सकाशादधिगतवेदः आयुर्वेदेऽप्युपदिष्टः । स कदाचिद्भुवि चरो भूत्वा जनैरनुभूयमानान् विविधाऽऽमयान् वीक्ष्य कृपया रोगपरिहाराय यत्तन्त्रं निर्मितवान् तदेव 'चरक'नाम्ना विश्रुतम् ।

आत्रेयः—१३ बहुमन्तव्योऽयं व्यापारः । साधवो लोकहिताय प्रगल्भन्ते ।

विश्वामित्रः–१४. शृणुतेमामन्यां कथाम् - त्रिजगत्पालको महेन्द्रः धरण्यां प्रसृतान् विविधविचित्ररोगान् साक्षाद्वीक्ष्य कृपार्द्र-

---

१० विदितायुर्वेदप्रभावः विश्वामित्रः सन्तोषं प्रदर्शयति ।

११. कथं तस्य आयुर्वेदप्रभावपरिचय इति पृच्छति ।

१२. चरकग्रंथनिर्माणकारणं विशदयति । अत्र चरतीति चरः (चरधातो'ष्ट' प्रत्ययः)- गुप्तवेषधारी आदिशेषः, प्राणिभिरनुभूयमानानां दुःखानां समीक्षणार्थं भुवि कृतसञ्चारवशादादिशेषस्य 'चरक'इति नाम । तत्कृतग्रंथस्यापि 'चरक' इति नाम । अयमेव पतञ्जलिरिति च विदितः । यथा"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन । योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि" इत्यादि वचनान्यत्र प्रमाणानि । अनेन योगसूत्रकर्ता-व्याकरणभाष्यकर्ता - चरकसंहिताकर्ता-च एक एव पतञ्जलिरादिशेषावतारः- स एव चरकनाम्ना विदितो भवतीति स्पष्टमभिहितम् ।

१३. साधूनां नैजो व्यापारः सूच्यते ।

१४. अत्र धन्वन्तरिप्रादुर्भावकारणमावेद्यते स इन्द्रस्याऽऽज्ञया अवततारेति कथासारः । तस्य दिवोदासनाम्ना काश्यां प्रसिद्धिः तन्मुखा-

चेताः स्वसभायां स्थितं धन्वन्तरिमाहूय-"त्वं दिवोदासनाम्ना काश्यां प्रादुर्भूया" इत्यादिदेश। तथैव सः काशीराजो भूत्वा काले तपोवृत्तिमाश्रित्य रोगनिदानतत्परिहारोपायकलितां संहितां चकार। तच्छिष्यास्तमधीत्य लोके भिषग्वरा भवन्ति ।

काश्यपः-१५. क एते तच्छिष्याः ? कथयतु भवान् ।

विश्वामित्रः-१६. तेऽप्यनेके । तेष्वेको मत्सुतः ।

सर्वे-१७ तव सुतोऽपि भिषग्वरः ? कथं कथम् ?

विश्वामित्रः—शृण्वन्तु भवन्तः—

दिवोदासो नाम्ना ह्यजनि भुवि धन्वन्तरिरयं
स काश्या राजा सन् भिषगतिहितं तन्त्रमकरोत् ।
ममादेशात्पुत्रस्तमगमदलं शिष्यविधिना
तदीये तन्त्रेऽसौ सुचिरमुपदिष्टः करुणया ॥१३॥

---

दनेकशिष्याणामायुर्वेदोपदेशः। तेभ्यः भूलोके सर्वत्रायुर्वेदप्रचार इत्यादिकं सूचितम् ।

१५. धन्वन्तरिशिष्याणां नाम्ना परिचयार्थमयं प्रश्नः ।

१६. अनेकेऽपि ते विश्वामित्रसुतः 'सुश्रुतः' तेष्वेक इति सूचितम्।

१७. कथं कथमिति द्विरुक्तिः सुश्रुतवृत्तान्तश्रवणे कुतूहलं कथयति।

दिवोदास इति—धन्वन्तरिरयं धन्वन्तरिमहर्षिः दिवोदासो नाम्ना ह्यजनि भुवि-दिवोदासनाम्ना भुवि अवततारेत्यर्थः। सः- दिवोदासः काश्या राजा सन्-काश्यां राज्यशासनं कुर्वन्नेव भिषगतिहितं तन्त्रमकरोत्-वैद्यानां बहूपयोगकरं वैद्यग्रन्थं रचयामास। ममादेशात्पुत्रः- मम पुत्रः मे आज्ञया अलं शिष्यविधिना तमगमत्-शिष्यैराचरितव्याः पूर्णा ये विधयः- समिदाहरणादिरूपाः तैस्सहेत्यभिप्रायः, तं दिवोदासमधिगतवान्। करुणया तदीये तन्त्रे असौ सुचिरमुपदिष्टः-स दिवोदासः दयालुर्भूत्वा स्वीये आयुर्वेदशास्त्रे बहुकालं मम पुत्रमध्यापयामासेति सङ्ग्रहार्थः। शिखरिणीवृत्तम्। तल्लक्षणम्-"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति ॥१३॥

सर्वे–१८. ततस्ततः ।

विश्वामित्रः—१९. मत्सुतोपदिष्टं सर्वं सुश्रुतं शिष्यवर्गैः । तेनाऽयं 'सुश्रुत' इति विश्रुतः। तदीयतन्त्रमपि 'सुश्रुत' मिति श्रूयते ।

सर्वे– वयमिह परितुष्टाः पुण्यगण्यप्रभावा-
द्भिषगमलसुबोधादायुरारोग्यकार्यात् ।
जनहितहृदयास्ते सन्तु भूमौ सुकीर्त्या
रुगपनयविचारे बुद्धिरेषां प्रभायात् ॥१४॥

---

१८. तदनन्तरवृत्तान्तश्रवणकुतूहलेन ततस्तत इति पृच्छा ।

१९. यतः विश्वामित्रसुतेनाध्यापितं सर्व शिष्यैस्सुश्रुतं सम्यगवगतं ततस्तस्य सुश्रुत इति नाम प्रसिद्धमभूत् । तत्कृतग्रंथस्यापि सुश्रुतमिति तन्नाम्ना प्रसिद्धिः यथा शिशुपालवधकाव्यस्य 'माघ' इति नाम-किरातार्जुनीयस्य 'भारवी'ति ।

वयमिति–इह - अत्र, पुण्यगण्यप्रभावात्-पुण्याश्च ते गण्याश्चेति विशेषणोभयपदकर्मधारयः पुण्यशालिनः गणनीयाश्च ये भिषग्वराः तेषां महिमश्रवणात् । वयं परितुष्टाः- सन्तुष्टा भवाम । ते-भिषजःभिषगमल-सुबोधात्-अन्येषां भिषजां शुद्धोपदेशात् आयुरारोग्यकार्यात्-दीर्घायुःप्रदानि आरोग्यसम्पादकानि यानि कार्याणि तेभ्य इत्यर्थः । भूमौ-भुवि सुकीर्त्या-कीर्तिमन्तो भूत्वा जनहितहृदयाः- प्राणिभ्यः हितं हितकरं हृदय मनः येषां ते तादृग्रूपा भवन्तु । अपि च तेषां बुद्धिः- भिषङ्मतिः रुगपनयविचारे प्रभायात् रोगपरिहारविषये संस्फुर्यादित्याशंसोक्तिः । प्रभायात्–'भा' धातोः आशीर्लिङि रूपम् । मालिनीवृत्तम् ॥२४॥

प्राकाश्यते इति–अत्र-अस्मिन् लोके जीवे गदाहततनौ सति-जीवदेवः यदा रोगग्रस्तो भवति तदा भिषजां समूहैरनेकैरायुर्वेदविशारदैः विधिवत्-शास्त्रोदितमार्गेण कृता अमला दोषरहिता चिकित्सा - वैद्यप्रयोगरीतिः सञ्जीविनीवरसतीकरतोऽभिजाता - सञ्जीविनीनामकजीवदेवधर्मपत्न्याः हस्त-

विश्वामित्रः—

प्राकाश्यतेऽत्र विपुला भिषजां समूहे-
  र्जीवे गदाहततनौ विधिवच्चिकित्सा ।
सञ्जीविनीवरसतीकरतोऽभिजाता
  तस्या मुदे विपदि जीवहिताय तेषाम् ॥१५॥

सर्वे—२०. तथास्तु ! तथास्तु !

॥ निष्क्रान्तास्सर्वे ॥

---

स्पर्शमहिमयुक्ता सती जीवहिताय स्वपतिभूतजीवदेवस्य रक्षणाय विपदि-जटिलरोगाक्रान्तिरूपाऽऽपत्काले प्राणिजातक्षेमाय तस्याः- सञ्जीविन्याः तेषां भिषजां च मुदे-फलितस्वकृतभिषक्प्रयोगजातसन्तोषाय प्राकाश्यते-सर्वत्र विशेषेण प्रसिद्धिं नीयते । अनेन नायिकानायकयोः परस्परानुरागः परस्परक्षेमचिन्तनं लोकहितैकपरता च ध्वनिता । प्राकाश्यते इत्यत्र प्रपूर्वक-आङ् पूर्वक 'काशृ'धातोः कर्मणि लटि प्रयोगः । वसन्ततिलकावृत्तम् ।

२०. अत्र तथास्त्विति ऋषिजनानुमोदः चतुर्थाङ्कविमर्शसन्धौ जीवदेवाख्यनायकस्य चिकित्साकाले सम्यक् फलदो भवतीत्युन्नेयम् । आत्रेयादिमहर्षिभिः चरकादिभिराचार्यैः सुश्रुतवाग्भटादिभिर्भिषग्वरैश्च महता प्रयत्नेन यदायुर्वेदरहस्यमधिगतं तत्सर्वं देववरात् सञ्जीविन्या सुखेन प्राप्त-मिति विष्कम्भमुखात् प्रकरणसङ्गतिरभ्यूह्या ।

॥ इति तृतीयदृश्यव्याख्या ॥

# ॥ चतुर्थदृश्यम् ॥

— तेजोवतीनगरप्रान्तोद्यानम् —

( ततः प्रविशति जीवदेवः प्रियदेवश्च )

(उभौ शिलापीठे उपविशतः)

जीवदेवः—१. भो मित्र ! अपि सेवितो वायुः ?

प्रियदेवः–२. अदृष्टः पदार्थः कथं सेव्यते ?

जीवदेवः–३. चक्षुषाऽदृष्टोऽपि वायुरिन्द्रियस्य गोचर एव ।

प्रियदेवः–४. कस्येन्द्रियस्य ?

जीवदेवः—५. स्पर्शेन्द्रियस्य ।

प्रियदेवः–६. तर्हि स्पर्शेनैव वायोस्सत्त्वं किमनुमीयते ?

---

चतुर्थदृश्यव्याख्या

१. जीवदेवः स्वसखेन मन्त्रिपुत्रेण प्रियदेवेन सह कदाचिद्वायुसेवनार्थं विहारोद्यानं गत्वा तत्र शिलापट्टिकायामुपविश्य तत्रानुभूतो वायुः शुद्धः आप्यायमान इति स्वयं बुध्वा सख्युरभिप्रायं पृच्छति ।

२. भृत्यः दृष्टमेव स्वामिनं सेवते - परिचरतीति यावत् । भक्तः दृष्टमेव देवताविग्रह देवमन्दिरे सेवते पूजयतीत्यर्थः । बुभुक्षुः दृष्टमेवान्नं सेवते अत्तीत्यभिप्रायः । परं तु वायु· न दृष्टः कथमयं सेव्यते इत्याशय. ।

३. सत्यं वायुर्नेत्राभ्यां न दृश्यते तथाप्ययमिन्द्रियगोचर एव ।

४. नेत्रमपीन्द्रियमेव तस्यागोचरो वायुः कस्येन्द्रियस्य गोचर इति प्रश्नः

५. त्वचः–स्पर्शेन्द्रियस्येति समाधानम् ।

६. स्पर्श· गुणः । त्वचानुभूयमानस्पर्शगुणेन किं वायुद्रव्यमनुमीयते ? इति संशयग्रहणेन पुनः प्रश्न· ॥

जीवदेवः—७. तथा शास्त्राणामभिप्रायः । यथा शब्देन आकाशस्य सत्त्वम् ।

प्रियदेवः—८. अस्तु तावदयं शास्त्रविचारः । भो मित्र ! वायुसेवनेन प्रयोजनं वा किम् ?

जीवदेवः—९. प्रयोजनं नाभविष्यच्चेदिह बहुजना बहिस्थले शुद्धवायुसेवार्थं न समचरिष्यन् ।

प्रियदेवः—१०. वायोश्शुद्धत्वं नाम ?

जीवदेवः—शृणु—

भूतान्यव्याजशुद्धान्यत इह पवनस्सेव्यतेऽसौ प्रयत्ना-
देहे प्राणः प्रवेशाद्रसपरिणतये भाति निःश्वासरूपः ।
उच्छ्वासाख्यो विशेषाद्भवति हि मलिनो धातुसंसर्गतोऽयं
देहाद्याति स्वशक्त्या प्रशुदयकरो देहसंरक्षणार्थम् ॥१६

प्रियदेवः—११. स्यान्नाम । कथमयं बहिरेव शुद्धः ?

जीवदेवः—शृणु प्राणतत्त्वमिदम् । —

---

७. तथैव । गुणभूतशब्दश्रवणेन आकाशद्रव्यमनुमीयते इति दृष्टान्तः। एतादृशानुमानं द्रव्यगुणयोस्समवायसम्बन्धमङ्गीकृत्य साध्यते । अन्ये तार्किकाः समवायसम्बन्धस्य नित्यत्वात् गुणप्रत्यक्षेण तदाश्रयद्रव्यमपि प्रत्यक्षम् । अतः वायोः त्वाचप्रत्यक्षं वदन्ति । वेदान्तिनस्तु समवायमेव नाङ्गीकुर्वन्ति परंतु तेषां द्रव्यं यथा प्रत्यक्षं गुणोऽपि तथैवेति मन्यन्ते ।

८. शुद्धवायोः जनाना प्रयोजन पृच्छति ।

९. प्रयोजनमङ्गीकृत्यैव सर्वे वायुं सेवन्ते इत्यभिप्रायः ।

१०. शुद्धवायुस्वरूपावगमाय प्रश्नः ।

भूतानि इति - भूतानि - पृथिव्यप्तेजोवाय्वाकाशात्मकपञ्चमहाभूतानि अव्याजशुद्धानि-स्वभावतः परिशुद्धानि । अतः-इति हेतोः पवन.-एतादृश-शुद्धवायुः, प्रयत्नादिह सेव्यते-हितकांक्षिभिः प्रयत्नपूर्वकं संपाद्य अस्मिन्

निश्वासोच्छ्वासधारा प्रवहति सततं घ्राणमूलाऽत्र जन्तो-
र्देहान्तर्बाह्यदेशे शुचिकृदशुचिकृद्वायुमाहात्म्यमेतत् ।
सङ्क्रात्या शुद्धवायुस्तदितरगुणवान् जायते सान्द्रदेशे
सङ्क्रान्तेर्वारणार्थं हितकरपवनस्सेव्यते ग्रामबाह्यः ॥१७॥

---

लोके निश्श्वासक्रियययानुभूयते निश्श्वासरूपः-नासापुटद्वारेण शरीरांतःप्रविष्टः, असौ-शुद्धवायुः देहे प्रवेशात्-शरीरप्रवेशनिमित्तेन, प्राणः- प्राणसंज्ञां भजन् रसपरिणतये-अन्नरसपरिणामसाधको भूत्वा-भाति - प्रकाशते, शरीरधारणं करोतीत्यर्थः। अयं शरीरे प्रविष्टो वायुः धातुसंसर्गतः-रसरक्तमांसमेदोऽस्थिमज्जाख्यषड्धातुनिष्ठमलसम्पर्केण विशेषात् मलिनः अत्यन्तमलिनो भवति । सप्तमधातुभूतशुक्रे मलो न भवति शुक्रं सप्तवारं पुटपाकेन शुद्धं सुवर्णमिव शुद्धमिति वैद्यशास्त्राभिप्रायः । तथामलिनः वायुः प्ररुगुदयकरः- अनेकरोगाणामुत्पादकः; अतोऽयं स्वशक्त्या-स्वभावत इत्यर्थः देहात्-शरीरात् नासापुटद्वारा उच्छ्वासाख्यः याति-उच्छ्वासरूपेण बहिर्गच्छति । इयं उच्छ्वासक्रिया देहसंरक्षणाय शरीरारोग्यसम्पादनाय भवति । स्रग्धरा वृत्तम् ॥१६॥

११. वायुः उद्यानादिबाह्यप्रदेशेष्वेव शुद्ध इति कथमिति प्रश्नः ।

निश्वासेति-अत्र - अस्मिन् लोके विद्यमानस्य जन्तोः- प्राणिनः घ्राणमूलात् - नासापुटद्वारा निःश्वासोच्छ्वासधारा निःश्वासरूपेण, उच्छ्वासरूपेण च वायोर्गतिः देहान्तर्बाह्यदेशे - सततं प्रवहति-शरीरस्य अन्तर्बहिश्च क्रमेण अनवरतं निद्रादशायामपि प्रचलति खलु । तत्र निश्वासरूपो वायुः शुचिकृत-शुद्धः उच्छ्वासरूपस्तु अशुचिकृत्-अशुद्धः- एतत्-इदमेव वायुमाहात्म्यं वायोःप्रभावः-तत्त्वमिति यावत् । शुद्धवायुः सांद्रदेशे सङ्क्रान्त्या तदितरगुणवान् जायते-जनैः पश्वादिभिश्च निबिडे प्रदेशे शुद्धवायुः अशुद्धसम्पर्केणाशुद्ध एव भवति। सङ्क्रान्तेर्वारणार्थं तत्सङ्क्रमणं मा भूदिति दृष्ट्या हितकरपवनः सेव्यते-शुद्धवायुं भजन्ति जनाः ग्रामबाह्यः- ग्रामात्-लक्षणया

प्रियदेवः–१२. सखे ! तद्यथा वा भवतु । कुतस्तवायं वेषः ?
शिरसि शीर्षकं श्मश्रुखण्डनं श्रवणकुण्डले दण्डधारणम् ।
उरसि मालिका पादपादुके करगते हिते छत्रभोज्यके ॥
जीवदेवः–१३. अहमद्य स्नातकव्रतस्थः ।
प्रियदेवः—१४. स्नातकव्रतं विप्राणाम् ।

---

यत्र यत्र अशुद्धवायुसङ्क्रान्तेरवकाशोऽस्ति तत्प्रदेशादित्यर्थः । बाह्यः बहिः-प्रदेशेषु - तादृशसङ्क्रान्तेरनवकाशप्रदेशेषु लभ्यमानो वायुरेव हितकरः-शुद्धत्वात् सेव्यते-उपयुज्यते । इति वायुतत्त्वं सङ्ग्रहेण निरूपितम् । स्रग्धरावृत्तम् ॥ १७॥

१२. तदुत्तरेण तृप्तः प्रियदेवः जीवदेवस्य स्नातकव्रतोद्देश्यक-वेषं दृष्ट्वा तद्विचारं करोति ।

शिरसीति–शिरसि शीर्षकं शीर्षे उष्णीषम्, श्मश्रुखण्डनं श्मश्रुवर्धनेन श्मश्रुप्रवृद्धिं खण्डयित्वा अलङ्कारार्थं सूक्ष्मश्मश्रुधारणम् । श्रवणकुण्डले-श्रोत्रे परितो वा श्रोत्रयोरधोभागयोर्वा वृत्ताकारकुण्डलधारणम् । दण्ड-धारणम्"दण्डो दशगुणो भवेत्" इति न्यायेन सञ्चारशीलानाम् अध्वगादीनां हस्ते दण्डधारणं यथा तथा हस्तेन दण्डावलम्बनम् । उरसि मालिका-कण्ठमावृत्य तदधोवक्षस्थले रत्नहारादिधारणम् । पादपादुके-पादयोः उपानद्धारणम्, करगते हिते-छत्रभोज्यके एकस्मिन् करे वर्षातपनिरोधार्थं छत्रधारणम् अन्यस्मिन् करे बद्धपाथेयवस्त्रग्रन्थिधारणम् । अयमेव स्नातकस्य शास्त्रविहितो वेषः । तद्धानयं जीवदेवः । एतादृशवेषः कुत इति सख्युः प्रश्नः । संमतावृत्तम् । तल्लक्षणम्-"नयुगं भवेत्संमता लगौ ।" इति ॥ १८॥

१३. स्नातकस्य विहितं वेषं धारयामीत्यर्थः ।

१४. विप्रेषु स्नातकव्रताचरणं बहुलमित्यवबुध्यैवमुक्तिः ।

12

जीवदेवः—१५. न तथा। यदि जन्मतो वर्णशुद्धिः तदा स्नातकव्रतं भवति सर्वेषां द्विजशब्दशब्दितानां त्रैवर्णिकानाम्।

प्रियदेवः—१६. स्नातकव्रतोद्देशः कः ?

जीवदेवः—१७. द्वौ — एकः स्वेनाभ्यस्तानां सर्वविद्यानां देशान्तरेषु तत्र तत्र स्थितासु विद्वत्सभासु परीक्षावकाशः। तदथ देशसञ्चारः। अन्यः सत्कुलप्रसूतायाः स्वानुरूपायाः कन्यायाः अन्वेषणम्। लब्धा चेत्सा तद्वरणम्।

प्रियदेवः—१८. किमुभावपि साधितौ त्वया।

जीवदेवः—१९. प्रथमोद्देशः फलितः। यथा—

---

१५. 'न तथे'त्यनेन सोऽयमभिप्रायः न समञ्जस इत्युक्तम्। द्विजशब्दशब्दितानां द्विज इति व्यवहृतानां सर्वेषां त्रैवर्णिकानां स्नातकव्रतं विहितमेव। परं तु ब्राह्मणक्षत्रियवैश्येषु तद्व्रतं जन्मतो वर्णशुद्धिमपेक्षते। जन्मतो वर्णशुद्धिस्तु मातापितरौ अविगतषोडशसंस्कारौ यदि भवतः तज्जातपुत्रस्य जन्मतो वर्णशुद्धिरित्यभिप्रायः।

१६. इदानीं स्नातकव्रतोद्देशविचारः।

१७. ब्रह्मचर्याश्रमसमाप्तिसूचकसमावर्तनकर्मानन्तरं स्नातको भूत्वा एकवर्षपर्यन्तं देशेषु सञ्चारं कृत्वा विद्वत्सभासु कृतपरीक्षः प्रत्यागच्छेत् इत्येकोद्देशः। मार्गे यत्र कुत्र वा अनुरूपकन्यावरणमित्यपरोद्देशः। इति द्वौ उद्देशौ प्रदर्शितौ।

१८. शास्त्रोद्देशानुसारेण उभौ साधितौ वेति प्रश्नः।

१९. प्रथमोद्देशः साधितः। तमेव विवृणोति।

सञ्चारेति—योग्येषु देशेषु-सञ्चारार्थं विहितेषु देशविशेषेषु मया सञ्चारो बहुधा विहितः- बहुप्रकारेण मया सञ्चारः कृतः। स्वयमार्जितासु विद्यासु परीक्षामुखादलं विजयः प्राप्तः-मयाभ्यस्तविद्यास्वहम् अलं परीक्षितः- अलमुत्तीर्णो भवामि। अलमितिना परीक्षा बहुक्लिष्टापि तत्र विजयः

सञ्चारो बहुधा मयाऽद्य विहितो देशेषु योग्येष्वलं
विद्यासु स्वयमार्जितासु विजयः प्राप्तः परीक्षामुखात् ।
सत्कीर्तिर्भुवि साधिता बुधवरस्तुत्यप्रशस्त्यास्पदा
विद्यायां गुरुदत्तशिक्षणफलं सम्भाव्यते सार्थकम् ॥१९॥

प्रियदेवः–२०. द्वितीयानुगतेन त्वया द्वितीयोऽप्युद्देशः किं तथैव साधितः ?

जीवदेवः—२१. पित्रादेशं विना तदुद्देशः कथं साध्यते ।

प्रियदेवः–२२. किं विवाहप्राप्तये वधूवरणाय मातापितृसम्मतिः प्रधाना ?

जीवदेवः–२३ तथैव सम्प्रदायः यतस्तौ हितकारिणौ अन्वयशुद्धौ बद्धादरौ दम्पत्योःश्रेयस्साधनाऽऽकांक्षिणौ ।

---

प्रथमश्रेण्यां प्रथम इति विद्याप्रागल्भ्यं व्यज्यते । बुधवरस्तुत्यप्रशस्त्यास्पदा-सत्कीर्तिर्भुवि साधिता-विद्वद्भिः प्रशंसापूर्वकं नानाविधसन्मानानि प्रदत्तानि मे । तथा सुयशः लोके मया लब्धमित्यभिप्रायः । विद्यायां मदभ्यस्त-विद्यासु, गुरुदत्तशिक्षणफलं सर्वज्ञमुख्यगुरुभिर्मे कृतं विद्याशिक्षणं सार्थकं सम्भाव्यते-सफलकमभूदिति ज्ञायते । मम गुरवः मे सम्यग्विद्याशिक्षणं दत्तवन्त इति तात्पर्यम् । अहं विद्यासु सुशिक्षित इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१९॥

२०. अनुरूपकन्याप्यधिगतेति प्रश्नः ।

२१. अत्र पितृजनकार्यमित्युत्तरम् ।

२२. मातापित्रादिगुरुजनैरेव स्वस्य विवाहार्थं कन्यावरणं कार्यं किम् ?

२३. एवमेवार्यसम्प्रदायः । कुलस्य शुद्धत्वं कन्यायाः आनुरूप्यं नवोढयोर्दम्पत्योः भाविक्षेममार्गस्यानुचिन्तनमेवमाद्यभ्युदयविचाराश्च अननुभवशालिसुतेभ्योऽपि तद्गुरवः विशेषतः समर्था इति भावः ।

प्रियदेवः—२४. तर्हि स्नातकफलोद्देशो विफलो भवति ।

जीवदेवः—२५. न तथा । पित्रनुमत्या स्नातकोऽपि स्वाभिमतां कन्यां वृणुयात् ।

संस्कारास्सर्वदा पाल्याश्श्रेयोऽवाप्तिर्ध्रुवात्र तैः ।
उदाराश्शास्त्रकर्तारस्सर्वेषां शुभशंसिनः ॥२०॥

अतः पितृप्रसादादहमचिरात्सद्वितीयो भवामि ।

प्रियदेवः—२६. पुण्यवांस्त्वं द्वितीयाधिगमेन द्वितीयाश्रमप्रवेशाय ।

---

२४. स्नातकव्रतस्य द्वितीयोद्देशः न फलितः। अतस्स व्यभिचरित इति सोल्लुण्ठनवचनम् ।

२५. न तथा भाव्यम् । शास्त्रोद्देशः न कदापि व्यभिचरति । पित्रादीनामनुज्ञां लब्ध्वा वरोऽपि कन्यां वृणुयात् ।

संस्कारेति-संस्काराः- विवाहादिसंस्काराः सर्वदा-निरन्तरं पाल्याः- अनुवर्तनीयाः । अत्र तैः श्रेयोऽवाप्तिर्ध्रुवा-अस्मिन् लोके संस्कारानुवर्तनेन सर्वाभ्युदयः निश्चितः । शास्त्रकर्तारः- श्रौतस्मार्तकर्मनिर्णयकाराः उदाराः न कदापि संकुचितदृष्टयः नापि लघुचेतसः । अपि तु दीर्घदर्शिनः विशालहृदयाः- अत एव सर्वेषां शुभशंसिनः । "नित्यं लोकास्समस्तास्सुखिनो भवन्त्वि"ति सर्वदाऽऽशंसमाना भवन्ति ॥२०॥ अतश्शास्त्रकारमतमवलम्ब्य पितरौ स्नातकस्य मम अनुरूपकन्याधिगमेन शीघ्रं विवाहं निर्वर्तयत इति मम भावना ।

२६. एतच्छ्रुत्वा प्रियदेवः स्वपितरौ स्वस्य विवाहाय न प्रयतेते इत्यनुसन्धानेन पुण्यवांस्त्वमिति साकूतं वदति ।

जीवदेवः—२७. त्वमपि मत्सखः । तवाप्यभिलषितं मया सहैव साधयेत्तव भागधेयम् । अलमतिमतिकृतायासेन । साधयाव-स्तावन्निजाऽऽवासम् ।

॥ इति निष्क्रान्तौ ॥

---

२७. पुरः यद्भविष्यति तदेव सत्त्वजुषां मनसि स्फुरतीति द्योतनायेव स्वविवाहेन सह स्वस्य सख्युर्विवाहोऽपि भविष्यतीति समाधानोक्ति वचनभङ्ग्याऽऽविष्करोति । अलमित्यादिना 'नोचितमावयोरेवं प्रश्नोत्तर-परम्परया कालयापनम्' इति सूचितम् ।

॥ इति चतुर्थदृश्यव्याख्या ॥

---

# ॥ पञ्चमदृश्यम् ॥

## ॥ भुवनेश्वरीमन्दिरम् ॥

(ततः प्रविशति पूजापरिकरपात्रहस्ता सञ्जीविनी सखी प्रियदेवी च)

सञ्जीविनी-१. सखि प्रियदेवि ! अपि स्नाता त्वम् ?

प्रियदेवी-२. अस्नाता देवीगृहप्रवेशं नार्हति ।

सञ्जीविनी-३. किमर्थं तव देवीपूजेच्छा ?

प्रियदेवी—४. तदर्थम्, यदर्थं त्वमत्राऽऽगता ।

सञ्जीविनी—५. मम देवीपूजेच्छा तदनुग्रहप्राप्तये ।

प्रियदेवी—६. कमुद्दिश्य तदनुग्रहप्राप्तीच्छा ?

सञ्जीविनी—७. 'किं' पदस्थाने 'कं' पदप्रयोगः किमुद्देश-पूर्वकः ? ।

---

॥ पञ्चमदृश्यव्याख्या ॥

१. स्नानेन धौतवस्त्रधारणेन शुचिर्भूत्वा देवमन्दिरं प्रविशेदित्याकूतेनायं प्रश्नः ।

२. अतः एतत्सम्प्रदायं सम्यग्विदितवत्या प्रियदेव्या सदुत्तरं कृतम् ।

३. सञ्जीविनी सखीहृदयविज्ञानाय पृच्छति ।

४. देवपूजोद्देश उभयोरेक एवेति इति कथितम् ।

५. "भक्त्या तुष्यन्ति देवता." इति देवीपूजया तदनुग्रहः सम्पादितो भवति ।

६. कम्-"अनुरूपं पतिमनुगृहाण मे" इति तव देवीपूजोद्देशः कीमिति पृच्छति ।

७. 'कं' शब्द. पुल्लिङ्ग. । तत्प्रयोगे तवाऽऽशयः कः ?

प्रियदेवी—८. ममोद्देशः तव कल्याणं भूयादिति ।

सञ्जीविनी—९. तवाऽपि तद्भवत्येव । यतः पूजोद्देशः एक एवाऽऽवयोः ।

प्रियदेवी—१०. प्रचलतु पूजा ।

सञ्जीविनी—११. तव गीतेन सह प्रचलति ।

प्रियदेवी—१२. गानशीला त्वम्, त्वमेव प्रथमं गाय किमपि सुगीतम् । तदनु तदर्थं त्वामनुसरामि ।

सञ्जीविनी-१३. यथा रोचते ते-(इति गायन्ती देवीं पूजयति)

---

८. यदा पुल्लिङ्गनिर्देशो मया कृतस्तदा तल्लिङ्गबोध्यपुंव्यक्त्यात्मकवरेण सह तव विवाहो भवत्वित्यभिप्रायः श्लेषभङ्ग्या तव शुभं भवत्विति सव्याजमभिहितम् ।

९. अनेन सख्या उद्देशस्सम्मत इति सूचितम् ।

१०. इदानीं देवीपूजाव्यापारे प्रविशति तयोर्मतिः ।

११. देवतापूजासमारम्भे पुरुषाणां मन्त्रा यथा स्त्रीणां गीतानि तथेति प्रतीतिः । तदनुसारेण गीतेन सह पूजाप्रचलनार्थं किमप्युचितं गीतं प्रारभस्वेति सखीं प्रेरयति ।

१२. सञ्जीविनी गाने निपुणेति सर्वत्र प्रसृतप्रतीत्यनुरोधेन "त्वमेव प्रथमं गीतं प्रारभस्व त्वामनु अहमपि गायामि" इति सखीवचनम् ।

१३. "यथा रोचते ते" इत्यनेन स्वस्या गीतकौशलमनुमोद्य गायति ।

सुरनारीति—सुरनारीहितबोधे - देवतास्त्रीणां यानि यानि हितानि तेषां प्राप्त्युपायान् ताभ्यः उपदिशतीति तात्पर्यम् । वरदे-असकृदासामन्येषां च इष्टार्थान् स्वयं ददातीति वरदा तस्यास्सम्बुद्धिः- वरदे । अहं पदि मोदे-तव पादारविन्दपूजायै मम चित्तं हर्षयुक्तं भवति । यतस्त्वं वरदा मत्कृतपूजया सन्तुष्टा मम वरं दास्यसीत्याकूतम् । मे दैन्यजभावं हर-एता-

सुरनारीहितबोधे वरदे ते पदि मोदे
हर मे दैन्यजभावं कुरु मे वाञ्छितलाभम् ।
अजजाये हरिजाये हरजाये कुरु जायां
जननि त्वं भुवि मां मे जननं स्याद्बहुभव्यम् ॥२१॥

आकाशवाणी–१४. सन्तुष्टाऽस्मि कल्याणं भवतु ।

---

वत्पर्यन्तं ममानुरूपो वरो न सम्पादित इति या चिन्ता तज्जनितव्यसनं यत् तत्परिहर । मम पतिं देहीति भावः । अथवा मम भविष्यत्पतेः अनेके रोगाः प्रादुर्भवन्तीति यन्मे दैन्यं तज्जनितदुःखं परिहृत्य मामनुगृहाणेति अभिप्रायः । मम वाञ्छितं कुरु-ऐहिकसुखविषयकं यद्वर्तते तत्सम्पादनाय च मामनुगृहाणेत्यर्थः । हे जननि भुवि मां जायां कुरु-वरवरानुग्रहेण मम विवाहकार्यं साधय । एतत्कार्यं त्वयैव साध्यम् । कुतः ? त्वमपि परमपुरुषस्य जाया भवसि तत्साधने तवानुभवोऽस्ति । तदनुभवेन मामपि तथा कुर्विति ध्वनिः । त्वया सम्पादितताहग्वरः परमपूरुषः । स अजः-जननमरणवर्जितः । स हरिः- पापपरिहारकः स हरः-संसारतापहारकश्च । अत एव अजजाये हरिजाये हरजाये इति त्वां सम्बोधये । अथवा त्वमेव अजजाया-सरस्वती हरिजाया-लक्ष्मीः हरजाया-गौरीति देवतात्रयस्वरूपा अतस्त्वत्पूजया मे विद्यासम्पत् भाग्यसम्पत् सौभाग्यसम्पच्च भूयादिति समुचिता सात्विकप्रार्थना व्यञ्जनावृत्या द्योतते । मे जननं मम जन्म, बहुभव्यं स्यात्-सर्वसम्पत्समृद्ध्या विलसत्वित्याशंसा । इदं पद्यं गुणभूषावृत्तनिबद्धम् । तल्लक्षणम्-"लघुयुग्मादधिकाद्या मद्नार्ता गुणभूषा" । अथवा-"सभनैर्युग्यसगैर्युग्यतितुर्या गुणभूषा" इति । इदमष्ट्याख्यच्छन्दोजातेषु ६५५३६ वृत्तेषु १३१०८ तमवृत्तं भवति । अस्य गुणभूषेति नामनिर्देशः । अनेन कविना स्वीयग्रन्थेषु स्तुतिकुसुमाञ्जल्यादिषु तद्वृत्तं प्रयुक्तम् ॥२१॥

१४. आकाशे स्वयमुद्भूता वाक् आकाशवाणी । यतः आकाशः विभुः ततः केनाप्यापादितानां शब्दानां तरङ्गाः विद्युत्तरङ्गभावमापादिताः

सञ्जीविनी—१५. किमिदमाश्चर्यम् ! कुत आगतेयमाशीः ? सखि ! किमियं त्वदुक्तिप्रभवा ? भ्रान्ताऽस्मि तत्त्वं मां बोधय ।

प्रियदेवी—१६. प्रियसखि ! तव भक्त्या प्रसन्ना देवी त्वामेवमनुगृह्णाति ।

सञ्जीविनी-१७. गीतेन त्वमपि सम्पादय देवीप्रसादम् ।

प्रियदेवी—तथा । (इति गायति)

पदनूपुरकलशिञ्जितमुखवेदितकरुणे
करुणारसहृदये मम हृदयेश्वरि सदये ।

---

सर्वतः एकदैव अपेक्षितयन्त्रविशेषद्वारा पूर्वध्वनिमुत्पादयन्तु नाम । परन्तु केनाप्यनापादितशब्दः ध्वनिं कथमुत्पादयतीति संशये "चिच्छक्तेस्सर्वत्रास्तित्वमङ्गीकृत्य देवतानां सर्वशक्तिमत्वात् यत्र कुत्र वा सर्वात्मकबुध्या देवता पूज्यते - तन्मुखाच्छब्दोत्पत्तिरङ्गीक्रियते । "परोक्षप्रिया इव हि देवाः" इति श्रुतिवचनबलात् परोक्षभूतदेवताजनितवाक् आकाशवाणीत्यास्तिकानां श्रद्धालूनां समाधानं कार्यकारणवादिनां समाधानाय एवमुच्यते । अतः चिच्छक्तिरूपा श्यामलादेवी "सर्वनादात्मिके, सर्वशब्दात्मिके" इति कालिदासेन श्यामला दण्डके संबोधिता । 'यादृशी भावना यत्र सिद्धिर्भवति तादृशी'इत्यभियुक्तोक्त्या यदा अन्तःकरणवृत्तिः एकाग्रस्थितया कस्मिंश्चिद् व्यापारे प्रवृत्ता भवति तदा तद्व्यापारसिद्ध्यभिधायिका काचिद्वाक् प्रसन्नेव कर्णमूलमागतेव परिभाव्यते । सैवाकाशवाणी । इदमाध्यात्मिकतत्त्वं सम्यग्विचारं विना न विज्ञायते । इत्यत्राऽत्र तद्विचारेण । अत्र पूजया देवतासन्तुष्टिः तदनुग्रहवचनं च सूचितम् ।

१५. अशरीरवाणीस्मरणेन आश्चर्ययुक्ता सञ्जीविनी सा वाणी सखीमुखोत्पादितेति भ्रान्त्या मन्यते ।

१६. देवतानां महिमा ईदृशः इति भ्रान्तिपरिहारोक्तिः ।

१७. तर्हि त्वमपि सगीतां पूजां कृत्वा देव्या अनुग्रहं सम्पादयेत्यर्थः ।

सदयाकृतशरणागतवनिताजनभरणे
मरणं मम करणं तव सुखदा भव वरदा ॥२२॥

आकाशवाणी—१८. सन्तुष्टास्मि कल्याणं भवतु ।

प्रियदेवी-१९. चित्रमिदम्! कैवं वदति! सखि सञ्जीविनि देव्या त्वदर्थकृतं प्रसन्नमाशीर्वचनमनुवदसि किम्?

सञ्जीविनी-२०. अहमिव त्वमपि भ्रान्ताऽसि। देवतानुग्रहस्सततमीदृशः।

---

पदेति—पदनूपुरकलशिञ्जितसुखवेदितकरुणे-भुवनेश्वरीपदयोः विधृतौ यौ सकिङ्किणीकौ मञ्जीरौ ताभ्यां जनितः यदव्यक्तमधुरो ध्वनिविशेषः तन्मुखान्निवेदिता करुणा यस्यास्तस्यास्संम्बुद्धिः। तव करुणानुग्रहं तव चरण-मञ्जीरध्वनिरेव अस्मानावेदयतीति तात्पर्यम्। त्वं करुणारसहृदया दयारस-एव[*] हृदये यस्यास्सा तस्यास्सम्बुद्धिः । मम हृदयेश्वरि मम हृदयस्य प्रभुस्थानीया या तस्यास्सम्बुद्धिः । मम दहराकाशे त्वामनुचिन्तयामीति भावः। अत एव सदये-दयाशालिनि-दुःखपरिभूतानां भक्तानां अनुग्रहाय त्वं प्रभवसीति तात्पर्यम्। अत्र करुणारसहृदयत्वं स्वाभाविकं सदयत्वं भक्तिसहभावोदितमिति भेदाङ्गीकारात् नार्थपौनरुक्त्यमिति वेदितव्यम् तदेव विशदयति-सदयाकृतशरणागतवनिताजनभरणे-शरणागतानां (पूजादिना) स्त्रीणां रक्षणं त्वदायत्तमिति भावः। मम मरणं मद्रक्षणं तव करणं-तव कार्यम्। अतः मम त्वं सुखदा वरदा च भव-मे सुखं वरं च देहीत्याकूतम्। मुक्तपदग्रस्तमिदं पद्यं करिणीवृत्तनिबद्धम्। तल्लक्षणम्-"सनजा अपि नभसाः शरयतिभिर्यदि करिणी"। इति।

१८. पूर्ववदशरीरिण्या वाचा देव्यानुग्रहः सूचितः।

१९. अस्या अपि आकाशवाणीश्रवणे भ्रान्तिः।

२०. समुचितोक्त्या भ्रान्तिपरिहारः कृतः।

प्रियदेवी–२१. आवामुभे भुवनेश्वरीप्रसादभाजौ । अस्तिव-त्स्व् । किमत्राऽऽगमने त्वं मात्राऽनुज्ञाता ?

सञ्जीविनी–२२. तस्याः प्रेरणयात्र ममागमनम् । किं त्वमपि मात्रा अत्र प्रेषिता ?

प्रियदेवी–२३. सखि ! शृणु-"सञ्जीविनी यत्र गच्छति त्वं तत्र गच्छ, सा यदाचरति तदेव त्वमाचर । सा यदनुभवति त्वमपि तदेवानुभव" इति मे मातुराज्ञा । अतस्त्वां कृतदेवीपूजामनोरथां श्रुत्वा तदाज्ञयाऽत्राऽऽगताऽहम् ।

सञ्जीविनी–२४. प्रियं मे, प्रियं मे ।

प्रियदेवी—२५. सखि ! अहम्—

प्रियदेवी प्रियाद्वच्मि प्रियं देवी ददाति ते ।
प्रियस्य त्वं प्रिया भूया इति देव्याः प्रियं वचः ॥२३॥

---

२१. सञ्जीविनी देवीपूजार्थं स्वयमेवाऽऽगता वा मातुराज्ञयाऽऽगता-वेति निर्धारणायाऽयं प्रश्नः ।

२२, मात्रा प्रेरिता आगतेत्युक्त्वा सख्या आगमननिर्धारणाय पृच्छति ।

२३. अनेनोत्तरेण सञ्जीविनीप्रियदेव्योस्सहचारित्वं दृढीकृतम् ।

२४. 'प्रियं मे' इति वचनं सहचारित्वश्रवणजातप्रीतिभावं व्यनक्ति ।

२५, अहमित्यादिना प्रियशब्दमनुकृत्य देव्या अनुग्रहस्य भावं प्रपञ्चयति ।

प्रियदेवीति–देवी भुवनेश्वरी ते प्रियं वरं ददाति-अनुगृह्णाति । त्वं प्रियस्य-भर्तुः प्रिया-इष्टा भूयाः- भवेति देवीप्रियं वचः- भुवनेश्वर्याः प्रीतिपूर्वकोक्तम् आकाशवाणीद्वारा प्रयुक्तं वचनम् अहं प्रियदेवी-तन्नामिका सखी प्रियाद्वच्मि-प्रेमभावेन ते निवेदयामि । अनुष्टुप् वृत्तम् ।

सञ्जीविनी—२६. कथं जानासि देवताहृदयम् ?

प्रियदेवी—२७. तथा शंसति मे हृदयम् ।

सञ्जीविनी—२८. अतस्त्वम्—

प्रिया देव्याश्च यस्मात्त्वं कथ्यसे देवताप्रिया ।
प्रियदेवकरस्पर्शात् प्रिया तस्यास्त्वयि प्रिये ॥२४॥

साधु । देवतायै मङ्गलगीतमाकलयावः ।

प्रियदेवी—२९. तथास्तु ।

उभे—मङ्गलाङ्गि तदेश्वरि प्रियमङ्गलं जयमङ्गलं
मङ्गलेश्वरि मङ्गकारिणि मङ्गलं शुभमङ्गलम् ।

---

२६. देवताया अभिप्रायः त्वया कथं विदित इति प्रश्नः ।

२७. मम मनसि इदानीं यत्प्रेरणं तत्प्रमाणेनैवाऽहमिदं शंसामि । इत्यनेन भाविसम्भवः शुद्धचित्ते प्रस्फुरतीति मनस्तत्त्वमभिहितम् । एवमेव "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति कालिदासोक्तिः ।

२८. अतस्त्वमिति सखीप्रशंसा । यथा—

प्रियेति—प्रिया देवी यस्यास्सेति प्रियदेवीशब्दनिर्वचनेन सा सख्यपि भुवनेश्वर्याः परमप्रियेत्याकूतं प्रदर्शितम् । अयमर्थः- त्वं प्रिया-देवताप्रियेति वाक्येन व्याख्यातम् । अयि प्रिये-सखि ! त्वं प्रियदेवकरस्पर्शात्-प्रियदेवाख्यवरस्य पाणिग्रहणेन तस्य प्रिया इष्टा भार्या असि-भवसीति साशंसावचनम् ।

पूजासमाप्तिसूचकमङ्गलाचरणाय प्रेरणम् ।

२९. अनुमोदः प्रदर्शितः ।

मङ्गलाङ्गीति—हे मङ्गलाङ्गि ईश्वरि-हे मङ्गलदेवते जगज्जननि तव प्रियमङ्गलं जयमङ्गलं भवत्विति शेषः । मङ्गलाचरणमुत्सवान्ते पूजान्ते वा क्रियते । तस्योद्देशस्तु मया कृता पूजा तव इष्टा जयप्रदा भवत्विति मङ्गलाशंसा । हे मङ्गलेश्वरि मङ्गलदेवते-सर्वमङ्गलमाङ्गल्येत्यादिना प्रसिद्धे ।

अङ्गनाजनमङ्गलार्थिनि मङ्गलं जयमङ्गलं
सङ्गदायकभावशालिनि मङ्गलं शुभमङ्गलम् ॥२५॥

सञ्जीविनी—३०. प्रियसखि प्रियदेवि ! देवीचरणकमलप्रसादपुष्पं स्वीकुरु । अहमपि तच्छिरसि धारयामि । (इति प्रसादपुष्पेण केशपाशमलङ्करोति)

प्रियदेवी—३१. यथा वदति प्रियसखी । (इति स्वयमपि तथा करोति)

सञ्जीविनी—३२. मा भूत्कालविलम्बः । गृहं गच्छावः ।

प्रियदेवी—३३. तथा करवाव ।

(इति निष्क्रान्ते)

॥ इति द्वितीयोऽङ्कस्समाप्तः ॥

---

सङ्गकारिणि-वधूवरघटनकारिणि तव मङ्गलं शुभमङ्गलं भवत्विति पूर्ववन्मङ्गलाशंसा । अङ्गनाजनमङ्गलार्थिनि - स्त्रीजनमाङ्गल्याभिवर्धिनि सङ्गदायकभावशालिनि-सच्छीलयोर्दम्पत्योस्सर्वदा शुभाकांक्षिणि शुभदायिनि तव मङ्गलं शुभमङ्गलं भवत्विति प्रार्थनाशंसा ।

३०. पूजाप्रसादग्रहणाय सखीं प्रचोद्य स्वयमपि प्रसादपुष्पं स्वकेशपाशे धारयति ।

३१. सखी च तथा करोति ।

३२. गृहं प्रति देवीमन्दिरान्निर्गमनाय सूचना ।

३३. स्वानुमोदः ।

॥ इति पञ्चमरहस्यव्याख्या ॥

इति श्रीवेङ्कटरमणार्यविरचिते "जीवसञ्जीविनी"नामनाटके द्वितीयाङ्कस्य स्वीया 'रसोल्लासि'न्याख्या व्याख्या समाप्ता ।

# ॥ तृतीयोऽङ्कः ॥

---

## प्रथमदृश्यम्

— ज्योत्स्नानगरोद्यानम् —

नेपथ्ये—१. (a) अहो ! असत्स्वामी कलानिधिः कलानिधिस्संवृत्तः । यतः

लोकान् ह्लादयति स्तुतैश्शुचिकरैर्मित्राप्ततेजोमयै-
र्नित्यं तोषयति प्रशस्तविबुधान् हस्तैस्सुधास्यंदिभिः ।
सस्यान् पोषयति प्रशीतलजलैर्यत्नात्सुसम्पादितैः
कौमुद्याऽऽहितभासुरास्य वसुधा राजन्वती राजते ॥१॥

(ततः प्रविशति कलानिधिः, सह सख्या महिषी चन्द्रिका च)

---

१. (a) अहो इत्याश्चर्यसूचको निपातः । आश्चर्यं तु असत्स्वामी कलानिधिः-कलानिधिर्नामाऽसत्प्रभुः कलानिधिस्संवृत्तः-चन्द्र इव भवतीति । यत इति तयोरौपम्यवर्णनसूचनम् ।

लोकानिति—यथा कलानिधिश्चन्द्रः मित्राप्ततेजोमयैः-सूर्यादधिगततेजोरूपैः स्तुतैः- शंसनीयैः शुचिकरैः- शुद्धकिरणैः-ज्योत्स्नयेति यावत् । लोकान् ह्लादयति-प्राणिनः प्रीणयति । प्रशस्तविबुधान्-श्रेष्ठानमरान् सुधास्यन्दिभिः हस्तैः- अमृतवर्षिभिः किरणैः तोषयति-तर्पयति । सस्यान् तरुलतादीन् यत्नात्सुसम्पादितैः-प्रयत्नपूर्वकं प्राप्तैः शीतलजलैः-शीतवारिभिः पोषयति-अभिवर्धयति । अत एव अस्य कौमुद्या-चन्द्रस्य चन्द्रिकया वसुधा जगती आहितभासुरा प्राप्तप्रकाशा राजन्वती-चन्द्रवती राजते-प्रकाशते । तथैव अयं कलानिधिः- राजा-मित्राप्ततेजोमयैः मित्रैः-मन्त्रिसचिवादिद्वारा आप्तं - समधिगतं तेजः- राज्यधौरन्धर्यसामर्थ्यं तद्रूपैः स्तुतैः- सर्वैः प्रशंसितैः शुचिकरैः सत्येनासादितषोडशांशरूपबलिभिः लोकान्-समस्तप्रजाः

कलानिधिः-१. (b) देवि ! पश्यात्र वसन्तविलासम्—
ऋतुरयमनिलाढ्यो भाति भूरिप्रसूनै-
श्शुकपिककलहंसैस्सारसैर्वृक्षबृन्दैः ।

आह्लादयति-सन्तोषयुक्ताः करोति । अनेन अय राजा मन्त्रिपुरोहितादि-भिस्सह राज्यतन्त्रालोचनं कृत्वा शास्त्रोक्तरीत्या करान् प्रजाभ्यः अर्जयित्वा दक्षतया प्रशस्ततया राज्यं पालयतीति सूचितम् । प्रशस्तविबुधान्-स्वदेशस्थान् श्रेष्ठान् विद्वदादीन् सुधास्यन्दिभिः हस्तैः-अमृतवर्षवत्सन्तुष्टिजनकदक्षिणादि-बहुमानैः तोषयति-प्रीणयति । अनेन अयं राजा उदारशीलः-साधुजनरक्षकः अनाथपालक इति सूचितम् । यत्नात्सुसम्पादितैः- विशेषधनमुपयुज्य महा-नदीप्रमुखजलाश्रयेभ्यः स्राविते‌न वारिवारणादिजलाशयेन घटीयन्त्रमहा-कुल्याक्षुद्रकुल्यादिद्वारा प्रापितनीरधाराप्रसारैः प्रशीतलजलैः- सर्वसस्याभि-वृद्ध्यनुकूलशीतवारिभिः सस्यान् पोषयति । यवगोधूमादिसस्यान् आम्रौ-दुम्बरादिवृक्षान् जातीमल्लिकादिलताविशेषान् समृद्धान् करोति । अनेन राज्ये कृषीवलादीनां यद्यद्धितं तत्तत्सम्पादनेन सर्वान् समृद्धाहारवस्त्रादियुतान् करोतीति सूचितम् । अस्य वसुधा राज्यं कौमुद्या-कोः मुत्-कुमुत्-भुवनतोष इति यावत्, तत्सम्बन्धिनी कौमुदी-तोषावहकार्याणि तया आहितभासुरा-तेभ्यस्सम्पादितकीर्तिशोभि भवति । अत एव सा वसुधा-तद्राज्यं राज-न्वती-समीचीनो राजा यस्यास्सा-योग्यराजयुक्तेति भावः सुराजपालित मितियावत् । राजते-प्रकाश्यते । अत्र सलिलमयश्चन्द्रः सूर्यकिरणमूर्च्छनेन प्रकाशवान् भवतीति ज्योतिस्तत्वम्-ओषधीशश्चन्द्र इति श्रुतितत्वम्-देवाः चन्द्रकलाः पिबन्तीति पौराणिककथासारः चन्द्रकिरणद्वारा सस्यादिषु रसनिष्पत्तिरिति भौतिकविज्ञानतत्वम्-राजा प्रजाभ्यः विशेषतः कृषीवलेभ्यः षोडशांशमेव करं गृह्णीयादिति धर्मशास्त्रनियमः सप्ताङ्गोपेतराज्यशासनेन राजा कीर्तिमान् भवतीति अर्थशास्त्रोक्तराजनीतिरित्यादयः विद्वद्भिरूह्याः । अत्र पूर्णोपमा रूपकमित्यादयोऽलङ्कारा भवन्ति । स्रग्धरावृत्तम् ॥१॥

तरणिकिरणमालातापतप्ताऽबलानां
बलकृदतिमुदं यो योगवित्सन्तनोति ॥२॥

अत्र शान्तिरसोऽयस्सूचितः। वक्ष्यमाणवसन्तर्तुवर्णनादिकं यथायोग्य समाख्यस्थायिभावस्य विभावानुभावव्यभिचारिभावत्व संपद्यते । अत्र रसविचारः- प्रथमाङ्के तावत् प्रस्तावनाया नटीसूत्रधारालापे ' हास्यरसः" जीवदेवस्य विद्याभ्यासावसरे महामायापरेशसदर्शनेन, संजीविन्याः सङ्गीतकलाभ्यासकाले वाणीब्रह्मसंदर्शनेन च, अद्भुतरसादयः भवंतीति आपाततो द्योत्यते । विचारिते रसतत्त्वे, संजीविनीजीवदेवयोर्बाल्यवयस्कत्वोस्सतोः तयो रत्यादिस्थायिभावानां समुदयस्य नावकाशः । अनूढयोस्तयोः कथं वा नायिकानायकव्यवहारः । तदभावे तयोः तात्कालिकरत्यादिभावाः गौणा एव, आलङ्कारिकमते । तथैव द्वितीयाङ्ककथाविमर्शेन करुणभयानकबीभत्साद्भुतहास्यशान्तिरसस्फुरणं च पूर्वोक्तहेतुभि गौणमेव । इति संग्रहोक्तिः ।

१ (b) वसन्तविलासः- वसन्तर्तौ विद्यमाना वस्तुस्थितिः ।

ऋतुरिति—अयमृतुः- वसन्तर्तुः अनिलाढ्यस्सन् - मन्दमारुतेन युतस्सन् भूरिप्रसूनैः- अनेकविधपुष्पैः शुकपिककलहंसैः- शुकाः पिकाः कलहंसाश्चेति बहुपदद्वन्द्वः । एवजातीयपक्षिविशेषैः- सारसपक्षिभिश्च कमलैर्वा वृक्षबृन्दैः- तरुसमूहैः भाति-प्रकाशते । किंच तरणिकिरणमालातापतप्ताऽबलानाम् - आतपतापबाधया व्याकुलितानामध्वगानां प्रोषितभर्तृकाणामिति यावत्। बलकृत्-वृक्षच्छायाया श्रान्तिनिवारणेन-विविधफलसेवनेन शैत्यसौरभ्यमान्द्यगुणोपेतवायुसेवनेन च शरीरस्य बलम्, शुकपिकादिप्रकृति सौन्दर्याऽवलोकनेन मनोबलम् अस्मिन् वसन्ते जनानां तत्रापि मार्गचारिणां स्वभावतो भवतीति तात्पर्यमनुसन्धाय बलकृदित्युक्तम् । तथा योगवित्-भार्याभर्तृसंयोगस्य-वियोगिनामेकत्र सम्मेलनस्य योगाभ्यासादितपोरूपकार्याणां च विवाहोपनयनादिसकलकल्याणकार्यकलापानां च अवकाशप्रदोऽयं काल

चन्द्रिका—२. न मे मोदावहोऽयम् ।

कलानिधिः—३. कुतः ?

चन्द्रिका—४. मच्चित्तमन्यत्र ।

कलानिधिः—५. अन्यत्र कुत्र ?

चन्द्रिका—६. सञ्जीविन्याम् ।

कलानिधिः-७. किमसावसुखवती ?

चन्द्रिका-८. न सा, अहमेव तादृशी ।

कलानिधिः-९. कथं त्वं तादृशी, किं शरीरतापेन ?

चन्द्रिका-१०. हृदयसन्तापेन ।

कलानिधिः-११. अयि कुतस्तेऽयं सन्तापः ?

चन्द्रिका-१२. अयं सञ्जीविनीनिमित्तकः । शृणु भो देव ।

---

इति योगविच्छब्देन व्यज्यत । एव गुणोपेतस्सन् अतिमुदं परमहर्ष सन्तनोति-कलयति-जनयतीति तात्पर्यम् । मालिनीवृत्तम् ॥२॥

२. कस्मिंश्चित् विशेषविषये व्यापृतमनस्कत्वात् चन्द्रिकायाः अयं वसन्तविलासः न सन्तोषजनक इत्युत्तरम् ।

३. तत्कारणावगमाय प्रश्नः ।

४. मम मनोव्यापारः विषयान्तरे वर्तते इत्युत्तरम् ।

५. तं विषयमेवावगन्तुमिच्छामीति प्रश्नस्य भावः ।

६. स्वसुतायास्सञ्जीविन्या विषये ।

७. किं दुःखपरीतेति यावत् ।

८. तादृशीत्यनेन अहमेव व्यसनाक्रान्तेति राज्या अभिप्रायः ।

९. तद्व्यसनं शरीरव्याधिनिमित्तकं किमिति प्रश्नः ।

१०. मनसि चिन्तयेत्युत्तरम् ।

११. सन्तापकारणं पृच्छति राजा ।

१२. सञ्जीविनीनिमित्तकचिन्तेति यदुक्तं तदुत्तरपद्येन स्पष्ट-

सञ्जीविनीयं सरसीरुहाक्षी तन्वी सुहासा बहुसुन्दराङ्गी ।
विद्यावती गीतकलाविलासा गृहे विलासात्परिशोभते मा ॥३

कलानिधिः–१३ ज्ञायते ।

चन्द्रिका–

विवाहयोग्या भवतीह भाग्याद्वरं वृणीते स वरो यदि स्यात् ।
स कुत्र को वाऽस्ति विचार्य कार्यं विवाहकार्यं विभवैस्तवार्य ॥

इति मम चिन्ता ।

कलानिधिः–

चिन्तयाऽलं चन्द्रिके ते चिन्तयेऽहं चञ्चलेऽद्य ।
चित्रलेख्यं चित्रबुध्या प्रेषयामो ब्राह्मणेन ॥५॥

---

भमिधीयते । सञ्जीविनीति-इयं सञ्जीविनी-अस्मत्सुता, सरसीरुहाक्षीत्यनेन मुखनेत्रशोभा, तन्वीत्यनेन शरीरसौष्ठव सुहासा-इत्यनेन सर्वदाऽऽनन्दयुक्त-मनोभाव. सुन्दराङ्गीति विशेषणेन शरीरसौन्दर्य विद्यावतीपदेन कलाकौशल्यं गीतकलाविलासेत्यनेन तस्यास्सङ्गीते विशेषाभिरुचि. एतास्सम्पदोऽभिहिता.। अस्मद्गृहे सर्वदा विलासयुक्ता परिशोभते-प्रकाशते इति तात्पर्यार्थः । उपजातिवृत्तम् ॥३॥

१३. सञ्जीविनीवृत्तान्तस्य सम्यग्विदितत्वात् ज्ञायते इत्युररीकार.।

विवाहेति–इय सञ्जीविनी विवाहयोग्या भवति-अस्याः विवाहस्यायं योग्यकाल इति भावः । भाग्यात्-दैवात् सः-वरः वरस्स्याद्यदि अनुरूपवरो भवति चेत् तं वरं वृणीते सन्तोषेण पाणिग्रहणं करोति । अभिहितकालस्या-पेक्षितत्वात् लट् प्रयोग' । हे आर्य पूज्य प्राणकान्त ! स वरः को वा भवति कुत्र भवति इति विचार्य-विचारं कृत्वा तव विभवैः विवाहकार्यं कार्यम्-राजवैभवानुसारेण तेन सह तस्या विवाहः निर्वर्तितव्य इत्यभिप्राय' । उपेन्द्रवज्रावृत्तम् ॥४॥

इति चन्द्रिका स्वचिन्तामाविष्कृतवती ।

चन्द्रिका—१४. सञ्जीविन्या आलेख्यं कुत्र प्रेष्यते

कलानिधिः—१५ यत्र यत्र योग्यवरस्य सम्भवः तत्र तत्र ।

चन्द्रिका—१६ न तथा। अस्ति खलु मार्ताण्डदेशे तेजोवतीनगरे प्रद्योतनामा नृपतिः ।

कलानिधिः—१७ श्रूयते ।

चन्द्रिका—१८. तस्य सुकुमारः कुमारः जीवदेव एव अनुरूपो वर इति मन्ये । अस्मत्कुमार्या आशयोऽपि तथैव ।

कलानिधिः—१९. तर्हि तत्रैव अन्यत आलेख्यवरो विप्रवरः ।

---

चिन्तयेति-हे चञ्चले चन्द्रिके-अयि चपलचित्ते प्रिये चिन्तयाऽलम् । त्वं एतद्विषयकचिन्तां मा कुरु । अहमद्य चिन्तये-अहमिदानीमेवं परिभावयामि । चित्रबुध्या वरस्य चित्रमानाय्य तदानुरूप्यं द्रष्टुमिति मत्या कलिता वयं ब्राह्मणेन चित्रलेख्यं प्रेषयामः- ब्राह्मणमुखात्सञ्जीविनीचित्रं वरस्य तद्बन्धुजनानां च दर्शनानुमोदनानुकूल्याय सम्प्रेषयामः । इदं पद्यं अनुष्टुप्छन्दोजातेषु २९६ वृत्तेषु ३९ तमवृत्तं भवति । अस्य चञ्चलेति नामनिर्देशः क्रियते । तल्लक्षणम्-"तौ श्रुतिभ्यां चञ्चला गौ" इति ॥९॥

१४. कं देशं प्रति चित्रं प्रेष्यते इति प्रश्नः स्वाभिमतवरं विना अन्यं प्रति न प्रेषितव्यमित्याकूतेन कृतः ।

१५. अनुरूपवरसम्पादनं यत्र यत्र शक्यं तत्र तत्रेति कलानिधेरभिप्रायः ।

१६. न तथेत्यादिना आलेख्यप्रेषणयोग्यं स्थलं निर्दिष्टम् ।

१७. प्रद्योतराजवृत्तान्तः मया विदित इत्यनुमतिः ।

१८. प्रद्योतभूपतिकुमारः जीवदेव एव सञ्जीविन्याः अनुरूपो वर इति स्वाभिप्रायं सञ्जीविन्या अभिप्रायं च सूचयति ।

१९. तच्छ्रुत्वा राजा प्रद्योतनिकटं चित्रलेख्यप्रेषणमङ्गीकरोति ।

चन्द्रिका—२०. अचिरात्सम्पाद्यतामयं कार्यभारः ।

कलानिधिः—२१. आगच्छ प्रासादमासाद्य अद्यैव ब्राह्मणमाह्वापयामः। (इति पत्न्या सह निष्क्रम्य प्रासादे भद्रासनमारूढो नृपः विप्रवरमाह्वापयति)

कलानिधिः—२२. सेवक ! देवयाजी ब्राह्मणोऽत्रानीयताम् ।

सेवकः—२३. यथाज्ञापयति देवः । (निर्गत्य ब्राह्मणेन सह पुनरागत्य) भो देव सम्प्राप्तोऽयं देवयाजी ।

कलानिधिः—
चन्द्रिका च } २४. नमो गुरुवर्येभ्यः ।

देवयाजी—२५. दीर्घायुष्मान् भव । दीर्घसुमङ्गला भव । भो राजन् किं कर्तव्यं मया ?

कलानिधिः—२६. भवन्तः कुमार्याः आलेख्यं प्रद्योतनृपतेर्हस्तं प्रापय्य तस्य कुमारस्यालेख्यमानयन्तु । तत्र जीवदेवस्य तन्मातापित्रोश्चाशयं विदित्वा तमस्मत्कर्णगोचरं कुर्वन्त्विति प्रार्थये ।

देवयाजी—२७. तथा । (इत्यालेख्यमादाय निष्क्रान्तः)

---

२०. शीघ्रं तथा क्रियतामित्यादरः प्रकाशितः ।

२१. तथा करोमीति राजा तां समादधाति ।

२२. देवयाजीति ब्राह्मणस्य सङ्केतनाम ।

२३. ब्राह्मणोऽत्रानीत इति यावत् ।

२४. राज्ञी राजा च ब्राह्मणस्याभिवादनमाचरतः ।

२५. उभाभ्यामुचिताशीः क्रियते ब्राह्मणेन ।

२६. ब्राह्मणेन कर्तव्यव्यापारः निर्दिश्यते । आशयं विदित्वा मम सुतां वधूत्वेन परिग्रहाय प्रभावतीप्रद्योतयोरभिप्रायम्, भार्यात्वेनाङ्गीकाराय जीवदेवस्याभिप्रायं च सम्भाषणमुखेन ज्ञात्वेत्यभिप्रायः ।

२७. तथा-यथोपदेशं सर्वं सम्पादयामीति ब्राह्मणवचनम् ।

कलानिधिः—२८. वयमप्यभ्यवहारकार्यं निर्वर्तयाम ।
चन्द्रिका—२९. तथा ।

॥ सर्वे निष्क्रान्ताः ॥

---

२८. भोजनकार्यं सम्पादयामेति राजा सूचयति ।
२९. तदेवानुमोदते राज्ञी ।

॥ इति प्रथमदृश्यव्याख्या ॥

# ॥ द्वितीयदृश्यम् ॥

— तेजोवतीनगरम् —

(विप्रः तेजोवतीनगरं प्रविश्य-स्वगतम्)

विप्रः—

मार्तण्डेषु सुखावहा वरपुरी तेजोवती राजते
प्रासादोऽत्र सभुवनो विलसति स्वर्णाञ्चितैर्गोपुरैः ।
प्रद्योतोऽपि धराधिपो गृहगतः सान्तःपुरो वर्तते
भात्येवं सुविराजितैः प्रचलितैर्दीपैः क्रमात्केतुभिः ॥६॥

१. परं तु प्रासादप्रवेशाय द्वारपालप्रसादः कथं भवेदिति चिन्तयामि । (किञ्चिदालोच्य) ज्ञातं केनचिद्बहुमानेन तोषयितव्या एते भृत्याः । (पुनः पर्यालोच्य) न न एते न काञ्चनापि बहुमान-

---

मार्तण्डेष्विति—मार्तण्डेषु मार्तण्डदेशे सुखावहा - सर्वेषां सुखा-वासयोग्या तेजोवती-सकलसम्पत्समृद्ध्या शोभितत्वात्तेजोवतीति प्रसिद्धा वरपुरी श्रेष्ठा नगरी राजते-विद्वद्भि - विदुषीभिः- ब्राह्मणोत्तमैः क्षत्रियवीरैः - धनिकैर्वैश्यैः- बलाढ्यैरितरैर्जनैः प्रकाशते । अत्र-अस्यां नगर्यां प्रासादः- महाराजस्य निवासस्थानं स्वर्णाञ्चितैर्गोपुरैर्विलसति-स्वर्णेन निर्मितगोपुरकलशादिभिश्शोभते । धराधिपः प्रद्योतोऽपि - प्रद्योतनामा भूपतिरपि सान्तः-पुरः- अवरोधजनैस्सह गृहगतः- गृहे एव वर्तते सन्निहितो भवति क्रमात्-क्रमेण सुविराजितैर्दीपैः- बहुप्रकाशवद्भिः दीपराजिभिः प्रचलितैः केतुभिः- सर्वदा प्रचलद्भिः ध्वजपताकाम्बरैश्च एवं भाति उक्तप्रकारेण राजते । शार्दूल-विक्रीडितवृत्तम् ॥६॥

१. विप्रः स्वयमेवालोचयति । राजनि प्रासादस्थेऽपि प्रासाद-प्रवेशः द्वारपालकानामनुमतिं विना न घटते । सामान्यतः अल्पभृतिकाः

मपेक्षन्ते। अस्मिन् देशे सर्वे धर्मपराः खलु। तर्हि सामवचनैः प्रीणयाम्येतान् (प्रासादद्वारमभिगम्य) (प्रकाशम्) भो द्वारपालाः! निवेदयत युष्मत्स्वामिने "ज्योत्स्नानगरादागतः कश्चिद्ब्राह्मणः चित्रफलकहस्तः राजचूडामणिं द्रष्टुमपेक्षते" इति।

द्वारपालः–२ विप्रवर्य! उपविश्यतामत्र क्षणकालम्। अहं प्रभुमिममवगत्य त्वामचिरात्तदन्तिकं नयामि।

विप्रः—३. तथास्तु।

द्वारपालकः—४. (अन्तः प्रविश्य-प्रणम्य) भो देव! ज्योत्स्नानगरादागतः कश्चिद्विप्रः देवं द्रष्टुमाज्ञां निरीक्षते।

प्रद्योतः—५. किमयं सविशेषचिह्नः?

द्वारपालकः—६. आं प्रभो तस्य हस्ते चित्रफलकमस्ति।

प्रभावती–७ वरान्वेषणायेति मन्ये।

---

सेवकाः कैश्चिद्बहुमानैस्सुमुखा भवन्ति। यत्र "यथा राजा तथा प्रजाः" इति न्यायेन सेवका अपि धर्मासक्ताः सत्यपरायणाः तत्र तेषां बहुमानापेक्षापि न भवति किल। तथैवाऽत्रेति पूर्वभावं परित्यजति। अत्र प्रियवचनैरेव प्रार्थनापुरस्सरमेते अनुकूला भवन्तीति पुनरभिसन्दधाति। तथैवाय विप्रः स्वस्यागमनं राज्ञे द्वारपालकमुखान्निवेदयति।

२. कश्चिद्द्वारपालकः तं विप्रमुपचर्य राज्ञे तस्यागमनं निवेदयितुं गच्छति।

३. विप्रश्च राजद्वारे राजाज्ञां निरीक्षमाणस्तिष्ठति।

४. सेवकः विप्रस्यागमनं राज्ञे निवेदयति।

५. किमप्ययं हस्ते कृत्वागत इति राजा पृच्छति।

६. तस्य हस्ते आलेख्यफलकमस्तीति निवेदयति।

७. विप्रः सचित्रहस्त इति श्रुत्वा राज्ञी एवमभ्यूहति।

प्रद्योतः—८. भवेन्नाम । इदानीमेव ज्ञायते । भोः सेवक तमिह शीघ्रं प्रवेशय ।

द्वारपालः—९. यथाज्ञापयति देवः । (इति निवृत्य विप्रेण सार्कं प्रत्यागच्छति)

उभौ—१०. (प्रद्योतः प्रभावती च सिंहासनादुत्थाय) प्रणम्यसे महाभाग !

विप्रः—११. शचीन्द्रसम्पत्समृद्धिरस्तु युवयोः ।

प्रद्योतः—१२. उपविश्यतामस्मिन्नासने ।

विप्रः—१३. (उपविश्य) इदं कलानिधेर्दुहितुश्चित्रम् । सुवीक्ष्यतां ।

(इति राज्ञो हस्ते चित्रफलकं समर्प्य, एवं वदति ।)

कन्येयं कमनीयकान्तिरुचिरा कामप्रिया कामिनी
कान्ता वा कनकेन कल्पिततनुर्जीवाश्रया जीवति ।
कान्ताया गुणशीलवृत्तलसितः कान्तो भवेत्स्वत्सुतः
कोऽन्यस्तत्सदृशोऽत्र भूरि सुकृती दाम्पत्ययोगे भवेत् ॥७

---

८. राजापि तथैवाऽशङ्कते । विप्रस्याऽऽगमनोद्देशं वेदितुमुत्सहते । अतस्तत्प्रवेशमाज्ञापयति ।

९. सेवकस्तं विप्रं राजनिकटं प्रापयति ।

१०. राजा राज्ञी च तमभिवादयेते ।

११. राज्ञे इन्द्रसम्पत् राज्ञ्यै शचीसम्पद्भूयादिति तस्याशीः । इन्द्र इव बलेन जयशाली भूत्वा शत्रून्निर्जित्य प्रजाः सुखेन पालयेति, शचीव सर्वसम्पत्सम्पन्ना लोकाननुगृहाणेति च क्रमेण आशीरर्थः सूच्यते ।

१२. प्रथममासनोपवेशोपचारः सम्मानसूचकः कार्यसिद्धिद्योतकश्च भवति ।

१३. सञ्जीविनीचित्रं राज्ञो हस्ते समीक्षणार्थं समर्प्य, एवमाशंसते ।

**प्रद्योतः—१४. देवि ! पश्येमां चित्रगतामार्याम्—**
**रतिमिव सुमनोज्ञां भारतीभूतिविज्ञां**
**कमलनयनशोभां भार्गवीसम्पदाभाम् ।**

---

कन्येति—इयं-यस्या रूपमालेख्ये चित्रिताऽऽस्ते सा कन्या-सञ्जीविनी कमनीयकान्तिरुचिरा-मनोहरलावण्योपेता-अनेन सौन्दर्यातिशयः द्योतितः । अत एव कामप्रिया कामिनी-शृङ्गारयोनेः कान्ता रतिरिव वर्तते इति वर्णनम् । कनकेन कल्पिततनु. कान्ता वा-सुवर्णनिर्मितस्त्रीविग्रहो वा सर्वाङ्गेष्वेकरूपं सुवर्णं द्योतयितुमियमुत्प्रेक्षा । कनकनिर्मितविग्रहोऽपि जड एवेत्यस्वारस्यं मनसि कृत्वा जीवाश्रया जीवतीत्युक्तम्-जीवेन युक्तः कनकनिर्मितविग्रह इव वर्तते इत्यभिप्राय. । जीवतीत्यनेन या जीविनी सा जीवति न तु जडा अत एवेय सञ्जीविनीनाम्नीति च ध्वनिः । अत्र श्लेषमर्यादया इयं वधू' जीवाश्रया जीवति-जीवदेवेन सञ्जातविवाहा यदि-तदा लोकेऽस्याः जीवितं सार्थकमित्यर्थो व्यज्यते । अयं व्यङ्ग्यार्थः सम्यग्ज्ञायते वा न वेति अभिधावृत्या वाच्यार्थ एव "कान्तायाः कान्तो भवेत्त्वत्सुतः" इत्यभिहितः । गुणशीलकान्तिलसितः- गुणै'- शौर्यवीर्यौदार्यादिगुणैः शीलेन सत्यार्जवादिशीलेन वृत्तैः- परोपकारादिसद्व्यापारैः लसितः शोभित इति वरस्य प्रशंसा । त्वत्सुत इति राजप्रशंसाऽत्र द्योत्यते । अत्र बहु सुकृती यः स एव तस्या दाम्पत्ययोगे भवेत् । तव सुतादन्यः को वा तत्सदृशोऽस्ति । त्वत्सुतसदृशोऽस्ति वा तस्याः सञ्जीविन्यास्सदृशः- समानवरोऽस्तीति वा अर्थः। न कोऽपीति तात्पर्यम् । सुकृतीत्यनेन यस्तां परिणयति स एव धन्य इति ध्वनिश्च । शार्दूलविक्रीडितवृत्तम् ॥७॥

१४. देवि पश्येति—चित्रगतामार्यां सञ्जीविनीस्वरूपावबोधकामालेख्यं दृष्ट्वा तवाभिप्रायं निबोधयेत्यर्थः ।

रतिमिति-रतिमिव सुमनोज्ञां-सुन्दरीम्, भारतीभूतिविज्ञाम्-सरस्वतीसम्पदभिज्ञाम्-विद्यावतीमित्यर्थः । कमलनयनशोभां सरोजाक्षीम्, भार्गवी-

विमलसुगुणशीलां पार्वतीमव्यशीला-
ममरनरवधूनां सुन्दरीं सुन्दरीणाम् ॥८॥

प्रभावती–१५. (प्रियहस्ताच्चित्रमानीय तां पश्यन्ती-) इयं चन्द्रिकाप्रतिबिम्बमिव भाति ।

प्रद्योतः—१६. काऽसौ चन्द्रिका ?

प्रभावती—१७. ज्योत्स्नानगराधिपस्य कलानिधिराजस्य महिषी ।

प्रद्योतः—१८. तव परिचितैव सा

---

सम्पदामां लक्ष्मीमिव तेजसा दीप्यमानाम्, विमलसुगुणशीलां सुगुणवतीम्, पार्वतींमव्यशीलां सर्वमङ्गलामिव मङ्गलकराम्, सुन्दरीणाम् अमरनरवधूनां सुन्दरीं सौन्दर्यवतीनां सुरनरनारीणां मध्ये अतिसुन्दरीम्–पश्येत्यन्वयः । अनेन रूपसौन्दर्ये इयं रतिः विद्याया वाग्देवता भाग्ये कमलनयना कमला मङ्गलविषये सर्वमङ्गला गुणवतीति मन्यमानस्य राज्ञः कन्यावलोकनविधिः सम्यक् सम्पादितः । मालिनीवृत्तम् ॥८॥

अत्र केवलचित्रदर्शनेन चित्रमातृकाभूतव्यक्तेः गुणशीलवृत्तादि-विज्ञानं कथं भवतीति प्रश्नः समुदेति । तस्य, चित्रशास्त्राभिज्ञः चित्रलेखकः व्यक्तिगतगुणशीलवृत्तादिकं शिल्पचमत्कारेण कलाकौशलेन च आलेख्य-दर्शनबोधनक्षमं कर्तुं कुशलो भवतीत्युत्तरं स्यात् ।

१५. इयं रूपेण मातर चन्द्रिकामनुसरतीति राज्ञीवचनम् ।

१६. राज्ञ्याः चन्द्रिका परिचिता । राज्ञस्तु तस्याः परिचयो नास्ति । अतः प्रश्नः ।

१७. राज्ञी स्वपरिचयं विशदयति ।

१८. सा कृतपरिचयेति राजाऽभ्यूहति ।

प्रभावती—

मञ्जुलवाग्गम्भीरा सञ्चितपुण्येन मातृसञ्जाता ।
अञ्जलिसुखसम्पुष्टा वञ्चितयोषिज्जनाप्तसौन्दर्या ॥९॥

१९. एवमेव सा । तथैषा सुकुमारी तत्कुमारी ।

प्रद्योतः—२०. भवतु, कुमारस्याऽऽशयं जानीहि । अहं विप्रेणात्रैव सम्भाषमाणस्तिष्ठामि ।

प्रभावती—२१. तथा । (इति गत्वा-कुमारालये स्वसुताय जीवदेवाय चित्रं दर्शयित्वा) कुमार ! पश्येदं चित्रम् ।

जीवदेवः—२२. मातः ! एतच्चित्रदर्शनेन वञ्चिता मा भूः ।

---

मञ्जुलेति-सा चन्द्रिका मञ्जुलवाग्गम्भीरा-कोमलगम्भीरभाषिणी, सञ्चितपुण्येन मातृसञ्जाता - मात्रा कृतसुकृतवशात् तस्यास्सा जाता । अञ्जलिसुखसम्पुष्टा-मातुः करेण सुखेन पालिता । वञ्चितयोषिज्जनाप्त-सौन्दर्या-नारीजनेष्वतिसुन्दररूपिणी-इति चन्द्रिकावर्णनेन चित्रगता कन्या चन्द्रिकाप्रतिबिम्बमिवेत्यनेन च मातृवदियमप्यतिसौन्दर्यशालिनीत्युक्तम् । तदवलोकनेन स्वस्या अपि वधूत्वेन परिग्रहणाय सम्मतिर्दर्शिता । वृत्तं गीतिः ॥९॥

१९. रूपेण गुणैश्च पुत्री प्रायशः मातरमनुकरोतीत्युक्तिं विशदयति ।

२०. आवयोस्सम्मतिर्गौणी । कुमारस्याऽऽशय एव मुख्य इत्याकलय्य तस्याभिप्रायविज्ञानाय प्रभावतीं प्रेरयति ।

२१. माता पुत्रस्य चित्रं दर्शयति ।

२२. "चित्रेण व्यक्तिस्वरूपनिश्चयो नाधिगम्यते" इति स्वस्याभिप्रायः । स एव प्रकटीक्रियते ।

यतः—चित्रकारो विचित्राङ्गीं कुरूपामपि साधयेत् ।
आलेख्ये परमोहार्थं तच्चित्रं मे न सम्मतम् ॥१०॥

प्रभावती २३. पुत्र जीव देव ! किं सञ्जीविनीं परिणयसे ?

जीवदेवः—२४. परिणये तां यदि सा मम प्राणसञ्जीविनी भवेत् । मातः, किं बहुना प्रत्यक्षतो दृष्टा सा मम प्रत्ययमादधाति ।

प्रभावती—२५. तदस्यास्सन्दर्शनाय अपेक्षितं संविधानं रचयामि । मङ्गलं भवतु ते । (प्रत्यावृत्य) नाथ ! अस्मत्प्रियसुतः सञ्जीविनीदर्शनकुतूहलवानिव प्रतिभाति । किमत्र कार्यम् ?

प्रद्योतः—२६. भो विप्रवर्य ! आवेदय युष्मत्स्वामिने-मम कुमारः तस्य कुमारीं सञ्जीविनीं प्रत्यक्षतो द्रष्टुमिच्छति । अतः आगामिनि सोमवासरे ज्योत्स्नानगरोपवनमुपयातु सा सञ्जीविनी ।

---

चित्रकार इति-चित्रकारः- आलेख्यनिर्माणचण आलेख्ये - चित्रे कुरूपामपि विचित्राङ्गी साधयति-विकृतरूपिणीं स्त्रियं सुन्दरीमिव घटयितुं शक्नोति । अत. परमोहार्थं निर्मितं चित्र मे न सम्मतं । चित्रं दृष्ट्वा सामान्यजन इवाहं मोहपरवशो भूत्वा सम्मतिं न ददामीत्यभिप्रायं सूचितवानय कुमारः । अनुष्टुप् वृत्तम् ॥१०॥

२३. तस्य निर्धारवचन प्राप्तुं "तव सञ्जीविन्या सह विवाहस्सम्मतो वे"ति स्पष्टं पृच्छति ।

२४. प्रत्यक्षतस्तां दृष्ट्वा सा मम प्राणप्रिया भवेद्वेति विज्ञाय अनन्तरं ममाशयं निवेदयामीति वदति ।

२५. स्वसुतस्य तस्यास्साक्षाद्दर्शनाय संविधानं रचयामीत्युक्त्वा तद्वृत्तान्त राज्ञे निवदयति ।

२६. पुत्रस्याशयं विदितवता राज्ञा ज्योत्स्नानगरोपवने वधूवरयोः परस्परदर्शनार्थमपेक्षितं कार्यं साधयितव्यमिति प्रतिसन्देशः ब्राह्मणमुखात्प्रेष्यते ।

तत्र मम सुतोऽपि सन्निहितस्सन् तद्रूपलावण्यसुधां स्वचक्षुर्भ्यांपीय अन्योन्यप्रणयभरात् परिणयपरो भवतीति ।

विप्रः—२७. दीर्घायुष्मान् भवतु भवान् । दीर्घसुमङ्गला भवतु भवती !

(इत्याशास्य स्वनगरं प्रतियाति)

प्रद्योतः—२८. कस्कोऽत्र भोः ।

सेवकः—२९. देव अयमहमस्मि ।

प्रद्योतः—३०. कुमारमत्राऽऽनय ।

सेवकः—३१. यथाज्ञापयति देवः (गत्वा पुनरागत्य कुमारं पितृसविधं प्रापयति)

जीवदेवः—३२. अभिवादयेऽहं जीवनामा ।

प्रद्योतः—३३. चिरं जीव ।

प्रभावती—३४. शीघ्रमेव कल्याणमस्तु ।

---

२७. तत्सन्देशमासाद्य विप्रः तावाशिषा अनुगृह्य तदनुज्ञया ज्योत्स्नानगरं प्रति गच्छति ।

२८. सेवकमाह्वयति ।

२९. स सन्निहितो भवति ।

३०. राजा तनयाऽऽनयनाय सेवकमाज्ञापयति ।

३१. स कुमारमानयति ।

३२. कुमारः पितरावभिवादयते ।

३३. चिरंजीवेति दीर्घायुराशीः ।

३४. कल्याणमस्त्विति विवाहघटकरूपाऽऽशंसा ।

प्रद्योतः–३५. भोः कुमार! आगामिनि सोमवासरे त्वममात्य-पुत्रेण तव सख्या सह इतः प्रस्थाय ज्योत्स्नानगरोपवने सञ्जीविनीं नाम सीमन्तिनीमणिं दृष्ट्वा प्रत्यागच्छ।

प्रभावती—३६. यथाऽवसरं तया सह संलापोऽप्यस्तु ते ममाऽनुज्ञया।

जीवदेवः–३७. यथा रोचते पितृभ्याम् (इति निर्गतः)-(सर्वे निष्क्रान्ताः-)

---

३५. कुमारस्य वधूसन्दर्शनाय ज्योत्स्नानगरोपवनं प्रति प्रस्थानार्थं पित्रादेशः।

३६. तस्यैव मातृसन्देशः।

३७. पुत्रेण तदादेशाऽनुमोदः।

॥ इति द्वितीयदृश्यव्याख्या ॥

---

# ॥ तृतीयदृश्यम् ॥

---

— ज्योत्स्नानगरोपवनम् —

(ततः प्रविशति जीवदेवः सख्या प्रियदेवेन सह)

प्रियदेवः—१. सखे जीवदेव ! एतदुपवनागमने कोऽयमुद्देशः?

जीवदेवः—२. सखे प्रियदेव ! अस्ति कश्चित्तं जानास्यचिरात्त्वमेव ।

पश्यात्र—

शाखी शाखी सुमफलभरैस्सौरभाप्यायधर्मै
रोलम्बानां शकुनिनिवहस्याऽऽतिथेयो विभाति ।

---

१. तत्राऽऽगमनस्य निमित्तं पृच्छति ।

२. स्वमित्रस्य चित्तमन्यत्राऽऽकृष्टुं त्वयात्र अनुभवेनैव तन्निमित्तं विदितं भवतीत्युक्तम् ।

शाखीति—शाखी शाखी एकैको वृक्ष सौरभाप्यायधर्मैः कुसुमफलभरैः-मधुकरादीनां दूरादपि सौरभेणैव तदुत्पत्तिस्थानं प्रति आकर्षणं स्वाभाविकं प्रसिद्धं च-तदाघ्राणेनैव तेषामाह्लादो जायते । अथवा-तत्सौरभजनकपुष्पादिस्थाने तत्रस्थमकरन्दास्वादनेन आह्लादो भविष्यतीति सौरभप्राप्त्यैव सन्तोषः । तद्वद्भिः पुष्पफलनिकुरुम्बैः । अत्र रोलम्बानां तृप्तिः न केवलं पुष्परसास्वादनेनैव अपि तु क्वचित् फलगतरसास्वादनेनापीति फलपदप्रयोजनम् । अथवा रोलम्बाना पुष्परसेन यथा शकुनिनिवहानां फलेनापि तथा तुष्टिर्भवतीति तात्पर्यम् । रोलम्बानां भ्रमराणां शकुनिनिवहस्य - शुक-पिकादीनामातिथेयो विभाति-अतिथिषु साधुः अतिथिसत्कारकर्तेव दृश्यते इति गम्योत्प्रेक्षायाः प्रकृतिसौन्दर्यवर्णने तात्पर्यम् ।

आतिथ्यं तद्वरमतिथयोऽवाप्य गानेन मोदात्
शंसन्तीव प्रतिहतभयास्साधवस्साधुयोगात् ॥११॥

· प्रियदेवः—३. इदमपि पश्यतु सखा ।

लता जात्या ह्याम्रं मरुदभिवृताऽऽश्लिष्यति स्नेहयुक्ता
स शाखाबाहाभिर्लसितमनसाऽऽलिङ्गतीमां प्रमोदात् ।

---

अतिथयः- रोलम्बशकुनिप्रभृतय. प्रतिहतभयाः- निर्भयास्सन्त' वरं तदातिथ्यमवाप्य - वृक्षेणकृतमन्याहशमातिथ्यं प्राप्य सन्तुष्टाः सन्तः गानेन-कलकलारावेण तम्- आतिथेयीभूतवृक्षं शंसन्तीव वर्तन्ते । प्रशंसां कुर्वन्तीवेत्युत्प्रेक्षा साधवस्साधुयोगादिवेत्युपमया अनुप्राणिना। अत्र उपमोत्प्रेक्षयोस्संसृष्टिः । साधवः- सदाचारवन्तः आतिथेयाः साधुयोगात्-सत्पुरुषानार्यान् प्राप्य यथाऽऽतिथ्यं कुर्वन्ति, तानातिथेयान् अतिथयः यथा स्तोत्रादिना प्रशसन्ति तथैवेत्युपमार्थः । प्रशंसन्तीवेत्यत्र विद्यमान 'इव' शब्दः उत्प्रेक्षोपमानोभयव्यञ्जकः। अनेनात्र माधुर्यं द्योत्यते । रोलम्बशकुन्यादीनां वृक्षाणाममकृत्परिचयवशात् वृक्षानुसर्पणे न केवलं भयं प्रतिहतमेव - अपि तु स्नेह एव जायते । तथा साधूनां साधुयोगात् भयं न जायते किंतु हर्ष एव समुत्पद्यते इति सहजां प्राणिवृत्तिं द्योतयति । प्रतिहतभयाः इति विशेषणमुभयत्रान्वेति । मन्दाक्रान्तावृत्तम् ॥११॥

३. प्रकृतिसौन्दर्यदर्शनासक्तस्य मित्रस्याशयः यथा—

लतेति—जात्याःलता-जातीपुष्पलतेति यावत् । आम्रं. रसालतरुम् मरुदभिवृता-मरुता (प्रेरणकर्त्री) आम्रस्य परितः वृता-आवृता सती, अतः स्नेहयुक्ता - स्नेहः द्रवद्रव्यविशेषः बन्धकधर्मः तद्युक्ता आम्रं - परितः आवारयति सहकारिशक्तियुता श्लिष्यति-आश्लिष्यति-आम्रमनुबध्नाति । अत्र प्रतिपदं व्यङ्ग्यबोधकम् । अतः सत्कुलप्रसूता काचिद्वनिता मरुत्सदृशस्य कस्यचित् महापुरुषस्य सहायेन रसालभूतं कंचिदनुरागिणं प्रीतिपूर्वकं सङ्गतवतीत्यर्थो ऽभिव्यंज्यते । सोऽपि-आम्रवृक्षोऽपि शाखाबाहाभिः

युवा पश्येदेतां यदि परवशो मोहपाशेन बद्धो
निवापं कुर्याद्वा नियमविषये दोषलज्जाभयेभ्यः ॥१२॥

जीवदेवः—४. भोः प्रियदेव ! अलमलमतिविलासेन । सुविलासेनागच्छतीह ससखीका सा सञ्जीविनी ।

---

बाहाकाराभिश्शाखाभिः लसितमनसा-उल्लसितहृदयेन इमा जातीलता प्रमोदात्-हर्षेण आलिङ्गति आश्लिष्यति । अत्रापि सुगुणोपेतः सोऽनुरागी स्वबाहुभ्यां तां वनितां सहर्षमालिङ्गतीति ध्वनिस्स्पष्टः। अत्र इमामिति स्वपुरस्थलतायाः हस्तेन निर्देश । अत्रापि सञ्जीविनीसान्निध्यवशात् स्वसख जीवदेवं प्रति इमामिति हस्तेन निर्देश युक्तोऽपि तस्या. अदर्शनेन तदर्थो न सङ्गच्छते । तथापि इमां जातीलतामाम्रः यथाऽऽश्लिष्यति तथा त्वमपि काञ्चित्प्रियां समधिगच्छसीति पर्यायोक्त्या प्रकृतार्थः समर्थयितुं शक्यते । युवा" यःकोऽपि यौवनसम्पन्नः एतां पश्येद्यदि-जातीलतयाऽभिनिर्वर्तितव्यापरं वीक्षते चेत् मोहपाशेन बद्धः-अहमप्युचितस्त्रियमेवमाश्लिष्येयमित्यनुरागेण युक्तः-अतः परवशः- युक्तायुक्तविवेकरहितः कामुको भूत्वा नियमविषये-शास्त्रचोदितविधिभ्यः दोषलज्जाभयेभ्यः- अकार्यकरणं दोषः- पापमिति यावत्, स्वस्य सत्कुलप्रसूतिमपरिभाव्य पापरतिः, तज्जातानि लज्जाभयादीनि, लज्जा-साधवःमत्कृतकार्यं विज्ञाय मां निन्दन्तीति मत्या जनिता व्रीडा, निन्दिताचरणे ममेहामुत्रच प्रतिफल रूपा शिक्षा भवतीति ज्ञानाद्भयम् । इत्यादिभ्यश्च निवापं कुर्यात्-तिलाञ्जलिं वितरेत् । शास्त्रमुत्सृज्य दोषलज्जाभयान्यविगणय्य स्वापेक्षितं कार्यं करोत्येवेत्यभिप्रायः । अनेन प्रकृतिसौन्दर्यवर्णनेन कामिजनव्यापार उद्घाटित इति दीपकालङ्कारस्सूचितः । वृत्तं मेघविस्फूर्जितम् । तल्लक्षणं "रसर्त्वश्वैर्य्मौन्सौररगुरुयुतं मेघविस्फूर्जितं स्यात्"। इति ।

४. प्रकृतोद्दिष्टकार्यनिर्वाहाय अलमलमित्यवधानाकर्षणमन्यत्र व्यापारात् । स व्यापारोऽत्र ससखीका सा आगच्छतीत्यनेन तद्दर्शनादिरूप इति व्यज्यते ।

प्रियदेवः—५. सञ्जीविनी ! का सा कामिनी ? काऽस्यास्सखी ? कोऽस्या विलासः ?

जीवदेवः–६. सर्वं ज्ञास्यते । किञ्चिज्जोषमास्व । वृक्षमूलान्तरितौ शृणवाव तत्संलापसरणिम् ।

प्रियदेवः–७. तथा ।

(तदा प्रविशति सञ्जीविनी सख्या प्रियदेव्या सह)

प्रियदेवी–८. सखि सञ्जीविनि ! कुतोऽत्रावयोरागमनम् ?

सञ्जीविनी—९. स्वयमेव वेत्सि ! कुतो मां पृच्छसि ?

प्रियदेवी–१०. न किञ्चिद्वेद्मि । किं वा रहस्यम् । कथय मम कर्णे ।

सञ्जीविनी–११ कुतस्तव कर्णे ? निभृतमाकर्णय कारणम् ।

प्रियदेवी–१२. सावधानाऽस्मि । कथय कथय ।

---

५. पूर्ववृत्तान्तानभिज्ञतया विस्मयेन सञ्जीविनीपदानुकरणं का सा कामिनीत्यादिप्रश्नश्च ।

६. सञ्जीविन्यास्तत्सख्याश्च सम्भाषणेन का सेति विदिता भवतीति समाधानोक्तिः ।

७. जोषं स्थितेन वृक्षान्तरितेन मया सर्वं ज्ञायते इत्यनुमोदः ।

८. उपवनं प्रति आगमनोद्देशमजानत्यास्सख्याः प्रश्नः ।

९. तया तदुद्देशः ज्ञात एवेति मन्यमानायाः प्रतिवचनम् ।

१०. तद्रहस्यमेवेति यस्याः मतिः तस्या रहस्यभेदनाय प्रार्थना ।

११. उपवनागमनकारणरहस्यं मयेदानीं कथ्यत इत्यभिप्रायः ।

१२. अतिकुतूहलजनकवार्ताश्रवणेऽवधानं निश्चलं भवत्येवेत्यभिप्रायः ।

सञ्जीविनी-१३. शृणु । अनुरूपवराधिगमाय मम चित्रं विप्रमुखात्तेजोवतीराजनिकटं प्रापितम् ।

प्रियदेवी—१४. इदमपि कुतूहलं जनयति । ततः ?

सञ्जीविनी—१५. ततः किम् ? यो वरस्स मामत्र द्रष्टुकाम इति विप्रमुखाद्विदितवृत्तांतेन जनकेनेयं वार्ता मन्मातुः परिचयं नीता ।

प्रियदेवी-१६. प्रमोदस्थानं खलु । ततः ।

सञ्जीविनी-१७. मातुरनुमत्या त्वया सहाऽहं दीक्षां वहामि ।

प्रियदेवी—१८. दीक्षा । किमत्र यज्ञः ? अन्यथा कथं दीक्षानियमः ?

सञ्जीविनी—१९. सत्यं यज्ञ एव । अस्मिन् यज्ञे मम मनोरथाऽऽज्यं प्रियहृदयवैश्वानरे हूयते ।

प्रियदेवी—२०. अपूर्वोऽयं प्रलापः ।

---

१३. अनुरूपवरप्राप्तये चित्रप्रेषणविचारः कथितः ।

१४. स एव अवशेषवृत्तान्तश्रवणे अधिककुतूहलजनको भवति ।

१५. तादृशवरः कन्यारूपदर्शनायाऽत्राऽऽगच्छतीति अवशेषकथासूचनम् ।

१६. एतच्छ्रवणेन सख्याः हर्षप्रदर्शनपूर्वकं वक्ष्यमाणकथाश्रवणे कौतुकं व्यनक्ति ।

१७. अत्र दीक्षाशब्दः स्वारसिकः ।

१८. यज्ञे हि यजमानस्य पत्नी दीक्षां वहति । किमसदागमोऽत्र यज्ञ इति प्रश्नकाकुः ।

१९. यज्ञविधिं साधयति । यथा-वराधिगमः यज्ञः सञ्जीविनी यजमानरूपा, तस्या मनोरथः आज्यं प्रियहृदयमग्निः मनोरथसमर्पणं होम इति ।

२०. एतादृशयज्ञविधिः अदृष्टपूर्व इति सख्या अभिप्रायः ।

सञ्जीविनी–२१. अपूर्व एव ममादृष्टमिव दृष्टफलं साधयति।

प्रियदेवी—२२. भाषणे त्वमतिनिपुणा। त्वद्वचनार्थः मम मतिं नावगाहते।

सञ्जीविनी–२३. त्वमपि संलापेन निपुणा भवसि।

प्रियदेवी—२४. केन सह संलापः ?

सञ्जीविनी—२५. प्रियदेवि ! प्रियदेवेन सह।

प्रियदेवी–२६. लज्जास्पदमिदम्।

---

२१. साङ्ख्यज्ञे निर्वर्तिते तस्मादपूर्वनामकःकश्चित्पुण्यविशेषः जायते। स यजमानं स्वर्ग प्रापयतीति कर्मठानां मीमांसकानामभिप्रायः शास्त्रसम्मतः। यद्यप्येतादृश अपूर्वः अदृष्टफलं स्वर्गप्राप्तिरूपं यजमानस्य प्रायणानन्तरं प्रयच्छति। सञ्जीविन्या अभीप्सितः वरदर्शनरूपोऽपूर्वः तत्परिणयरूपयज्ञ-जनितापूर्वफलं सद्य एव प्रयच्छतीति चमत्कारवचनमत्र दर्शितम्। ममादृष्ट-फलमिव दृष्टफलमपि साधयतीत्यत्र अदृष्टशब्दस्य व्यङ्ग्यमर्यादया भाग्य-मित्यर्थलाभेन श्लेषोक्तिरत्राऽतिरम्या भवति।

२२. सचमत्कारभाषणे त्वं कुशला। अहं तु तदर्थं ज्ञातुमप्य-समर्था।

२३. "संलापो भाषणं मिथः" इति मनसि कृत्वा मिथस्संलापे त्वमपि निपुणा भवसीत्युक्तम्।

२४. केन सहेति संलापे आसक्तिः प्रदर्शिता।

२५. मन्त्रिपुत्रेणेति यावत्।

२६. प्रियदेवेनेत्यनेन प्रियाः देवाः यस्य तेनेत्यर्थवत: तन्नामक-मान्त्रिपुत्रस्य नाम्नोऽप्यपरिचितत्वात् स्वप्रियसख्या परिहसितेति ज्ञानेन लज्जास्पदमित्युक्तम्।

सञ्जीविनी–२७. निर्लज्जा भवासि मनसिजसहयोगे ।

प्रियदेवी—२८. इदमपि नावगाहते मे बुद्धिम् ।

सञ्जीविनी—२९. बुद्धिमतीनामीदृशी विलासोक्तिः ।

प्रियदेवी—३०. कदाऽऽगच्छति तव प्रियः ?

सञ्जीविनी—३१. यदाऽऽगच्छति तव प्रियः ।

प्रियदेवी–३२. मम प्रियस्य वार्तापि मां न स्पृशति ।

सञ्जीविनी–३३. हस्तस्तावत्स्पृशेत् ।

प्रियदेवी–३४, तर्हि तव प्रियेण सह कश्चित्सखा आयाति किम् ?

सञ्जीविनी–३५. आम् ! स सखैव तव प्रियो भवति ।

---

२७. तल्लज्जापदेनैवोत्तरप्रदान सहयोगशब्दप्रयोगस्य वचनचमत्कृतिभङ्गि दर्शयति ।

२८. तदर्थावधारणं सूचयत्यत्र 'इदं' पदम् ।

२९. विज्ञायाः स्वस्या अज्ञत्वप्रदर्शनं विलासार्थमिति भावः ।

३०. सञ्जीविनीप्रियः कदाऽऽगच्छतीति पृच्छा ।

३१. "यदाऽऽगच्छति तव प्रिय" इत्युत्तरं न केवलं वचनकौशलं द्योतयति किंतु प्रियदेव्या हृदये सन्तोषं च जनयति । मम प्रियेण सह तव प्रियोऽप्यागच्छतीत्यभिप्रायेण यदि मम प्रियः मां वधूत्वेनाङ्गीकरोति तदा तत्सखः त्वां पत्नीत्वेनाङ्गीकरोतीति, स्वसख्या अपि वरागमः बहुमत इति ध्वनिरत्र प्रतिभाति ।

३२. तदनुपपन्नम् । असम्भावितमिति तात्पर्ये हेतूक्तिः ।

३३. हस्तस्तावत् स्पृशति-वरः तव पाणिग्रहणं करोतीति वचनचमत्कारभङ्गिः शृङ्गाररसं पोषयति ।

३४. स्वस्या अपि कश्चिद्वरोऽत्रागच्छतीत्यौत्सुक्य द्योतयति ।

३५. यो मत्प्रियमनुगच्छति स एव तव भर्ता भवतीति स्पष्टं वचनम् ।

प्रियदेवी—३६. (सलज्जम्) त्वमिव नाहमदृष्टशालिनी।

सञ्जीविनी—३७. त्वमदृष्टशालिनी प्रियदृष्टिशालिनी भवसि।

प्रियदेवी—३८. पश्येमां सरस्याश्शोभाम्—

कमलवसनदीप्ता शैवलाकञ्चुकाप्ता
तरणिकिरणकीर्णा प्रेमनीरेण पूर्णा।

---

३६. शीघ्रं विबाहप्राप्तये त्वमिव नाहं भाग्यशालिनी-अत्रापि वचनसौन्दर्यमस्ति।

३७. त्वं न केवलं भाग्यशालिनी तवानुरूपं वरमपि पश्यसीति पुनश्चमत्कारोक्तिः।

३८. सञ्जीविन्याश्चित्तं कुत्रास्तीति विज्ञानार्थं तस्या मनः अन्यत्राऽऽकर्षति सखी।

कमलेति—या सरसी कमलवसनदीप्ता-कमलमेव वसनं परिधानं तेन दीप्ता-आवृता-अलङ्कृतेति यावत्। अनेन अस्यां सरस्यां विपुलानि पद्मानि सन्ति तैराच्छदितेयं सरसीत्यभिप्रायः। शैवलाकञ्चुकाप्ता-शैवालमेव आसमन्ताद्बद्धः कञ्चुकः-उरसः आच्छादकवस्त्रं 'निचुल' इति प्रसिद्धम्। तेन युक्ता। यत्र पद्मानि सन्ति तत्र शैवालेनाच्छादितेयं सरसीति तात्पर्यम्। तरणिकिरणकीर्णा सूर्यस्य रश्मिभिः प्रचुरा-व्याप्तेत्यर्थः। लक्षणया स्पृष्टा-संयुक्तेति तात्पर्यम्। सूर्यस्य रश्मिसम्पर्कात् पद्मानि विकसितानि भवन्ति। तद्विकासेन सरस्याः शोभा सहजेति निष्कृष्टाभिप्रायः। प्रेमनीरेण पूर्णा-प्रेमविषयीभूतं नीरं तेन पूर्णा भरितेत्यभिप्रायः, इयं सरसी जलपूर्णेति भावः। पशुपतगपिपासापूरणे कारणं-द्विपाच्चतुष्पाज्जन्तूनामपि इष्टार्थप्रदाने हेतुः किमुत मनुष्याणामिष्टार्थप्रदानविषये। अनेन उदारशीलेति व्यज्यते। पशवः- गवादयः- पतगाः- शुकादयः ये ते अस्यां सरस्यां जलपानेन तृप्ता भवन्तीति प्रकृतार्थः। तस्यां-एतादृशसरस्यां त्वं विगतभीः निर्भया स्नानपा-

पशुपतगपिपासापूरणे कारणं या
विहर विगतभीस्त्वं स्नानपानेन तस्याम् ॥१३॥

सञ्जीविनी—३९. यत्र प्रकृतेर्विहारः तत्र विहरामि ।

प्रियदेवी—४० प्रकृतेर्विहारोऽत्रैव ।

प्रकृत्येदं रम्यं यदुपवनमाढ्यं वनरुहै-
स्सुखस्नानावाप्त्यै भवति बहुकासारवसतिः ।

---

नेन विहर-स्नानं कुरु जलं पिब यथाभिमतं विहारं कुरु । अत्र प्रथमपादे रूपकालङ्कारस्स्पष्टः । नूतनसुन्दरपीताम्बरकञ्चुकालङ्कृता प्रियसङ्गमपेक्षमाणा प्रेमभरिता दयावती इयं वधूः- अस्यां त्व यथेप्सितं विहारं कुर्विति कंचिद्वधूप्रियं प्रति कयाचिद्वधूसख्या सूचितोक्तिरिति च व्यज्यते । अथवा इयं सरसीरूपा वधूः रतिकलाकुशला अस्याः स्नेहेन एषा तव सखीभूया तवेष्टार्थं साधयतीति च ध्वनिः। अत्र रत्याख्यस्थायिभावस्य बीजमुद्घाटितम् । मालिनीवृत्तम् ॥१३॥

३९. प्रकृतेः- स्वभावस्य-मनस इत्याकूतम् ।

४०. प्रकृतिशब्दस्य श्लेषेण जगत्सृष्टेर्मूलभूतं प्रधानमित्यवगम्य सृष्टिवैचित्र्यमत्र विभातीति सखीवचनम् ।

प्रकृत्येति - इदमुपवनमयमारामः प्रकृत्या-स्वभावेन वनरुहैः रम्यं-वृक्षैर्मनोहरः। अत्र सुखस्नानावाप्त्यै-सुखेन स्नानार्थं बहुकासारवसतिर्भवति-अनेकसरोवरेषु (विविधजनानुकूल्यार्थं) बहुविधानुकूल्यानि कल्पितानि भवन्ति । सर्वतस्था-उपरिप्रदेशेषु अधः प्रदेशेषु च वर्तमाना शिला आसनगतिं कलयति । अत्र शिलाशब्दस्य जात्यैकवचने प्रयोगः- अनेकानि-प्रस्तरफलकानि इति यावत् उपवेशार्हाः भवन्तीति तात्पर्यम् । त्वं स्नात्वा शिलायामुपविश्य विनोदार्थं यत्किञ्चित् गीतं गातुं प्रवर्तसे यदि ते गानविषये श्रुतिपदं-त्वद्गानस्य गीतस्वरबलाधायकवाद्यमूलकश्रुतिवत् - श्रुतिसम्पादनाय द्विरेफारावः अलं भृङ्गझङ्कारः पर्याप्तो भवति । द्विरेफाः- द्वौ रेफौ येषां ते

शिला सर्वत्रस्था कलयति सुखादासनगतिं
द्विरेफारावस्ते श्रुतिपदमलं गानविषये ॥१४॥

सञ्जीविनी—४१. सखि! अलमनेन विनोदेन अहमत्रैव तिष्ठामि त्वं तत्र तत्र गत्वा विकसितकुसुमान्यपचित्याऽऽहर। तैश्चतस्रो माला रचयावः।

प्रियदेवी–४२. मा भूत्तव परिश्रमः। अहमेव मालाः आरचय्याऽऽनयामि। विनोदयात्राऽऽत्मानं प्रकृतिसौन्दर्यसन्दर्शनेन। (इत्युक्त्वा पुष्पापचयार्थं गच्छति)

जीवदेवः–४३ सखे प्रियदेव! पिपासाकुलोऽहम्। तत्र परिदृश्यमानं कासारं गत्वा जलमापीय निवर्तिष्ये। त्वमत्रैव स्थित्वा मामनुपालय (इत्युक्त्वा गच्छति)

जीवदेवः—४४. (मार्गे प्रियदेवीं दृष्ट्वा) (स्वगतम्) केयं कामवधूः? किमियं सञ्जीविनी? (प्रकाशम्) आर्ये का त्वम्?

---

द्विरेफाः द्वयो रेफयोः संयुक्तोच्चारणात् र र इतिसंरावविशेषो जायते। स एव कुष्टस्वरकलितो झङ्कारोभवति इति केचित्। भ्रमरपदे द्वौ रेफौ भवतः अतः भ्रमरस्य द्विरेफसंज्ञेत्यन्ये। अत्र शृङ्गाररसस्य स्थायीभूतरतेः पुष्ट्यर्थ-उद्दीपनविभावानां बीजोपन्यासोऽवगम्यते। शिखरिणीवृत्तम् ॥१४॥

४१. स्वप्रियस्य दर्शनभाषणयोरौत्सुक्येन सख्याः सुदूरमपसारणायायं पुष्पाहरणसन्नाहप्रसङ्गः।

४२. पुष्पमालारचनयापि परिश्रमो भवतीत्युत्प्रेक्षया सञ्जीविन्यास्सुकुमाराङ्गत्वं द्योत्यते।

४३. अत्रापि जीवदेवेन एकान्ते प्रियादर्शनापेक्षया पिपासाशमनच्छद्मना सख्युस्सकाशान्निर्गमनं कृतम्। अनेन रत्याख्यस्थायिभावस्याङ्कुरोदयः सूचितः।

४४. सञ्जीविनीसखीं सञ्जीविनीं मन्यमानस्य नायकस्य केयं

कुत्र गच्छस्येकाकिनी ?

प्रियदेवी—४५. आर्य ! नाहमार्यापदसम्बोधनमर्हामि ।

जीवदेवः—४६. काऽन्या तदर्हति ?

प्रियदेवी—४७ मम प्रियसखी सञ्जीविनी ।

जीवदेवः—४८ कुत्र सा ?

प्रियदेवी–४९ तत्रैव कासारतीरे । अहं तत्सखी पुष्पावचयार्थं गच्छामि ।

जीवदेवः—५०. गच्छ ! गच्छ ! कल्याणमस्तु ते (जलपानाय मन्दं मन्दं कासारसोपानमनुसरति । तं दृष्ट्वा)

सञ्जीविनी—

कामो वा कामपिता रूपेणाऽयं जयति सुरानखिलान् ।
मां रतिमाकलयेच्चेदहमपि सहसा जयामि सुरनारीः ॥१५॥

---

कामवधूरिति मोहपरवशस्योक्तिः ।

४५. सम्बोधनं सखीजनविषयेऽनुचितमित्यभिप्रायः ।

४६. काऽन्या तदर्हतीत्याशंसया त्वमेवार्हसीत्याशयेन तदापि भ्रान्त्या सञ्जीविनीबुद्धिं जीवदेवमनुसरतीति ध्वनिः ।

४७. "आर्ये" इति सम्बोधनार्हा सञ्जीविनी । स्वयं तु तत्सखीति सखीपदश्रवणेन भ्रान्तिर्निवारिता । तद्दर्शने औत्सुक्यं तु तेन न त्यक्तम् ।

४८. अतस्तस्यास्सन्निधिस्थानावगमायायं प्रश्नः ।

४९ यं कासारं प्रति स गच्छति, तस्य तीरे सञ्जीविनीस्थितिराख्याता ।

५०. सञ्जीविनीसख्या अपि कल्याणं (विवाहः) सूचितम् ।

काम इति-अयं पुरोवर्ती युवा (जीवदेवः) कामो वा-मन्मथो वा कामपिता वा-पुण्डरी-काक्षो वा भवेत् । यतः-अयं रूपेण अखिलान् सुरान् जयति-

५१. (अत्रान्तरे प्रियदेवी द्वे पुष्पमाले सङ्ग्रथ्य सञ्जीविनी-निकटमासाद्य पुनः पुष्पावचयार्थं निर्गच्छति । सञ्जीविनी ते माले पर्णैराच्छाद्य जलं पिबन्तं जीवदेवं वीक्षितुं कासारनिकटतटमारोहति । तस्याश्छाया रविकिरणमनुगता कासारनीरे प्रतिफलति)

जीवदेवः—(तां दृष्ट्वा—)

---

शरीरसौन्दर्येण सर्वानमरान् जयतीत्यनेन दिव्यरूपसम्पन्नोऽयमिति सूचितम् । मन्मथसदृशोऽयं मां रतिमाकलयेच्चेत् मन्मथप्रिया रतिदेवीमिव (सौन्दर्यवतीमिति यावत्) भावयति यदि, अहमपि सहसा सुरनारीः जयामि-शीघ्र मवा अमरवधूः सौन्दर्येण जयामि । यद्यपि मा सुन्दराङ्गीति जनाः वदन्ति-तथापि सुन्दराङ्गेण तेन तथा भाव्याऽहमित्यनेन मा स्वस्यानुरूपा कन्यां भावयति वा-न वति स्वहृदयमनया प्रकाशितम् । शृंगाररसपरिपोषणे आधारभूतरत्याख्य-स्थायिभावस्य पोषकः तत्कारणभूतः आलम्बनविभावोदयः प्रकाशित । वृत्तं गीतिः ।

५१. नायिकानायकयोर्मिथस्संलापावसरे पुष्पमालाप्रापणाय सखी-प्रवेशो नोचित इति सुममये अन्योन्य सुममालार्पणाय तत्र तत्सिद्धिरा-वश्यकीति चाभिसन्धाय पूर्वमेव पुष्पमालाप्रापणायात्र सखीप्रवेशसंविधानम् ।

इयमिति-इयं कासारस्य स्वच्छजले प्रतिबिम्बिता सूर्यकिरणैर्देदीपिता छायारूपा कन्या, तटिद्वा-विद्युद्वा रविकिरणमङ्क्रान्ता जलतरङ्गतरङ्गिता सौदामिनीव भामत इति हेतोः तटिद्वेत्युत्प्रेक्षा । तटिनीवधूर्वा-जलकन्येति यावत् । बिम्बभूतकन्यामदृष्ट्वा जले तच्छायाया दृष्टत्वात् एवमुत्प्रेक्षा । भुजङ्गकान्ता-नागकन्या वा-भुजङ्गकन्याः कासारनीराधःप्रदेशे पाताललोके वसन्तीति प्रसिद्ध्या काचिन्नागकन्या पातालान्निर्गत्य अस्मिन् कासारे प्रियदर्शनायागते-त्युत्प्रेक्षा । भुजगाश्रयाप्ता-भुजाभ्यां गच्छतीति भुजगः-शेषः स आश्रयः तल्पं यस्य स विष्णुः । तस्य आप्ता-प्रिया लक्ष्मीर्वा । क्षीरसागरगता हि लक्ष्मीः अत्र कासारे विपुलं क्षीरवन्नीरं भवतीति परिभावनया अयमेव क्षीर-सागर इति भ्रान्तिः। अतः तत्र प्रस्तृता कन्यारूपच्छाया लक्ष्मीः भवेदित्यु-

इयं तटिद्वा तटिनीवधूर्वा भुजङ्गकान्ता भुजगाश्रयाप्ता ।
सुरेशयोषिन्महिषी स्मरारेर्नरेषु जन्मास्ति न हीदृगस्याः ॥१६॥

५२. (मुखमुन्नमय्य सञ्जीविनीं दृष्ट्वा तदद्भुतसौन्दर्यदर्शनेन मूर्च्छां गच्छति । एवं स्थितिमापन्नं तं दृष्ट्वा सञ्जीविनी सत्वरमवतीर्य शिरसि वक्षसि च जलमासिच्य नलिनीदलैर्मुखसम्मुखे वीजयति । तयैवं समाश्वासितो राजकुमारः नेत्रे उन्मील्य शनैरुत्थाय तत्पाण्यवष्टम्भेन तटदेशमुपगच्छति । तं तरुणपर्णशय्यायां शाययित्वा स्वपीताम्बराञ्चलेन वीजयन्ती समाश्वासयति सञ्जीविनी) (अत्रान्तरे प्रियदेवी मालाद्वयहस्ता गच्छन्ती यदृच्छया प्रियदेवस्य समीपवर्तिनी भूत्वा तं दृष्ट्वा चकितहृदया पश्चात्परिधाव्य मालाद्वयं मल्लिकागुल्मे निक्षिप्य शनैः शनैः पदविन्यासानञ्चयति । )

---

त्प्रेक्षा । सुरेशयोषित्-इन्द्राणी वा । स्मरारे- परमेश्वरस्य महिषी पार्वती वा उभयत्र स्नानार्थं तदागमनमभिसन्धाय तथोत्प्रेक्षा कृतेति गन्तव्यम् । नरेषु-मनुष्येषु अस्याः ईदृग्जन्म एतादृशकन्यारत्नस्य जननं नास्ति न भवतीति मोहितस्योक्ति । प्रतिबिम्बे एतादृशसौन्दर्यं चेत् बिम्बे तत्कीदृशं भवेदिति ध्वनिः । उपेन्द्रवज्रावृत्तम् ।

५२. अत्यद्भुतवस्तुदर्शनेन मनोवृत्तयः स्तब्धा भवन्ति । अतः कञ्चित्कालं संज्ञा प्रतिरुद्धा भवति-सैव मूर्च्छा ।

सञ्जीविनी तत्क्षणं तत्र गत्वा तं शैत्योपचारैरुपचरतीत्यनेन आलम्बनविभावस्सूचितः । तस्याः पाण्यवष्टम्भेन तस्य तटदेशप्रापणरूपबाह्यव्यापारोऽपि तमेवालम्बनविभाव पुष्यति । नायिकानायकयोरुभयोरप्ययं स्थायिनः परस्परालम्बनमिति विवेकः ।

प्रियदेवीप्रियदेवयोरपि रत्याख्यस्थायिनः आलम्बनपोषार्थं हठात् परस्परदर्शनाय संविधानमिदानीम् । प्रियदेव्या हृदयं निर्जनस्थले परपुरुषदर्शनेन चकितं भवतीति सात्त्विकप्रकृतिरस्यास्सूचिता ।

प्रियदेवः—५३. (तां दृष्ट्वा - स्वगतम्) केयं कल्याणी ? अपि नाम कलानिधिसुता सञ्जीविनी ! (समीपं गत्वा) का त्वं सुभगे ?

प्रियदेवी—५४. अहं राजकुमार्याः प्रियसखी प्रियदेवी ।

प्रियदेवः—५५ कुत्राऽस्ति सा राजकुमारी ?

प्रियदेवी—५६. कासारतटे तिष्ठति ।

प्रियदेवः—५७. (स्वगतम्) तर्हि पिपासाशमनार्थं कासारमुपगतस्य राजकुमारस्य तया सह परिचयो भवेत् । अत एव मम सखा प्रत्यागन्तुं विलम्बं तनोति । भवतु अयमेव ममाप्यवकाशः । अनया प्रियदेव्यां सह संलापेन किञ्चित्प्रयोजनं भवेन्मे । (इत्यालोच्य) (प्रकाशम्) भो कन्यामणे ! त्वमूढा वा ?

प्रियदेवी–५८ मम वय एव शंसत्यनूढेति ।

---

५३. तस्यापि सा सञ्जीविनीति भ्रान्तिः सञ्जीविनीदर्शनागमनोद्देशजन्या अविदिततत्सख्यागमनसहकृता । सुभगेति सम्बोधनं शृङ्गाररसोदयस्य बीजम् ।

५४. राजकुमार्यपि देवी भविष्यत्येव । तस्मात् प्रिया देवी यस्याः सा-प्रियदेवीति तस्या नाम सार्थकम् । अतस्सा प्रियसखी ।

५५. राजकुमारी-सञ्जीविनी । अयं प्रश्नः स्वमित्रेण जीवदेवेन तत्स्थानं विदितं भूयादिति आशया बुध्या कृतः ।

५६. एतच्छ्रवणेन तस्याशा सफला जाता । अतः उत्तरवाक्ये स्वगतालोचनं सूचितम् ।

५७. परिचयो भवेदिति तस्याऽभ्यूहः । जीवदेवेन प्रत्यागमने विलम्बः कृत इति यत्-तत्तमभ्यूहं द्रढयति । तत्सख्या सह संलापेन प्रयोजनं तु आत्मानं वरत्वेनाङ्गीकाराय संमतिप्रकाश एव ।

५८. वयसैव अनूढेति निर्धारः कर्तव्य इत्यभिप्रायः ।

प्रियदेवः–५९. किं ते वयः ।?

प्रियदेवी—६०. मम सख्या वयसोऽपि किञ्चिन्न्यूनम् ।

प्रियदेवः—६१ तस्यास्तु ?

प्रियदेवी—६२ षोडश ।

प्रियदेवः—६३. षोडशवयस्काप्यनूढा ?

प्रियदेवी—६४. सा क्षत्रिया राजकन्या ।

प्रियदेवः–६५. त्वम् ?

प्रियदेवी—६६. क्षत्रिया मन्त्रिपुत्री ।

प्रियदेवः—६७ अहं मन्त्रिपुत्रः ।

---

५९. वयः किमिति तन्निर्वाराय प्रश्नः ।

६० सञ्जीविन्याः सामान्यतः समानवयस्का ।

६१. सञ्जीविनीवयोनिर्णयाय प्रश्नः ।

६२. षोडशेत्यनेन तद्वयसः पूर्वं क्षत्रियकन्यानां विवाहो न रूढ इति सूच्यते ।

६३. प्राप्तयौवनप्रायाप्यनूढेति विस्मयः । षोडशवर्षे हि स्त्री पुष्पवती-पुरुष -श्मश्रुमान् भवतीतीदं यौवनस्य बाह्यं लिङ्गम् ।

६४. क्षत्रियेष्वय सम्प्रदायः । क्षत्रियराजकन्येत्यनेन क्वचित् क्षत्रियेतराः राजानो भवन्तीति क्षत्रियेतरेषु यदि कदाचिद् ब्राह्मणो राजा भवति तद्वंशे तादृशसम्प्रदायः न रूढ इति च व्यज्यते ।

६५, क्षत्रियशब्दश्रवणात् सखीजात्यवगमाय कुतूहलं जातम् ।

६६. मन्त्रिपुत्रीति श्रवणेन स्वस्यानुरूपेयं कन्या विवाहायेति भावः सूचितः ।

६७. अहं मन्त्रिपुत्र इत्युद्घोषः जात्या स्वस्यापि श्रेष्ठत्वप्रकाशनाय ।

प्रियदेवी—६८. किं तेन ?

प्रियदेवः—६९. मन्त्रिपुत्र्याः मन्त्रिपुत्रो योग्यो वर इति ।

प्रियदेवी–७०. (सलज्जा तिष्ठति)

प्रियदेवः—७१ लज्जयाऽलम् । किं तवाऽऽकूतम् ।

प्रियदेवी–७२ (परिधावति)

प्रियदेवः—७३. कुत्र गच्छसि ?

प्रियदेवी–७४. पुष्पमालिके मल्लिकागुल्मे निक्षिप्ते आहरामि ते ।

प्रियदेवः—७५. प्रियं भवति मे । तथा कुरु । अचिरादायाहि । (प्रियदेवी निर्गच्छति)

(अत्रान्तरे जीवदेवः संज्ञां लब्ध्वा सञ्जीविनीं वीक्ष्य)

जीवदेवः—७६. हे प्रिये—

---

६८. स्पष्टं तदभिप्रायावगमाय प्रश्नः ।

६९. त्वं मम भार्या भवितुमर्हसीति अभिसन्धि पर्यायेण बोधयति ।

७०. लज्जाविर्भावः सात्त्विकभावः प्रकृतिजन्यः ।

७१ निर्लज्ज्ना तवाभिप्रायं कथयेति-निर्लज्जोक्तिः ।

७२. मातापित्रादेशं विना कन्यायाः वरवरणमनुचितमिति भावनया परिधावनम् ।

७३. तया सह परिणये उत्कटेच्छया एवं भाषणम् ।

७४. त्वदर्थमानयामि । 'ते' मालिके आनयामीति उभयथान्वयः ।

७५. "आहरामि ते" इत्यनेन मदर्थमियं पुष्पमालामानयति मां वृत्वा मत्कण्ठेऽर्पयतीति बुध्या तद्गमनाय सम्मतिर्दर्शिता ।

७६. हे प्रियेति सम्बोधनेन स्वस्येयं प्रियकारिणी प्रिया (भार्या) भवितुमर्हतीति ध्वनिः ।

तन्वीं त्वां तरुणेन्दुशेखरसतीस्पर्धा धिनोतीव ते
प्रत्यङ्गं लसिताम्बुजाऽब्जरतिवल्लावण्यधारावहाम् ।
वस्तूनां धृतरामणीयकदृशां माङ्गल्यरूपव मे
मान्या त्वं गुणशीलवृत्तविभवैस्तुत्याऽसि सञ्जीविनी॥१७

सञ्जीविनी—७७. भो आर्य ! ममापि त्वमेवं प्रतिभासि ।

---

तन्वीति-तन्वीं त्वा कोमलावयवा त्वा तरुणेन्दुशेखरसतीस्पर्धा-तरुणश्चासौ इन्दुश्च स एव शेखरः यस्य सः परमेश्वरः- तस्य सती पार्वती तया स्पर्धा पार्वत्या सह स्पर्धाबुद्धिरिति यावत् । धिनोति-तोषयति । पार्वती खलु सर्वाङ्ग-सुन्दरीति प्रसिद्धा । तत्सौन्दर्यवर्णन "कुमारसम्भवे" "ललिताऽष्टोत्तरे" च विशदीकृतम । तस्याः सौन्दर्यादपि तव (सञ्जीविन्याः) सौन्दर्यमुत्कृष्टतर-मिति तात्पर्यम् । तत्कथम् । प्रत्यङ्ग सर्वावयवेषु लसिताम्बुजाऽब्जरतिवल्ला-वण्यधारावहां-विकसितपद्मे इव नेत्रे हस्तौ पादौ पूर्णचन्द्र इव मुखं रतिरिव शरीरं भवतीति सौन्दर्यप्रवाहधाराम् इति विशेषणं-श्रृङ्गाररसमत्यन्त पोषयति । धृतरामणीयकदृशां वस्तूनां माङ्गल्यं-सौन्दर्ययुक्तानां पदार्थाना प्रधानम् । अनेन विशेषणेन उपमानभूनाना सर्वेषा त्वमुपमानं भवसीति ध्वनिर्व्यज्यते । अतिसुन्दराङ्गीति तात्पर्यम् । एतदन्यादृशसौन्दर्यवर्णनमुद्दीपनविभावद्यो-तकम् । अत एव एवं मे मान्या त्वमित्युक्तम् । मम अत्यन्तप्रीतिकरी मया सम्मानयितुं योग्येति तात्पर्यम् । न केवलं सुन्दररूपेणैव त्वं मान्या किन्तु गुणशीलवृत्तविभवैस्त्वं स्तुत्यासि-सकलसद्गुणैः सच्छीलेन सद्वृत्तेन सर्वसम्पद्भिश्च त्वं स्तोत्रार्हा भवसि । अनेन सात्विकभावाश्च प्रपञ्चिताः । अत्र नायके श्रृङ्गाररसपरिणत्याधारभूतरत्याख्यस्थायिभावपोषणाय नायिका-रूपसौन्दर्यदर्शनं नाम आलंबविभावोत्पादकमिति बोध्यम् । शार्दूलविक्रीडितं वृत्तम् ॥१७॥

७७. आर्येति वरस्य सम्बोधनं विवाहात्पूर्वमुचितम् ।

रविरिति-त्वं रविरिव भासि-सूर्य इव प्रकाशसे । कथम् ? रवेः भग इति

रविरिव सुभगस्त्वं तेजसा भासि स त्वं
मदन इव मनोज्ञः कायभूत्या विधिज्ञः ।
गुह इव रणवीरः शूरवज्रीव धीरो
हितनिजगुणधामा मानसोल्लाससीमा ॥१८॥

नाम त्वं सुभगः-मनोहरः। रविः स्वतेजसा भाति तेजोमयत्वात्-त्वमपि क्षत्रियतेजसा प्रज्ञाभासा च भासि। अनेन तस्य पराक्रमविद्वत्त्वमित्यादिगुणाः सूचिताः। मदन इव मनोज्ञः-मन्मथ इव सुन्दरः- आत्मज्ञश्च। कायभूत्याविधिज्ञ - मदनः स्वस्य कायः देहः तस्य भूतिः भस्मीभावः, तथा विधिः कारणं स्वकार्योपादितं परमेश्वरस्य कोपरूपं जानातीति कायभूत्या विधिज्ञः। त्वं कायस्य-शरीरस्य भूतिः- सम्पत्-दाढर्य-बलमिति यावत्। तया विधीन्-कर्तव्यव्यापारान् जानासीति विधिज्ञः। अनेन प्राप्तावसरेषु तत्तत्कालोचितकार्याणि कर्तुं समर्थ इति सूचितम्। गुह इव रणवीरः- सेनानीरिव समराङ्गणे पराक्रमयुक्तः। तारकासुरेण युद्धे कुमारस्वामी यथा स्वशौर्यं प्रकटितवान् तथा त्वं शत्रुभिस्सह युद्धे पराक्रमं प्रकाशयितुं समर्थः। अनेन वीररसोदयोऽत्र सूचितः। शूरवज्रीव शूरः धीरः- वज्री इन्द्रः यथा सर्वापत्स्वपि धैर्ययुक्तः त्वमपि तथा धैर्यवान्। त्वं हितनिजगुणधामा-निजाः स्वाभाविकाः नतु नैमित्तिकाः गुणाः-शौर्यौदार्यादिगुणाः तथा धामानि तेजांसि बलानि वा निजगुणधामानि हितानि निजगुणधामानि यस्य सः हितनिजगुणधामा। सुगुणशालीति यावत्। मानसोल्लाससीमा-मम मनोहर्षस्य त्वमेव आधारः अवधिस्थानं त्वदायत्तं मज्जीवितमित्यभिसन्धिः। एवं परस्परराागप्रदर्शनेन शृङ्गाररसः उज्जीवितः। अत्र शान्तिरसस्यालम्बनमपि द्योत्यते। यथा-गुह इव रणधीरः इत्यनेन यद्यपि अत्र नायकः समरे शत्रुभिस्सह न युध्यते तथापि कामक्रोधादिषड्रिपून् जयति। शूरवज्रीव धीरः इत्यनेन प्राणापहारकरोगैः पीडितोऽपि धैर्यं न त्यजति। हितनिजगुणधामेत्यनेन शमदमादिवैराग्योत्पादकगुणसम्पन्न इति। मानसोल्लाससीमेत्यनेन सर्वदा

जीवदेवः—७८. सञ्जीविनि, अद्यैव मम मूर्च्छातस्संज्ञाविधानेन त्वं प्राणसंजीविनी भवसि। प्राणकान्तापि भवितुमिच्छसि किम् ?

सञ्जीविनी—७९. (सलज्जम्) जीवसन्निधाने हि सञ्जीविनीप्रभावः।

जीवदेवः–८० स्त्रियः वचसि कुशलाः। तासु प्रत्ययः कथं कार्यः।

सञ्जीविनी–८१. अयमेव प्रत्ययः। (इति मालामेकां जीवदेवस्य कण्ठे समर्पयति)

---

सन्तुष्टान्तरङ्ग इति च व्यज्यते। नायिकापि तथैव शमदमादिवैराग्यगुणप्रधानेति पञ्चमाङ्के जीवदेवस्य तया कृततत्वोपदेशेन ज्ञायते। अन्त्ये उभावपि जीवन्मुक्तौ भवत इति शान्तिरसस्य इमौ आलम्बनमिति आलम्बनविभावः। यस्य कस्य वा रसस्य यदा आलम्बनविभावस्सिध्यति तदनन्तरमेव भावान्तरसत्वनिरूपणम्। अत्र धीरोदात्तनायकगुणास्सूचिताः ॥१९॥

७८. प्राणकान्तापि भवितुमिच्छसि किमिति अकैतवः प्रश्नः। सञ्जीविनीमनोरथावेदनाय खलु तत्र तस्य सान्निध्यम्। एवंरूपसम्भाषणाय तस्य मातुरनुज्ञापि वर्तते।

७९. सञ्जीविनीनामौषधिविशेषस्य प्राशस्त्यं जीवरक्षणाय यथा तथैव ऽञ्जीवितसाफल्यं जीवदेवसन्निधाविति श्लेषार्थद्योतनेन तत्पाणिग्रहणाय तस्यास्सम्मतिस्सूचिता।

८०. पुरुषानतिशेतुं समर्थाः। तासां वचने कथं प्रत्ययः इत्युक्तिः तस्याः सुस्पष्टमनोरथावगाहनाय।

८१. अयमेवेति तस्य संशयच्छेदनार्थं कार्यतः तत्प्रत्ययं दर्शयन्ती सञ्जीविनी प्रियस्य कण्ठे पुष्पमालां समर्पयति। अत्र नायकस्य हृदये शृङ्गाररसोपष्टंभकरतेः अनुभावरूपमिदं पुष्पमालासमर्पणमिति विवेकः।

जीवदेवः—८२. (सहर्षं) त्वं कुलवधूरसि । (इति वदन् अन्यां मालां गृहीत्वा सञ्जीविनीकण्ठे समर्पयति) । (तदानीं वर्ष-बिन्दवः सुरभिगन्धोदकबिन्दव इव पतन्ति । मन्दमारुतः व्यजन-मरुदिव शनैरुपवीजयति । वृक्षेषु शकुन्ताः सगीतवाद्यामिव कलकला-रावं कुर्वन्ति)

जीवदेवः—८३. धन्योऽहम् । त्वं मम पाणिग्रहणमना इति भावये ।

सञ्जीविनी—८४. मम पाणिग्रहणेनैवोत्तम्भितस्त्वं कासार-स्य नीरदेशात्तीरदेशं प्रापितः ।

जीवदेवः—८५. कृतज्ञोऽहम् । इदानीं साधयावः । इतः परं कर्तव्यांशाः गुरुजनायत्ताः । (इति निष्क्रामति)

---

८२. तेन हृष्टो जीवदेवोऽपि स्वस्य मनोरथप्रदर्शनाय तस्याः कण्ठे पुष्पमालां समर्पयति । एवं तौ गान्धर्वविधिना विवाहितौ । अनेन नायिका-हृदये शृङ्गाररसोपष्टंभकरतेः अनुभावोदयः सुस्पष्टमवगम्यते । वर्षपतन-मरुद्वीजनशकुनिकृतारावाः स्वाभाविका अपि तत्काल एव तेषां सम्भवात् तयोर्विवाहाय देवताविशेषाणा महाहर्षं सूचयति ।

८३. ब्राह्मविधिनापि पाणिग्रहणमावश्यकं तदर्थं प्रश्नः ।

८४. निमित्तान्तरेण कृतेन हस्तावलम्बनेन पाणिग्रहणं कृतमिति विलासोक्तिः । अनया श्लेषोक्त्या नायिकायां रत्याख्यस्थायिभावपोषकानुभावो दयः सूचितः ।

८५. मूर्च्छितस्य संज्ञाऽऽधानार्थं कृतोपकारायास्तत्र अहं कृतज्ञो-ऽस्मीति तात्पर्यम् । मातापितृरूपगुरुजनैस्तयोः प्रत्यक्षतो विधिवत्पाणिग्रहण-संपादनारंभ एव कर्तव्यांश इत्याकूतम् ।

८६. (अत्रान्तरे प्रियदेवः पुष्पमालाहस्तां प्रियदेवीं समीपमानीय एकां पुष्पमालां गृहीत्वा तस्याः कण्ठे समर्पयति । सापि तूष्णींभावेनैव अन्यां मालां तस्य कण्ठे समर्पयति)

प्रियदेवः—८७. त्वं मम धर्मपत्नी भवितुमर्हसि ।

प्रियदेवी—८८. प्रिय प्रियदेव, यदा त्वं देवप्रियः ममापि प्रियो भवसीति कैमुतिकन्यायसिद्धम् ।

प्रियदेवः—८९. निपुणा त्वं सम्भाषणे । त्वत्सखी निपुणतरेति शङ्के ।

प्रियदेवी—९०. सा मितभाषिणी ।

प्रियदेवः—९१. त्वम् ?

प्रियदेवी—९२. अल्पभाषिणी ।

प्रियदेवः—९३. अनल्पभाषिणीव भासि ।

---

८६. एवमेव प्रियदेवीप्रियदेवयोः परस्परं पुष्पमाल्यसमर्पणेन तयोरपि गान्धर्वविधिना विवाहो निर्वर्तित इति सूच्यते ।

८७. भार्या भवेति स्पष्टं वचनम् ।

८८. यो देवप्रियः स ममापि प्रिय इत्युक्त्वा तस्य भार्या भवितुं स्वस्यास्सम्मतिर्दत्ता ।

८९. तस्याः वचनचातुर्यं परिभाव्य वदति तथा तत्सख्याः भाषणनैपुण्यं ततोऽप्यधिकं मन्यते ।

९०. सा मितभाषिणीति प्रतिवचनम् ।

९१. त्वमित्यनेन त्वमपि तथा मितभाषिणी कुतो न स्या इत्याक्षिपति ।

९२. सा तथैवेति स्थापयति ।

९३. स्वानुभवात्सा बहुभाषिणीति पुनस्तामाक्षिपति ।

प्रियदेवी—९४. निषिध्यते निषेधोऽत्र ।

प्रियदेवः–९५. भवतु साधयावः । मम सख्युः राजकुमारस्य वृत्तान्तं ज्ञात्वा शुभोदर्कं साधयामि ।

प्रियदेवी—९६. अहमपि सख्याः राजकुमार्याः प्रवृत्तिमभिवीक्ष्य कल्याणसंपदं प्रतीक्षमाणा भवामि । (इत्युभौ निष्क्रान्तौ) (तदनुपदं प्रियदेवः जीवदेवेन प्रियदेवी सञ्जीविन्या मिलित्वा परस्परानुभूतविषयान् परस्परमावेद्य स्वस्ववसतीः प्रतिगताः)

(निष्क्रान्तास्सर्वे)

---

९४. अनल्पभाषिणीति पदे निषेधबोधकनकारस्य निषेधः कार्यः । नकारः परिह्रियतामित्यनेन स्वयमल्पभाषिणीति साधितम् ।

९५. प्रत्येकं निर्गमनाय कारणमभिहितं प्रियदेवेन ।

९६. तथैव कारणं निर्दिष्टं प्रियदेव्या ।

॥ इति तृतीयदृश्यव्याख्या ॥

## ॥ चतुर्थदृश्यम् ॥

— ज्योत्स्नानगरम् —

(ततः प्रविशति राजा कलानिधिः राज्ञी चन्द्रिका परिवारश्च)

कलानिधिः—१. प्रिये चन्द्रिके, किं विषण्णहृदयेव त्वम् ?

चन्द्रिका—२ तथा ।

कलानिधिः —३. कारणम् ?

चन्द्रिका-४. कुमारी सञ्जीविनी ।

कलानिधिः-५. कथम् ? तस्यास्स वरोऽवरः ? नाङ्गीकार्यः ?

चन्द्रिका-६. तदङ्गीकारादेवाऽनङ्गतापः ।

कलानिधिः—७. मङ्गलाङ्ग्याः अनङ्गतापः ?

---

॥ चतुर्थदृश्यव्याख्या ॥

१. "आकारेणैव सुहृदस्तर्कयन्ति परेङ्गितम्" इति नीत्यनुसारेण राज्याः मुखवीक्षणेनैव राजा तस्या विषादभावं विजानन् तस्य कारणं पृच्छति ।

२. तथ्यम् । अहं विषण्णहृदयेति भूतार्थनिवेदनम् ।

३. विषादस्य निमित्तं किमिति प्रश्नः ।

४. सुता सञ्जीविन्येव निमित्तमिति कारणं दर्शयति ।

५. अवरः-अनुत्तमः । तस्य पाणिग्रहणं नानुमोदते किम् ?

६. तमेवाङ्गीकरोति । अतः कन्दर्पदर्पोऽस्याम् ।

(अनेन विप्रलंभशृङ्गाररसोदयस्सूचितः।)

७. कोमलाङ्गी खलु कुमारी । तामनङ्गः कथं बाधते ? । इत्यनेन प्रबलमन्मथावेशस्य सा नार्हवयस्केत्याकूतम् ।

चन्द्रिका—८. सर्वाङ्गेषु सृप्रतः।

कलानिधिः—९ तदत्र का चिकित्सा ?

चन्द्रिका—१०. न काऽपि कायचिकित्सा प्रभवति।

कलानिधिः—११. स तापः किं मानसचिकित्सामपेक्षते ?

चन्द्रिका—१२. तथैव।

कलानिधिः—१३. तर्हि भिषग्वरान् समाह्वापयामि।

चन्द्रिका—१४. धन्वन्तरिणापि चिकित्सा न पार्यते।

कलानिधिः—१५. तर्हि ब्रूहि त्वमेव किमत्र कार्यम्।

चन्द्रिका—१६. तस्याः हृदयप्रियस्य मुखावलोकनेन तत्पाणिग्रहणेन तत्संलापेन निवार्यते स सन्तापः।

कलानिधिः—१७. तस्या विवाहो निर्वर्तितव्य इति किल तवाऽऽकूतम् ?

---

८. अनङ्गोऽपि कामः- तस्यास्सर्वाङ्गेषु प्रविशतीत्यनेन सा कामज्वरपीडिता इत्युक्तं भवति।

९. कायिकोपतापः वैद्यचिकित्सासाध्य इति भावयति।

१०. कायचिकित्सया न किमपि प्रयोजनं भवतीति राज्ञी निवेदयति।

११. किं मानसचिकित्सा कार्येति पृच्छति।

१२. तथैवेत्यावेदयति।

१३. सा भिषक्साध्येति मन्यते।

१४. सा न भिषक्साध्येति अभिप्रैति।

१५. तामेव परिहारोपायं पृच्छति।

१६. स्वेनैव वृतस्य प्रियस्य दर्शनादियोग एव तत्परिहारं इति सूचयति।

१७. तेन सह तस्या विवाहः कार्य इति तवाभिप्राय इति शङ्के।

चन्द्रिका—१८. तथैव प्रिय !

कलानिधिः–१९. अचिरान्निर्वर्त्यते । (सेवकं दृष्ट्वा) भोः सेवक ! प्रधानमन्त्रिणमिह प्रापय ।

सेवकः—२०. (गत्वा मन्त्रिसहितः पुनः प्रविश्य) प्रभो ! अयमागतो मन्त्रिपुङ्गवः ।

मन्त्री–२१ प्रणमामि राजशेखरम् अभिवादये राज्ञीमणिम् ।

उभौ–२२. अप्रतिहतमतिमान् भव ।

कलानिधिः—२३. मन्त्रिन् कुमुदबन्धो ! मम पुत्र्याः विवाहप्रसङ्गो भवति । तत्सकलसंविधानमचिरेण कारयितव्यम् । यतः ।

---

१८. त्वया साधु शङ्कितः परिहारोपायः । अनेन राज्ञापि स्वस्याः आकूतमेव ज्ञातमिति भावितम् ।

१९ विवाहकार्यसाधनाय प्रधानमन्त्रिणमाह्वापयति ।

२०. मन्त्रिण' आगमनं सेवकः राज्ञे निवेदयति ।

२१. सम्प्रदायमनुसृत्य मन्त्री प्रणाममाचरति ।

२२. तस्मै समुचिता आशीः कृता ।

२३. राजा प्रवृत्तवृत्तान्तं सर्वं मन्त्रिणे आवेदयति । यथा—

सेयमिति-सेयं बाला-मम पुत्री सञ्जीविनी-अत्र इयमिति निर्देशः यस्याः विवाहार्थं संविधानमादिष्टं सेति राज्ञः हृदयस्थस्य वस्तुनः वृत्तान्त-ज्ञापनाय । मदुपवनगता-मम उद्यान प्राप्ता सती तत्र-इह तेजोवत्याः नरपतिः यः तस्य पुत्रं गुणाढ्यं जीवदेवं संगता-तेजोवतीराजस्य सुगुणशीलं जीवदेवा ख्यं कुमारं समैक्षत । प्रायः तेन सह सरससंलापमप्यतनोदिति मन्ये । अनन्तरं प्रेम्णा बद्धा सा दुस्सहात् तद्वियोगात् शयनमधिगता-इदानीं सा तस्मिन्ननुरागेण युक्ता सोढुमशक्यात् तद्विरहात् मनोरोगपीडिता भवति ।

सेयं बाला मदुपवनगता संगता जीवदेवं
तेजोवत्या नरपतिरिह यस्तस्य पुत्रं गुणाढ्यं।
प्रेम्णा बद्धा शयनमधिगता दुस्सहात्तद्वियोगा-
त्तत्तेनास्याः परिणयविधितः स्याच्चिकित्सा तदर्हा ॥१९॥

कुमुदबन्धुः–२४. महाराज ! भवत्कुमार्याः शरीरसन्तापस्य कारणं विदितम् । तादृशकारणं विना मम कुमारी प्रियदेवी केनाप्यामयेन पीडिता भवति । का वाऽत्र चिकित्सा न जानामि ।

चन्द्रिका–२५. न साऽऽमयग्रस्ता । किंतु सन्तापपीडिता ।

कुमुदबन्धुः—२६. कथम् ? कथयतु भवती ।

चन्द्रिका—२७. तस्या अपि स्वप्रियस्य मुखावलोकनेच्छा ।

कुमुदबन्धुः—२८. क एष तत्प्रियः ?

चन्द्रिका—२९. प्रियदेवः । जीवदेवस्य प्रियसखः ।

---

तत्तेनास्याः परिणयविधितः चिकित्सा तदर्हा स्यात्-तस्मात्-तेन सह तस्या विवाहःसम्पाद्यते चेत् तदा तद्रोगपरिहारो भवेत् । चित्रलेखावृत्तम्-तल्लक्षणम्-"मन्दाक्रान्ता नपरलघुयुता कीर्तिता चित्रलेखा" इति ॥१९॥

२४. एतत्कारणं श्रुत्वा मन्त्री तादृशकारणं विनापि स्वपुत्र्यपि रोगपीडिता भवतीति राज्ञे निवेदयति । तच्चिकित्सायाम् अज्ञान च सूचयति ।

२५. तत्कारणज्ञा राज्ञी "न सा कायिकरोगपीडिता किं तु मानसिकतापेन पीडिते"ति सूचयति ।

२६. तद्विज्ञानाय सोत्सुकं पृच्छति मन्त्री ।

२७. तस्या अपि स्वप्रियदर्शनयोगेच्छा भवतीति राज्ञी कथयति ।

२८. अज्ञातस्वसुतावृत्तान्तः मन्त्री कस्तस्याः प्रिय इति पृच्छति ।

२९. स्वसुतायाः प्रियस्य जीवदेवस्य सखा प्रियदेव इति राज्ञी तमावेदयति ।

कुमुदबन्धुः—३०. स सखा कश्चित्सेवको भवेत्। तादृशः कथ प्रियो भवेन्मम कुमार्याः क्षत्रियाण्याः।

चन्द्रिका—३१. स न सेवकः, मन्त्रिपुत्रः क्षत्रियः।

कुमुदबन्धुः—३२. कथमिदं भवत्या ज्ञातम्?

चन्द्रिका—३३. मम कुमारीमुखात्।

कुमुदबन्धुः-३४. तर्ह्यत्र कर्तव्योपायः?

चन्द्रिका—३५. विवाहः।

कुमुदबन्धुः-३६. अपरिचितैस्सह कथं विवाहप्रसंगः?

चन्द्रिका—३७. तव कुमार्याः परिचित एव विवाहयोग्यो वरः।

कुमुदबन्धुः-३८. वरस्य गुरुजनानुमतिर्न ज्ञायते किल।

चन्द्रिका—३९. तन्न चिंत्यम्। प्रधानसम्मतौ तदितरानुमतिरप्रधाना।

---

३०. स स्वसुताया विवाहयोग्यो भवति वा न वेति संशयः।

३१. सोऽपि मन्त्रिपुत्रः क्षत्रियः। योग्य एव वर इत्यभिप्रायः।

३२. राज्ञ्याऽयं विषयः कथं ज्ञात इति पृच्छति।

३३. मम सुता वृत्तांतमशेषमकथयदित्याशयः।

३४ तापपरिहारोपायं पृच्छति।

३५. तस्याः तत्प्रियेण सह विवाहकार्यमेव।

३६ वरस्य बान्धवाः अपरिचिताः। कथं विवाहो भवेत्?

३७. मन्त्रिपुत्र्याः स वरः परिचित इति रहस्यप्रकाशः।

३८. मातापित्रोरावयोरनुज्ञां विना मत्सुतायाः कथं तत्प्रियस्य परिचयो जात इत्याशङ्का।

३९. वध्वा स्वयं वरणं मुख्यम्। पित्राद्यनुमतिरमुख्या किल।

सेवकः—४०. जयतु जयतु महाराजः । तेजोवत्याः कश्चित्सन्देशहारी द्वारि तिष्ठति ।

चन्द्रिका–४१. शीघ्रं तं प्रवेशय ।

सेवकः–४२. यथाज्ञापयति महाराज्ञी । (तथा करोति)

सन्देशहारी–४३. (सभां प्रविश्य) सकुटुम्बपरिवारं महाराजमभिवादयेऽहं शीघ्रगामी प्रद्योतराजभृत्यः ।

सर्वे—४४. आयुष्मान् भव ।

कुमुदबन्धुः–४५. भोः शीघ्रगामिन् राजसन्देशः कः ?

शीघ्रगामी–४६. इदं पत्रम् । (पत्रं मन्त्रिहस्ते निक्षिपति)

कलानिधिः–४७. वाच्यताम् ।

कुमुदबन्धुः—४८. (वाचयति)

श्रीमद्भारतभूमण्डलमण्डनायमानकुमुद्वतीदेशाधिपं ज्योत्स्नानगरराजधानीमधितिष्ठन्तं कलानिधिवदाह्लादकरं कलानिधिभूपतिं सविश्वासं भुजद्वयेनालिङ्ग्य मित्रभूपोऽहं प्रद्योतः कुशलप्रश्न-

४०. तस्मिन्नवसरे तेजोवतीनगरादागतः शीघ्रगामिनामा कश्चित्सन्देशहारी सेवकः प्रविश्य विज्ञापयति ।

४१. तस्य प्रवेशाय आज्ञा कृता ।

४२. तत्प्रवेशः कृतः ।

४३. तेन तत्रस्थेभ्यः प्रणामाचरणं कृतम् ।

४४. तत्कृते आशीः कृता ।

४५. कश्चित्सन्देशः आनीत इति प्रश्नः ।

४६. सन्देशपत्रसमर्पणम् ।

४७. तद्वाचनाय राजाज्ञा ।

४८. तद्वाचनम्-श्रीमद्भारतभूमण्डलमण्डनायमानेत्यनेन कुमुद्वतीदेशः अतिप्रसिद्ध इति गम्यते । राजधानीमधितिष्ठन्तामित्यत्र "अधिशीङ्स्थासां

पूर्वकमेवं विज्ञापयामि । भवत्कुमार्याश्चित्रदर्शनेन अहं मम महिषी प्रभावती च अत्यन्ततुष्टावभूव । परन्तु मम पुत्रः आलेख्यस्य सत्यतापरीक्षणाय ज्योत्स्नानगरोपवने भवत्कुमारीं सञ्जीविनीं सर्वप्राणसञ्जीविनीं दृष्ट्वा यदा प्रत्यावर्तत तदारभ्य तत्प्रेमवियोगाकुलमानसः ज्वरादिभिरतिपीडितः । तन्निवारणोपायः सञ्जीविनीपाणिग्रहणमेवेति निश्चित्य तत्साधनाय भवन्तमभ्यर्थये । अस्मिन्नवसरे मन्त्रिपुत्रवृत्तान्तोऽपि किञ्चिदुच्यते । मम मन्त्रिणः विभावसोः प्रियकुमारः प्रियदेवः जीवदेवस्य सखा तेन सह प्रस्थितः-त्वदुपवने सञ्जीविनीसख्या भवन्मान्त्रिपुत्र्या प्रियदेव्या सह संलापेन तस्यां जातानुरागः स्वमित्रवत्सन्तापतप्तो भवति । इमां वार्तां भवन्मन्त्रिपुङ्गवस्य श्रुतिपथमानीय मम मन्त्रिपुत्रेण तत्कुमार्या विवाहोऽप्येकदा सम्पादयितुं कृपया भवद्भिर्यतितव्यमिति च विज्ञापयेऽहं भवत्सुहृद्वरः प्रद्योतः-

ज्योत्स्नानगरम्—मधुमासः–सितपक्षः–
द्वितीया तिथिः–सौम्यवासरः ।

---

कर्मेति'' कर्मपदम् । कलानिधिवदाह्लादकरमित्यनेन चन्द्रमिव प्रजानां सन्तोषप्रदमिति उपमार्थः । भुजाभ्यामालिङ्गन मनयोर्मित्रयो. पुरुषयोरपि प्राचीनमिदं साधुसम्प्रदायाचरणम् । मित्रभूपोऽहमित्यादिना तयोस्सौहार्द् सुप्रतिष्ठितमिति ज्ञायते । विज्ञापनाप्रकारः- भवत्कुमार्याः- सञ्जीविन्याः चित्रदर्शनेन-ब्राह्मणमुखात्प्रेषितालेख्यस्य प्रेक्षणेन अत्यन्तसन्तुष्टौ-इत्यनेन प्रभावतीप्रद्योतयोः स्वसुतस्य सञ्जीविन्या सह विवाहाय सम्मतिः प्रदर्शिता । ''परंतु'' इत्यनेन तात्कालिकप्रतिबन्धसूचना । स प्रतिबन्धः- स्वपुत्रस्य चित्रस्य सत्यतायां सन्देहः । तत्सत्यतापरीक्षार्थं ज्योत्स्नानगरोपवने सञ्जीविनीदर्शनप्रयत्नः । सर्वप्राणसञ्जीविनीम् इत्यनेन सर्वरोगपरिहारचिकित्सा सञ्जीविनीहस्तायत्तेति ध्वन्यते ।

चन्द्रिका—४९. भो मन्त्रिन् ! किं सत्यं कलयसि मम वचनम् ?

कुमुदबन्धुः—५०. सतीमणीनां वचनं न कदाप्यसत्यं भवति।

कलानिधिः—५१. भो मन्त्रिन् ! प्रतिसन्देशोऽपि अस्यैव सेवकस्य हस्ते निक्षिप्यताम्।

कुमुदबन्धुः—५२. लेख्यांशः कृपया सूचनीयः।

---

प्रेमवियोगाकुलमानसः- इत्यनेन तस्य सञ्जीविनीपाणिग्रहणे आदरो भवतीति सूचना। ज्वरादिभिरित्यनेन कामज्वरोऽत्र गृह्यते। तन्निवारणोपायः- परिहारविधिः सञ्जीविनीपाणिग्रहणं सञ्जीविन्या सह विवाहविधिः। तत्साधनाय-विवाहनिर्वर्तनाय। अभ्यर्थये-इत्यनेन सञ्जीविनी जीवदेवयोः विवाहाय आलेख्यप्रेषणावसरे मां प्रति भवतः प्रार्थना इदानीं तदर्थमेव त्वां प्रति मम प्रार्थनेति ध्वनिरभ्यूह्यः। प्रियकुमारः-मत्कुमारः यथा मम प्रियः तस्य तत्कुमारोऽपि तथा प्रिय इत्यभिप्रायः। जीवदेवस्य सखा इत्यनेन उभौ समवयस्कौ तस्माज्जीवदेवस्य विवाहेन सार्कं तस्य पुत्रस्य विवाहनिर्वर्तनमण्युचितमिति ध्वनिः। जातः अनुरागः यस्य सः जातानुरागः- बद्धप्रेमेति यावत्। श्रुतिपथमानीय श्रावयित्वेत्यभिप्रायः। मम मन्त्रिपुत्रेण-प्रियदेवेन तव मन्त्रिकुमार्याः प्रियदेव्याः। एकदा-एकस्मिन् काले। कृपयेत्यनेन मदर्थं करुणार्द्रचित्तस्सन्निति व्यज्यते। अपरिचितस्य मन्त्रिणः प्रयत्नादपि परिचितस्य राज्ञः प्रयत्नेन कार्यलाभः सुशकस्सुगम इति भावनयेयं प्रार्थना। स्थान कालादिनिर्देशः पत्रलेखने सांप्रदायिकः।

४९. कुमुदबन्धुपुत्र्याः प्रियदेव्याः विषये राज्या चन्द्रिकया यदाशङ्कितं तदानुकूल्यघटनोदन्तं पत्रिकामुखाद्विदितवत्याः राज्या वचनमेतत्।

५०. राज्योदितं सत्यं सम्पन्नमिति तस्याः प्रशंसा।

५१. प्रतिसन्देशप्रेषणे राजाज्ञा।

५२. लेख्यांशापेक्षा।

कलानिधिः–५३. मम पुत्र्याः मन्मन्त्रिणः पुत्र्याश्च एकदा मधुसितदशमीगुरुवासरे विवाहमहोत्सवो निश्चितः । तदर्थं कुटुम्ब-परिवारसमेता आगच्छन्तु भवन्त इति ।

कुमुदबन्धुः—५४. तथा । (पत्रं विलिख्य) इदं लिखितम् । शीघ्रगामिन् इदं गृहीत्वा शीघ्रं प्रद्योतराजस्य हस्तं प्रापय ।

शीघ्रगामी—५५. यथाऽऽज्ञापयत्यार्यः । प्रणमामि सर्वान् । (प्रस्थितः)

कलानिधिः–५६. भो मंत्रिन् ! प्रेष्यन्तां विवाहमहोत्सवा-ह्वानपत्रिकास्सर्वत्र । सज्जीक्रियन्तामस्मद्गौरवोचितास्सकलपरिकराः मित्रराजसामन्तभूपतिमन्त्रिसचिवब्राह्मणादिसर्ववर्णप्रजासम्मानार्हाः समस्तवैभवोपात्ताः चन्द्रिकाहृदयतृप्तिकराश्च ।

चन्द्रिका–५७.

अम्बरं भूषणं गाहनं भोजनं दीपिका मालिकाक्रीडिकाऽऽश्वासिका ।
मन्दिरं वाहनं गीतकं वीक्षणं पाचका वाचकास्सेवकास्सेविकाः ॥२०

---

५३. उभयविवाहनिश्चयोपात्तमङ्गलपत्रिकारीतेस्सूचनम् ।

५४. शीघ्रगामिनामकसन्देशहारिद्वारा आह्वानपत्रिकाप्रेषणम् ।

५५. शीघ्रगामिनो निष्क्रमणम् ।

५६. सर्वेषां मङ्गलपत्रिकाप्रेषणाय विवाहापेक्षितसकलसम्भारसज्जी-करणाय च मन्त्रिणे राजाज्ञा । सकलपरिकरपर्याप्तिनिश्चयाय राज्ञ्यास्सम्मति-रावश्यकीति च सूचिता ।

५७. अम्बरमिति-अम्बरं-वध्वाः वधूजनानाम्, वरस्य-तद्बन्धूना-माहूतानां राज्ञां तत्परिवाराणां प्रजाप्रमुखानां सेवकजनानाम्-अतिथ्या-दीनां तत्तद्योग्यतानुसारेण बहुमानार्हाणि वस्त्राणि । भूषणं तादृशानि भूषणानि । गाहनं-स्नानोपकरणानि । भोजनम्-अभ्यवहारायावश्यकपदार्थाः, दीपिका-दीपमालादिप्रकाशसाधनानि । मालिका-विविधविचित्रपुष्पमालिकाः ।

इत्यादि सर्वं समृद्धं भवतु ।

कुमुदबन्धुः—५८. सर्वं सुष्ठु साध्यते—

त्वयि राज्ञि त्वयि राज्ञ्यां युवयोराज्ञा मयाद्य सन्धार्या ।
परिकरकलने सुजना निरताश्शक्तास्सुमोदभरितास्ते ॥२१॥

कलानिधिः—५९. सुप्रीतोऽहम् । साधयामः ॥

॥ निष्क्रान्तास्सर्वे ॥

---

क्रीडिका-तत्तद्विहारयोग्योपकरणानि । आश्वासिका शय्याछत्रचामरादयः । मन्दिरम्-आहूतानां विविधस्थलवसतयः । वाहनं गजाश्वरथादयः । गीतकं भेरीमृदङ्गकाहलादीनि, वीणादितन्त्रीवाद्यानि मुरजादित्वङ्नद्धवाद्यानि, वेण्वादिमुखवाद्यानि, तालादिकालसूचकलयगतिसाधकवाद्यानि, तदाश्रयभूतनटनटीगायकगायिकादयः । वीक्षणं-दर्शनप्रदर्शनार्हस्थलद्रव्यादीनि । पाचकाः-पाककर्मकुशलाः । वाचकाः-पुरोहितादयः । सेवकाः-भृत्याः । सेविकाः-परिचारिकाः ; एते सर्वे सम्यक् सज्जीक्रियन्तामिति मन्त्रिणे राज्ञीकृताज्ञा । स्रग्विणीवृत्तम् । तल्लक्षणम्-"रैश्चतुर्भिर्युता स्रग्विणी सम्मता" इति ॥२०॥

५८. सर्वं सम्पाद्यते इति मन्त्रिणा राज्ञः राज्ञ्याश्च आज्ञानुपालने स्वस्यादरः सूच्यते । यथा—

त्वयीति—त्वयि-कलानिधौ राज्ञि आज्ञाकर्तरि सति त्वयि-चन्द्रिकादेव्यां राज्ञ्या आज्ञाकर्त्र्यां सत्यां युवयोराज्ञा-राजदम्पत्योरादेशः मयाऽद्य, सन्धार्या- मया श्रद्धाभक्तिपूर्वकं निर्वर्तितव्यः । सुजना - भवत्प्रजाः परिकरकलने-सकलसामग्रीसम्पादने निरताः- आदरयुक्ताः शक्ताः- समर्थाः प्रमोदभरिताः- स्वयमेव प्रीतियुक्ताश्च भवन्ति । गीतिर्वृत्तम् ॥२१॥

५९- तव वचनं मे सन्तृप्तिं ददाति । स्वस्वव्यापारनिर्वर्तनाय गच्छामः ।

॥ इति चतुर्थदृश्यव्याख्या ।

---

## ॥ पञ्चमदृश्यम् ॥

---

नेपथ्ये—

तेजोवत्याः प्रमोदात्सपरिकरनृपो मन्त्रिमुख्याश्च विप्रा-
स्सञ्जीविन्याश्च सख्याः परिणयविधयेऽत्रागतास्सावरोधाः ।
विश्रम्यालं विशेषाद्गजतुरगरथाधिष्ठितानां जनानां
स्थाने स्थाने च तेषां पथि पथि बहुधा कल्पिते सौख्ययोग्ये ॥२२॥

कलानिधिः—१. भो मन्त्रिसचिवाः ! कन्यापक्षीया वयमिदानीं वरपक्षीयाणां प्रत्युद्गमेन स्वागताशंसनाय सपरिवारं प्रचलिष्यामः। समुचितानि वाहनान्यारुह्य सज्जीभवत सर्वे ।

---

॥ पञ्चमदृश्यव्याख्या ॥

तेजोवत्या इति—सपरिकरनृप·-सकलपरिवारसहितो राजा प्रद्योत· मन्त्रिमुख्याः- प्रधानमन्त्रिणः । विप्राः- ब्राह्मणाः । सञ्जीविन्याः-तन्नामकराजकुमार्याः सख्याश्च-सञ्जीविनीसख्याः प्रियदेव्याश्च,परिणयविधये-विवाहार्थं तेजोवत्याः- तन्नामकनगरसकाशात्, प्रमोदात् - अत्यन्तहर्षेण, अत्रागताः- ज्योत्स्नानगरं प्रत्यायाताः । कथमायाताः ? तेषां राजादीनां विशेषात् गजतुरगरथाधिष्ठितानां जनानां-तत्रापि हस्त्यश्वरथारूढानां सौख्ययोग्ये-सुखावासभूते, पथि पथि-प्रतिमार्गं, बहुधाकल्पिते-अनेकप्रकारेण निर्मिते, स्थाने स्थाने-तत्र तत्र स्कन्धावारशिबिरार्हेषु स्थलेषु, अलं विश्रम्य-सम्पूर्णमार्गसंयानजनितायासं परिहृत्य आगता इत्यर्थः । स्रग्धरावृत्तम् ॥२२॥

१. राजा कलानिधिः वरपक्षीयाणां सम्प्रदायानुसारेण प्रत्युद्गमनार्थं सर्वानाज्ञापयति ।

सर्वे—२. यथाऽऽज्ञापयति प्रभुवर्यः। (मङ्गलवाद्यानि प्रचलन्ति। अन्तःपुरनार्यः शिविका रथांश्च आरोहन्ति। सर्वे राजपुरस्सरं प्रचलन्ति)

कलानिधिः—३. (रथाऽवरोहणानुपदमेव प्रद्योतभूपतिमाश्लिष्य तद्वरकुमारं जीवदेवं वरं पाणिपीडनेन सम्भाव्य स्वागतं पृच्छति। यथा–)

अपि क्षेमं राज्ये तव सचिववर्गे जनततौ
सुखं जातं यानं समुचितविहारेण कलितम्।
अपि स्वास्थ्यं जीवे प्रणयजनयोगाय विहिते
भवद्योगाद्राजन्! वयमिह सुधन्यास्सुकृतिनः ॥२३॥

---

२. सर्वे तथा मङ्गलद्रव्यमहिताः प्रतिष्ठन्ते।

३. समयोराश्लेषः असमयोः पाणिपीडनमित्यादि बन्धुसत्कारमर्यादाशास्त्रविहिता। कुशलप्रश्नश्च कृतः। यथा—

अपीति—राज्ये-भवता देशेषु, सचिववर्गे-सचिवाद्यधिकारिषु, जनततौ-प्रजासु, अपि क्षेमं-कुशलं किम्? अत्र 'अपि' शब्दः प्रश्नार्थकः। समुचितविहारेण कलितं यान-राजार्हपरिच्छदपरिकरेण सम्पादितं प्रस्थानम्, अपि सुखं जातं?-निर्बाधं जातं किम्?-सुखेनागता यूयं किमित्यर्थः। प्रणयजनयोगाय विहिते, सञ्जीविनीपाणिग्रहणाय सङ्कल्पिते, जीवे-जीवदेवनामके तव पुत्रे, अपि स्वास्थ्यं-शरीरस्वास्थ्यं भवति किम्? सञ्जीविनीवियोगेन सन्तप्तमानसो जीवदेवः इदानीं सुमनाः भवति किमिति ध्वनिः। प्रणयजनवियोगेन विमनस्कत्वं तेन शरीरसन्तापाद्याविर्भाव. तादृशजनसुयोगेन सुमनस्कत्वम्। तदद्य सम्पद्यत इति शरीरेऽपि हर्षोत्कर्षाद्रोमाञ्चाद्याविर्भावः भवतीत्याकूतेनैवंविधः प्रश्नः। अत्र प्रणयिजन एव विप्रलम्भसंभोगशृंगाराख्यरसाधारकरत्याख्यस्थायिभावस्य आलम्बनविभावः। तद्वियोगसुयोगौ क्रमेण उद्दिपनविभावौ, विमनस्कत्वाङ्गव्यापारौ क्रमेणानुभावव्यंजकौ, शरीर-

प्रद्योतः—४. वयमपि भवतां कुटुम्बे कुशलं पृच्छामः

बान्धव्यं घटते परस्परमहापुण्येन सम्पादितं
  सम्प्रार्थ्य सुजनैर्विवाहविधिना कन्यावरोत्साहिना ।
येनेदं चलतीह कार्यबहुलं संसारचक्रं सदा
  रोधेष्वस्खलितं सुखेन कलितं नीचोच्चमार्गेष्वपि ॥२४॥

(स्त्रियः स्त्रियो मन्त्रिणो मन्त्रिणः सचिवास्सचिवान् पुरोहिताः पुरोहितान् सेनापतयस्सेनापतीन् भृत्याः भृत्यवर्गान् कुशलानि आपृच्छय तत्तदुचितवाहनेष्वारोप्य यथायोग्यकल्पितावसथेषु प्रवशेयन्ति । उपाहारान् समर्पयन्ति अपेक्षितानि सौकर्याणि कल्पयन्ति । यथातुष्टि सभाजयन्ति)

(परदिने शुभलग्ने सञ्जीविनीजीवदेवयोः प्रियदेवीप्रियदेवयोश्च विवाहमहोत्सवः प्रचलति)

---

संतापहर्षोत्कर्षौ क्रमेण व्यभिचारिभावौ भवत इति सूचनं ध्वनिविवेचनचणानां रसतत्वविदामवगाहनाय पार्यते । हे राजन्-मित्र प्रद्योतभूप भवद्योगात् भवद्भिस्सह जनिष्यमाणसम्बन्धेन वयं धन्याः सुकृतिनश्च भवामः । पुराकृतपुण्यविशेषेण भवद्भिस्सम्बंधो भवतीत्यभिसन्धिः । ॥२३॥

४. प्रद्योतराजोऽपि कुशलप्रश्नं करोति यथा—बान्धव्यमिति—परस्परमहापुण्येन सम्पादितं वधूवरबन्धुभिः सुकृतविशेषैरार्जितं बान्धव्यं घटते-विवाहसम्बन्धेन बन्धुत्वं सम्भवति । तादृशबन्धुत्वं सुजनैः-पुण्यपुरुषैः कन्यावरोत्साहिना विवाहविधिना सम्प्रार्थ्य कन्यावरघटनापादकविवाहसंस्कारेणैव सम्पाद्यं भवति । यतः-येन विवाहघटनोपात्तदम्पतीभावेन कार्यबहुलं संसारचक्रं सदा चलति-आविवाहात्ययपर्यंतं करिष्यमाणानेक-

पुरोहिताः—५. लग्नकालस्समुपस्थितः- कल्याणमण्डपं प्रविशन्तु वधूवराः—तन्मातापितरः-तद्बान्धवाः- तत्पक्षीयास्सर्वे ।

(ततः एकत्र राजपुत्रीविवाहमण्डपं प्रविशन्ति कलानिधिश्चन्द्रिका, वधूस्सञ्जीविनी च, तथा प्रद्योतः प्रभावती वरो जीवदेवश्च। अन्यत्र मन्त्रिपुत्रीविवाहमण्डपं प्रविशन्ति कुमुदबन्धुः, कुमुद्वती, वधूः प्रियदेवी च, तथा विभावसुः भामती वरः प्रियदेवश्च। उभयत्र तूर्यमृदङ्गादिमङ्गलवाद्यैः विवाहविधिमन्त्रैस्सह विवाहमहोत्सवः प्रचलति)

पुरोहिताः—६. निश्चितार्थो निश्चितार्थो निश्चितार्थः ।

---

विधकार्यभारतुमुल शरीरयात्रारूपसंसारचक्रं प्रचलति । सुखदुःखपर्यायपरम्परास्पदव्यापारैर्निरन्तरं संसरति । यथा—रोधेऽप्यस्खलितं सत्-प्रतिबन्धसामग्रीवशान्निरुद्धमपि तदुपेक्षया वा मरणेन वा गतिविच्छेदरहितं सत्-नीचोच्चमार्गेष्वपि सुखेन कलितं सत् निम्नोन्नतकण्टकपाषाणपर्यावृतमार्गेष्वपि अविपर्यासेनैव गच्छत्सत् प्रचलतीति यावत् । सदम्पती सुखदुःखादिषु अविकलमेकरूपेण स्वकार्याणि सर्वदा निर्वर्तयन्तौ सुखदुःखभाजौ भवत इति तात्पर्यम् । अत एवोक्तं भवभूतिमहाकविना—"भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते" इति । शार्दूलविक्रीडितवृत्तम् ॥२४॥

५. लग्नकालः—निरीक्षणकाल इति यावत् सः वधूवरयोः प्रथमसन्दर्शनापादकः । समुपस्थितः-प्राप्तः ।

६. निश्चितार्थः-अर्थः-इयं कन्या अस्मै वराय दीयते इति विषयः निश्चितः । वधूवरबन्धुभिरित्यर्थः । विवाहार्थेषु मुख्यकर्मसु इदं प्रथमं प्रधानं च ।

सर्वे—७. तथास्तु! तथास्तु! तथास्तु। (वधूवरयोः तन्मातापित्रोश्च शिरसां उपरि मन्त्राक्षतान् विकिरन्ति)

पुरोहिताः—८. मधुपर्को मधुपर्को मधुपर्कः।

सर्वे—९. तथास्तु तथास्तु तथास्तु। (मधुपर्कव्यापारः प्रचलति)

पुरोहिताः—१०. निरीक्षणं निरीक्षणं निरीक्षणम्।

सर्वे—११. निरीक्षणमुहूर्तः शुभमुहूर्तोऽस्तु।

उभयत्र-वरः—१२. धर्मे च अर्थे च कामे च नातिचरितव्यम्।

---

७. तत्काले सन्निहितास्सर्वे साक्षिरूपेण तादृशनिश्चितार्थं "तथास्त्वि"त्यङ्गीकुर्वन्ति।

८ मधुपर्कः-अस्मिन् कर्मणि कन्यादाता स्वपत्न्या सह विवाहार्थमागतं वरं अतिथिवत् अर्घ्यपाद्यादिभिः पूजयति। अस्यैव "वरपूजा" इति लोके व्यवहारः।

९. महाजनाः तत्कर्मापि तथास्त्वित्यङ्गीकुर्वन्ति।

१०. निरीक्षणं वधूवराभ्यां प्रथमतया परस्परावलोकनम्, एतत्काल एव विवाहलग्नकाल इति प्रायशो व्यवहारः। सर्वत्र त्रिरुक्तिः तत्तत्कर्मसमृद्धिस्संघटितइति ज्ञापनार्थम्।

११. पूर्ववत्सर्वे एतत्कर्माण्याशीर्भिस्सहानुमोदन्ते।

१२. "धर्मे च अर्थे च कामे च नातिचरितव्यम्" इदमेव दाम्पत्यबन्धनरूप सूत्रप्रायिकं प्रतिज्ञावाक्यम्। अस्यार्थः-। धर्मे-वरेण वा वध्वा वा आचरिष्यमाणदेवतापूजादिकार्येषु स्वस्वकर्तव्यविध्युक्तव्यापारेषु अहिंसासत्यादिपालने दानधर्मादिव्यवहारेषु वा,

वधूः—१३. नातिचरामि ।

उभयत्र-वधूः-१४. धर्मे च-अर्थे च-कामे च-नातिचरितव्यम् ।

वरः—१५. नातिचरामि ।

पुरोहिताः—१६. पाणिग्रहणमुहूर्तश्शुभमुहूर्तोऽस्तु ।

सर्वे—१७. शुभमुहूर्तोऽस्तु ।

पुरोहिताः—१८. माङ्गल्यधारणमुहूर्तः शुभमुहूर्तोऽस्तु ।

सर्वे—१९ शुभमुहूर्तोऽस्तु । (माङ्गल्यधारणं प्रचलति) (ततः प्रधानहोमः- प्रचलति) (अग्निप्रदक्षिणानन्तरम् ),

---

अर्थे—भूगृहादिभोग्यवस्तुसम्पादने विशेषकार्यनिर्वाहे, विद्यार्जने-द्रव्यार्जने-ज्ञानार्जने, कामे-सन्मार्गेण सम्पादितवस्तूपभोगे, पारत्रिकसुखाद्यपेक्षायां, विविधसङ्कल्पेषु च, नातिचरितव्यम्-पत्नीं विना पतिः पतिं विना पत्नी नातिचरेत्-उभयसाधारणतया यावज्जीवं साधयेदिति सङ्ग्रहार्थः । अत्रविवाहे नातिचरितव्यमिति वरः पत्नीं ब्रूते ।

१३. नातिचरामीति वधूः प्रतिजानीते । अयमेव वधूवरयोः प्रतिज्ञाबन्ध. यावज्जीवं संसारे तावनुबध्नाति ।

१४. तथैव नातिचरितव्यमिति वधूः वरं प्रति ब्रूते ।

१५. तथैव नातिचरामीति वरः प्रतिजानीते ।

१६. विवाहो निर्विघ्नं निर्वर्तित इति सूचनार्थमिदं पुरोहितकृतं प्रार्थनावचनम् ।

१७. इदं महाजनाभ्युपगमसूचकमाशीर्वचनम् ।

१८. माङ्गल्यधारणम्-सुवर्णपदकसहितं सुवर्णादिनिर्मितसूत्रं वरः वधूकण्ठे बध्नाति । इदं सूत्रं यावज्जीवं बध्वा धार्यम् । इदमेव सौमङ्गल्यसूचकं पतिजीवितसूचकं च ।

१९. महाजनाः साक्षतमङ्गलद्रव्यसमर्पणेन वधूमाशीर्भिरभिनन्दन्ति। ततः प्रधानहोमानन्तरं वेदमन्त्राशिषा महाजनसत्कारेण च विवाहः पूर्णो

पुरोहिताः—२०. सप्तपदीकर्मसमृद्धिरस्तु । (तदनु वेद-घोषैः ब्राह्मणाशीर्वादाः प्रचलन्ति)

अनन्तरम्—

कलानिधिः—२१. (वधूपिता कलानिधिः जीवदेवहस्ते सञ्जीविनीहस्तमाधिवेश्य-)

इयद्वर्षा भवेत्कन्या पुत्रवत्पालिता मया ।
इदानीं तव सेवार्थं दत्ता स्नेहेन पालय ॥२५॥

(कुमुदबन्धुरपि प्रियदेवहस्ते प्रियदेवीहस्तमाधिवेश्य तथैवाशंसते-)

---

भवति । अथ विवाहविधिः देशभेदेन सूत्रकारमतभेदेन च विभिद्यते । अत्र तु आन्ध्र-कर्णाटकसम्प्रदायमनुसृत्य निर्देशः कृतः । विवाहस्य उद्देशस्तु सर्वत्र आर्येषु एकरूप एव ।

२०. सप्तपदीकर्म तु सप्तपदविन्यासेन प्रधानहोमाग्निप्रदक्षिण-रूपम् । अनेनकर्मणा विवाहः निरूढो भवतीति धर्मशास्त्रकाराः ।

२१. वरस्य स्वगृहप्रवेशात्पूर्वं वधूप्रस्थानावसरे वरहस्ते वधूहस्तं निक्षिप्य एवं ब्रवीति श्वशुरः कलानिधिः—इयदिति—कन्या-इयं वधूः सञ्जीविनी इयद्वर्षा भवेत् षोडशवर्षा भवतीति प्रकृतार्थः । यत्र शास्त्रविहितः सम्प्रदायः प्रचलति, तत्र 'अष्टवर्षा' 'नववर्षा' 'दशवर्षा' इति इयद्वर्षशब्दार्थो ज्ञेयः । रजस्वलादशानन्तरं प्रायशः कन्या दूषिता भवतीति रजस्वलादशाकालः एकादशवर्षादारभ्यत इति च मत्वा शास्त्रकारैर्बाल्यविवाहो विहितः । तथा चोक्तम्-"अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी । दशवर्षा भवेद्गौरी तत ऊर्ध्वं रजस्वला" इति । निषेकनामकदम्पतीसंयोगकालस्तु षोडशवर्षेभ्यः अनन्तरमेव भवतीति सर्वशास्त्रसम्मतं विधानं विहितम्, सम्प्रदायानुष्ठितं च वर्तते । पुत्रवत्पालिता मया-मयेयं पुत्रनिर्विशेषं संरक्षिता भवति । इदानीं तव सेवार्थं दत्ता-अद्य तवायत्ता कृता इतः परमियं तव सेवापरा भवति । स्नेहेन पालय-इमां प्रीतिभावेन एकदेहन्यायेन परिपालयेति प्रार्थनावचनम् । इदं श्लोकवृत्तम् ॥२५॥

कलानिधिः (प्रद्योतं प्रति-)

आवयोर्बन्धुसंयोगो दैवेनापादितो यतः ।
इतः परं स्नेहभावो भूयाद्बोश्शाश्वतोऽत्र नः ॥२६॥

प्रद्योतः—२२. तथास्तु ।

पुत्रवध्वोर्निर्विशेषस्नेहो भवति मे सदा ।
प्रभावत्यास्तथैवेति ज्ञायतां मित्रभूपते ॥२७॥

चन्द्रिका—(प्रभावतीं प्रति-)

भवतु ते गृहे भव्यमङ्गलं मम सुता भवेत्ते सुता यथा ।
जयतु मे सुता भर्तृवश्यका तव सुतोऽपि तां पालयेत्प्रियात् ॥२८॥

---

आवयोरिति—भोः अयि प्रद्योतभूपते ! आवयोः बन्धुसंयोगः-अस्मदुभयपक्ष बान्धव्यं यतः-यस्मात् कारणात् दैवेनापादितं-विधिना सम्पादितम्-तस्मात् कारणात् इतःपरं यावज्जीवं नः-अस्माकम् अत्र-भूम्यां स्नेहभावः शाश्वतः भूयात्-प्रीतिः निरन्तरा भूयादिति कलानिधेराशंसा ॥२६॥

२२. तथास्त्विति प्रद्योतस्यानुमोदः। तथैवाशंसति-यथा कलानिधिराजेनाशंसितम् ।

पुत्रेति—मे-मम सदा-निरन्तरं पुत्रवध्वोः-जीवदेवसञ्जीविन्योर्विषये, निर्विशेषः स्नेहो भवति-निष्पक्षपातेन एकरूपैव प्रीतिर्भवति । मित्रभूपते-अयि मत्सुहृत्कलानिधे ! प्रभावत्यास्तथैवेति ज्ञायताम्-मत्प्रियायाः प्रभावत्याः तयोर्विषये तद्वन्निर्विशेषस्नेहो भवतीत्यवगच्छेति प्रद्योतस्य प्रत्युत्तरम्॥२७॥

भवत्विति—ते गृहे भव्यमङ्गलं भवतु मम सुतायाः-सञ्जीविन्याः युष्मद्गृहप्रवेशे-युष्मन्निकेतने क्षेमङ्कराणि शुभकार्याणि प्रसरन्तु । ममसुता ते तव सुता यथा तथा भवेत्-त्वं मत्सुता सञ्जीविनीं तव वधूं, तव सुतां सुप्रभामिव आद्रियस्वेति तात्पर्यम् । मे सुता सञ्जीविनी भर्तृवश्यका जयतु पत्युः

जननिवत्प्रिया त्वं सदाऽव तां जनकवत्पतिस्तेऽत्र पातु ताम् ।
इति निजाशयं वेदयामि ते सखि तवाशयं बोधयाशु माम् ॥२९॥

प्रभावती—

तनया ते मम पुत्री मद्गृहवासस्त्वदीयगृहवासः ।
भर्ता मे स पिताऽस्याः प्रेम्णा भर्तापि पालयत्यार्याम् ॥३०

---

सहधर्मिणी तन्मार्गानुरोधिनी सती सर्वोत्कृष्टा वर्तताम् । तव सुतोऽपि-जीवदेवोऽपि तां-सञ्जीविनीं प्रियात् पालयेत्-प्रेम्णा रक्षतु ॥२८॥

जननीति—त्वं-त्वमपि सदा-अनवरत तां-तव वधूं सञ्जीविनीं जननिवत्-मातृवत् मातृस्थानीया सती प्रिया-प्रीतिकारिणी भूत्वा अव परिपाल्य । 'जन्' धातोः 'अनि' प्रत्यये कृते 'जननि' इति इकारान्तरूपं भवति । ते-तव पतिः-प्रद्योतराजोऽपि तां-सञ्जीविनी जनकवत् कलानिधिवत् पितृस्थानीयो भूत्वा अत्र-अस्मिन् प्रपञ्चे पातु-पालयतु । इति-एवं निजाशयं तव वेदयामि-मम सहजाभिप्रायं ते ज्ञापयामि । सखि-अयि सखि प्रभावति! आशु इदानीमेव तवाशयं मां बोधय-तवाभिप्रायमपि मे निवेदय, इति प्रभावतीं प्रति चन्द्रिकायाः प्रार्थनावचनम् । सम्मता-वृत्तम् ॥२९॥

तनयेति—ते तनया-तव सुता सञ्जीविनी मम पुत्री-मम सुता भवतीति भावय । मद्गृहवासः- अस्याः मम गेहे निवासःत्वदीयगृहवासः-तव गृहनिवासो भवतीति श्रद्धत्स्व । मम भर्ता (यः) सोऽस्याःपिता-मत्पतिः प्रद्योतः सञ्जीविन्याः पितेवाचरतीति सुदृढं जानीहि । भर्ताऽपि-तत्पतिः जीवदेवोऽपि आर्यां मान्यां तां सञ्जीविनीं प्रेम्णा पालयति-प्रीतिपूर्वकं रक्षतीति निस्संशयं मन्यस्वेति प्रभावत्या कृतं प्रत्याशास्पदं वचनम् । वृत्तं-गीतिः ॥३०॥

कुमुद्वती—(भामतीं प्रति-)

भामति प्रियकरी त्वमवेहि स्तुत्यवाक् सुवशगा प्रियदेवी।
चारुहासकलितां मम पुत्रीं पालयाम्ब सुखिनीं तव गेहे ॥३१

भामती—

संशयं त्यज सुधीःकुमुद्वति त्वत्सुता मम गृहे सुखाद्वसेत्।
मत्पतिः प्रियसुतोऽपि तां हिताद्रक्षतो भवति सा यशस्करी ॥३२॥

---

भामतीति—भामति-अयि सखि विभावसुप्रिये ! प्रियदेवी मम सुता तव वधू प्रियकरी-प्रीतिवर्धिनी । स्तुत्यवाक्-मितमधुरभाषिणी । सुवशगा-गुरुजनानां विधेया त्वन्मतवर्तिनी भवति । तां चारुहासकलितां मम पुत्रीं तव गृहे सुखिनीं पालय-मातः हसन्मुखीं मत्सुतां प्रियदेवीं युष्मन्निवासे सुखितां कुर्विति प्रद्योतमन्त्रिभार्या भामतीं प्रति-कलानिधि-मन्त्रिणः कुमुदबन्धोः भार्याया कुमुद्वत्याः सप्रेमवचनम् । स्वागतावृत्तम्—तल्लक्षणम्-"स्वागतेतिरनभागुरुयुग्मम" इति ॥३१॥

संशयमिति—सुधी, सुमते अयि कुमुद्वति-सखि प्रियदेवीजननि ! संशयं त्यज-तवपुत्रीविषये कातरता मास्तु ते । त्वत्सुता तव पुत्री प्रियदेवी मम गृहे सुखाद्वसेत्-भर्तृगृहे सुखेन निवसति । अत्र निश्चयार्थे 'लट्' स्थाने 'विधिलिङ्' प्रयोगः । मत्पतिः प्रियसुतोऽपि मम भर्ता विभावसुः, तस्यामनुरागभाक् मम पुत्र. प्रियदेवश्च तां हिताद्रक्षतः-तव सुतां प्रियदेवीं हितकरबुध्या परिपालयतः । सा यशस्करी भवति । सा-त्वत्सुता त्वद्वंशस्य कीर्तिप्रदा भवतीति भामत्याः प्रत्याशाजनकं प्रतिवचनम् । रथोद्धतावृत्तम् तल्लक्षणम्—"रान्नराविह रथोद्धता लगौ" इति ॥३२॥

प्रियदेवीति—भो मन्त्रिन् विभावसो ! गेहे-तव गृहे-गुणलुब्धां प्रियदेवीं पालय-सुगुणशालिनीं मम पुत्रीं तव वधूं संरक्ष । मित्र अयि सखे विभावसो अस्या रक्षणाय-प्रियदेवीसंरक्षणविषये मम कार्यं तव कार्यं विद्धियथा मया कर्तव्यं तथा त्वया कर्तव्यमिति जानीहि । मत्स्थाने त्वं

कुमुदबन्धुः— (विभावसुं प्रति)

प्रियदेवीं गुणलुब्धां पालय गेहे विभावसो मन्त्रिन्।
मम कार्यं तत्र कार्यं विद्धि त्वं मित्र रक्षणायास्याः ॥३३॥

विभावसुः—

सुतेव पाल्या मम ते सुता स्यात्त्वं विद्धि धैर्यान्मम सत्प्रतिज्ञाम्।
अथान्यथा चेत्कुलपांसुरस्मि सुतो ममेदृक् शपथेन बद्धः ॥३४॥

कुमुदबन्धुः–२३. महान्प्रमोदः।

(ततः भोजनसन्मानादिकं प्रवर्तते। युक्तकाले वरपक्षीयाः सर्वे नववधूभ्यां सह प्रस्थानायोद्युक्ताः)

प्रद्योतः—२४. गम्यतेऽस्माभिः, अचिरात्पुनर्दर्शनमस्तु।

कलानिधिः—२५. भवतां पन्थानः निरन्तराया भवन्तु।

---

स्थित्वा तां पितृवत्सम्यक् परिपालयेति तात्पर्यम्। इदं प्रियदेवजनकं प्रति प्रियदेवीजनकवचनम्। वृत्तं गीतिः ॥३३॥

सुतेवेति–ते सुता मम सुतेव पाल्या स्यात्-तव पुत्री प्रियदेवी मम पुत्रीव परिपालनार्हा भवति। अन्यथा चेत्-अहम् अन्यथा तां संभावयामि चेत् कुलपांसुरस्मि-वंशदूषको भवामि। मम सुतोऽपि ईदृक्शपथेन बद्धः-मम पुत्रः प्रियदेवोऽपि एवमेव शपथ करोतीति विद्धि इति विभावसोः प्रमाणवचनम्। उपजातिवृत्तम्। वा पादान्तं विकल्पेन इति शासनादत्र तृतीयपादान्तस्थलघुवर्णः गुरुरिति भाव्यम् ॥३४॥

२३. एतत्प्रमाणवचन श्रुत्वा कुमुदबन्धुः भृशं सन्तुष्टः।

२४. वयं स्वदेशं प्रति गच्छाम। दैवानुग्रहेण भवतां पुनर्दर्शनं शीघ्रमेव भूयादिति प्रयाणायाज्ञाप्रार्थनारूपं साम्प्रदायिकं वचनम्।

२५. मार्गे तावत् प्रयाणस्सुगमो भवत्वित्यनुज्ञावचनम्।

सञ्जीविनी–२६. प्रणमामि मातापितरौ ।

चन्द्रिका—

श्वश्रूप्रीतिश्श्वशुरहितमतिर्यातृमैत्री त्वयार्थ्या
भर्तृस्नेहस्तदनुजकरुणा सख्यमेवात्तिकादौ ।
देवे भक्तिः परिजनभरणं नम्रभावस्त्वयाऽर्थ्या-
स्सच्छीलेनोभयकुलसुयशः पात्रभूताऽत्र भूयाः ॥२५॥

कलानिधिः—

सर्वानुरोधात्कलहो न गेहे वर्तस्व सर्वैश्च यथाऽऽदृता स्याः ।
पतिव्रता सा पतिमार्गगा या स्तुता भव त्वं गुणशीलवृत्तैः ॥२६॥

---

२६. पतिगृहगामिन्या नूतनवध्वा मातापितृवन्दनं तदुक्ताशीः-परिग्रहणमपि सम्प्रदायानुगृहीतम् । श्वश्रूप्रीतिरिति–अयि पुत्रि सञ्जीविनि तव श्वश्र्वाः प्रभावत्याः प्रीतिः वात्सल्यं त्वयि-तव तस्यां विश्वासपूर्वकगौरवं च । श्वशुरहितमतिः-तव श्वशुरस्य प्रद्योतराजस्य विषये सेवा बुद्धिः भक्तिश्च । तव कृते तस्य हितचिन्तनम् । यातृमैत्री-देवरपत्नीषु स्नेहः । तासां त्वयि प्रीतिः एतास्सर्वाः त्वयार्थ्याः त्वया प्रार्थनीया इति यावत् । भर्तृस्नेहः-पत्युस्सकाशात्प्रेम-पत्यौ भक्तिः प्रेम च । तदनुजकरुणा-देवरादिषु तव दया तेषां त्वयि आदरः । अत्तिकादौ सख्यमेव-पत्युः भगिनीस्वसृजनेषु ते सहोदरीभावः तासां त्वद्विषये सखीधीः । तथा देवे भक्तिः-देवताविषये श्रद्धाभक्तिः । परिजनभरणं-आश्रितजनानां पोषणम् । नम्रभावः-सर्वेषु विनय-प्रदर्शनम् । एतेऽपि त्वयाऽर्थ्याः- त्वया सम्पादनीया भवन्ति । अत्र अन्तिमं विशेष्यपदं पुल्लिङ्गे वर्तते तदनुसारेण पुल्लिङ्गविशेषणम् । बहुवचन-प्रयोगस्तु द्वन्द्वसमासनिमित्तकः । त्वं सच्छीलेन उभयकुलसुयशःपात्रभूताऽत्र भूयाः-त्वं पातिव्रत्यरक्षणादिसुवृत्तेन जातप्रविष्टकुलयोः- जनकश्वशुरकुलयोः कीर्तिसम्पादनाय योग्या भवेति मात्रा चन्द्रिकया स्वसुतायास्सञ्जीविन्या उपदिष्टाः श्रेयस्कर्यः हितोक्तयः । चित्रलेखावृत्तम् ॥२५॥

सञ्जीविनी-२७. पित्रोरुपदेशाशीर्बलेन पालयेऽहं स्वकर्तव्यम् ।

प्रियदेवी—२८. गुरुजनानभिवादये ।

कुमुद्वती-२९. देव्या चन्द्रिकया स्वसुतायै कृतोपदेश एव ममोपदेशस्ते इति जानीहि ।

प्रियदेवी—३०. सम्यगवगतम् ।

कुमुदबन्धुः-३१. कुमारि देवेन कलानिधिना विहिताशिषैव त्वामनुशास्मि ।

---

सर्वेति—गेहे-गृहे सर्वानुरोधात्-सर्वैस्सह अनुकूलवर्तनात् न कलहः-परस्परविरोधो न जायते । अतः त्वं सर्वैः-गृहे स्थितैरखिलैः यथाद्दता स्याः-येन प्रकारेण सम्भाविता भवेः तेन प्रकारेण वर्तस्व-आचर । या पतिमार्गगा सा पतिव्रता-पतिमतानुवर्तिनी या सैव पतिव्रता पतिप्रिया च भवति । तस्मात्त्वं गुणशीलवृत्तैः- दयाविनयौदार्यादिसुगुणैः- सत्यशौचादिसुशीलेन गुरुजन-सेवादिसुवृत्तैश्च स्नुषा भव-सर्वैः प्रशंसिता सन्मानिता च भवेति स्वसुतायाः कलानिधेस्सदुपदेशः । वृत्तमुपजातिः ।

२७. मातापितृकृतहितोपदेशान् तदाशीर्बलेनैव पालयामीति सञ्जीविन्याः प्रशंसनीया विनयोक्तिः ।

२८. प्रियदेव्यपि स्वश्वा मातापितरावभिवन्द्य प्रस्थानायाऽनुज्ञां प्रार्थयते ।

२९ सञ्जीविन्यै स्वमातृकृतोपदेश एव प्रियदेव्यै तन्मातृकृतोपदेश इति भावयितव्यमिति कुमुद्वती स्वसुतामभिवदति ।

३०. तत्सर्वं सम्यङ्मयाऽवधारितमिति प्रियदेवी वदति ।

३१ कलानिधिना स्वपुत्र्याः कृतानुशासनमेव स्वसुतायाः स्वकृतानुशासनमिति कुमुदबन्धुः स्वसुतामाशास्ते ।

प्रियदेवी—३२. धन्याऽस्मि ।

(स्त्रीजनाः वधूजनैरनुज्ञाताः स्वोचितवाहनान्यारोहन्ति । सर्वे तेजोवतीमनुयान्ति)

(सर्वे निष्क्रान्ताः)

इति श्रीवेङ्कटरमणार्यविरचिते

"जीवसञ्जीविनीनाटके"—

॥ तृतीयोऽङ्कः ॥

---

३२. प्रियदेवी तावतैव कृतज्ञा कृतानुज्ञा च भवति ।

— इति पञ्चमरहस्यव्याख्या —

इति श्री वेङ्कटरमणार्यविरचिते

जीवसञ्जीविनीनाटके

तृतीयाङ्कस्य स्वेनैवरचिता

"रसोल्लासिन्याख्या" व्याख्या समाप्ता ।

# ॥ चतुर्थोऽङ्कः ॥

— प्रथमदृश्यम् —

— तेजोवतीनगरम् —

(नेपथ्ये—)

**जीवासक्ता वरगुणयुता गर्भिणी वर्षभोगा-**
**द्भोगाऽऽसक्ता रसवति फले भोजने व्यञ्जनादौ ।**

— चतुर्थाङ्के-प्रथमदृश्यव्याख्या —

जीवेति—इयं सञ्जीविनी-श्वशुरगृहं प्रविष्टा वधूः जीवासक्ता-जीवदेवे परमप्रीतियुक्ता वरगुणयुता-सर्वश्लाघ्यगुणोपेता वर्षभोगात्-पत्या सह एक-हायनसम्भोगमात्रादेव गर्भिणी-गर्भं धृतवती। रसवति फले आम्रादिषु, भोजने मिष्टान्नसेवने, व्यञ्जनादौ, उपदंशलेह्यचोष्यादिषु - षड्रसोपेतशाकसूपादिषु च प्रथमं भोगासक्ता उपभोगरता तदनु प्रतिदिनं प्रत्यहं दोहदात् परिचित-पदार्थेषु वैरस्यं प्राप्य अपरिचितासाधारणपदार्थेषु अपेक्षावशात् कृशतनुरपि, तृतीय-चतुर्थमासयोः देहे कार्श्यं प्राप्तापि पञ्चममासादारभ्य क्रमेण पुष्टगर्भा-हितमितपक्वाहारसंवृद्धगर्भा बन्धुस्नेहादधिगतसुखा भाति - श्वश्रूश्वशुरयातृ-देवरात्तिकास्वस्रादिबन्धुभिः प्रीतिपुरस्सरमुपचरिता सुखभागिनी सती चका-स्तीत्यर्थः। अत्र रसविचारः-"जीवासक्ता" इत्यनेन संभोगशृङ्गार रसस्य स्थायि-भूतायःरतेः आलम्बनविभावः, "भोगासक्ता" इत्यनेन उद्दीपनविभावः, "रस-वतिफले व्यञ्जनादौ" इत्यनेन अनुभावाः, 'बन्धुस्नेहादधिगत सुखा' इत्य-नेन यथोचितव्यभिचरिभावाः सूच्यन्ते । तैः पुष्टस्थायिन्याः रतेः परिणाम-रूपः शृङ्गाररसः "वर्षभोगाद्गर्भिणी" इत्यनेन सुस्पष्टमभिव्यज्यते इति

काश्यं प्राप्ता प्रतिदिनमसौ दोहदात्पुष्टगर्भा
बन्धुस्नेहादधिगतसुखा भाति सञ्जीविनीयम् ॥१॥

(ततः प्रविशति प्रभावती - पूर्णगर्भा सञ्जीविनी - सखी लीलावती)

प्रभावती–१. (जनान्तिकम्) लीलावति ! धृतगर्भा खलु तव सखी । तस्याः कस्मिन् पदार्थे दोहदम् ?

लीलावती—२. देवि मत्सख्याः कश्चित्कालं प्रत्यहं श्वेत-मृत्तिकायामासीदादरः ।

प्रभावती—३. राजगृहेऽपि मृद्भक्षणम् ? मृष्टान्नेऽनादरः ।

---

सुधियो विभावयन्तु । अत्रैव विशेषविचारः-मातुराहाराद्गर्भपोषणं कथमित्यत्र भावप्रकाशे भावमिश्र एवमाह-"गर्भस्य नाभिनाड्या तु नाडी रसवहा (आहाररसवहा) स्त्रियाः । संलग्ना तेन गर्भस्य वृद्धिर्भवति नित्यशः । निश्वासोच्छ्वाससंक्षोभस्वप्नांशान् सोऽधिगच्छति । मातुर्निश्वासोच्छ्वाससंक्षोभस्वप्नसंभवात् । गर्भस्य नाभिमध्ये तु ज्योतिस्थानं ध्रुवं स्मृतम् । तथा धमति वातश्च देहस्तेनास्य वर्धते । उष्णेन सहितस्यापि दारयत्यस्य मारुतः । ऊर्ध्वं तिर्यगधस्ताच्च स्रोतांसि तु यथा तथा" । मन्दाक्रान्ता ॥१॥

१. धृतगर्भा-गर्भिणी । तल्लक्षणं (भावप्रकाशे)- "स्तनयोर्मुख-कार्श्यम्-रोमराज्युद्गम - अक्षिपक्ष्मसम्मीलनम् - पथ्यभोजनस्यापि छर्दनम्-गन्धोद्वेजनम्-प्रसेकः- सादः- इत्येतद्गर्भिण्या लिङ्गम् । दोहदापेक्षा-दोहम्-आकर्षं ददातीति दोहदः "इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी । गर्भबाधाभयात्तांस्तान् भिषगाहृत्य दापयेत् ।" इत्यायुर्वेदशासन-मनुसृत्य एव प्रश्नः कृतः राज्ञ्या ।

२. श्वेतमृत्तिकाभक्षणं गर्भिणीनां साधारणम् । तत्रस्थसुगन्ध एव भक्षणाकर्षं करोतीति भाव्यते ।

३. मृष्टान्नं परिहृत्य मृद्भक्षणेऽभिरुचिः कुत इति देव्याः शङ्का ।

लीलावती—४. देवि! श्वेतमृदि माधुर्यमस्ति।

प्रभावती—५. तदस्ति शर्करायां द्राक्षायां मधुनि च।

लीलावती—६. तत्र कृतकम्। तदितरदत्र। पश्य—

वृष्टिः पतिता भूमौ श्वेतायामादधाति माधुर्यम्।
स्त्रीणां गर्भवतीनामामोदो भवति सेवनेनास्याः ॥२॥

प्रभावती—७. किमस्ति वस्त्रभूषणापेक्षा अस्याः?

लीलावती—८. सा अत्रैवायाति। तामेव पृच्छतु भवती।

---

४. श्वेतमृत्तिकाया क्षारो नास्ति। अतो मधुरिमा।

५. शर्करादिपदार्थेष्वपि माधुर्यमस्ति। तत्कुतः तान्विहाय श्वेतमृत्तिकाभक्षणाशेति देव्या आक्षेपोक्तिः।

६. इक्षुरसविकारो हि शर्करा। द्राक्षा तुआमदशायां प्रायशोऽम्लप्रधाना शुष्कदशायां मधुना सिक्ता स्वादुर्भवति। पुष्परमः सर्वत्र स्वादुरेवेति वक्तुमशक्यम्। स एव मधुलिड्भिश्चोष्यमाणः रविकरसम्पर्कवशात् स्वादुत्वमाप्नोतीति कृतकम्। अत्र श्वेतमृत्तिकायां तु तदितरत्-कृतकादन्यत्। सहजमित्याकूतम्। तमर्थमेव पुरस्तात्साधयति पश्येत्यादिना वृष्टिरिति वृष्टिः-वर्षं श्वेतायां-भूमौ पतिता सती श्वेतमृत्स्नासंयोगेन तत्र माधुर्यमादधातिस्वादुत्वं जनयति। गर्भवतीनां स्त्रीणां-गर्भिणीनाम् अस्याः सेवनेन आमोदो भवति-श्वेतमृत्तिकाभक्षणेन हर्षो जायते। आमोदः सुगन्धः आममन्तान्मोदः-सन्तोष इति नानार्थः। पृथिवी गन्धवतीत्यादिना मृत्तिकायामामोदः समवायाद्वर्तते। तदाघ्राणनेन च कश्चिदनिर्वाच्यतोषो जायते। तल्लोभात्तद्भक्षणे दोहदेच्छा भवत्यन्तर्वत्नीनाम्-इति सूक्ष्मं तत्वम्। वृत्त गीतिः ॥२॥

७. कीदृशं वसन परिधेयम्? कीदृग्भूषणं सन्धार्यमिति तस्य आशा।

८. तदा तत्रागच्छन्तीं सञ्जीविनीं दृष्ट्वैव वदति सखी।

प्रभावती—९. वत्से सञ्जीविनि ! कुतस्ते भूषणत्यागः ? पीताम्बरेऽनादरः ?

सञ्जीविनी-अम्ब—

पीताम्बरवरमोदा भूषणहृदया मृदन्नसन्तुष्टा ।
पीताम्बरमपि भारो भूषणमपि मे न रोचते स्वान्ते ॥३॥

---

९. 'वत्से' इति प्रीत्यतिशयात्सम्बोधनम् । भूषणत्यागः-आभरणधारणे अनास्था । पीताम्बरे-अनादरः- पट्टवस्त्रादिधारणेऽनभिरुचिः ।

पीताम्बरेति—पीताम्बरात् वरः- अमूल्यवस्त्रादिभ्योऽपि श्रेष्ठः मोदः-तोषः यस्यास्सा-पीताम्बरधारणाद्यो मोदः जायेत-तस्मादप्यधिकमोदो भवति मे । यतः पीताम्बरः-विष्णुः- "पीताम्बरोऽच्युतश्शार्ङ्गी" इत्यमरः । तस्य । वरः-अनुग्रहः स एव मोदः यस्यास्सा । भगवत्प्रसादेन सन्तुष्टासीत्याकूतम् । अत एव अभूषणहृदया-भूषणे-आभरणादौ हृदयं मनः यस्यास्सा भूषणहृदया-स न भवतीत्यभूषणहृदया । अथवा-भूषणः-विष्णुः स एव हृदये यस्यास्सा भूषणहृदया परमात्मध्यानपरा । परमात्मध्यानं त्वस्याः नित्यं वा भवतु धृतगर्भस्सफलो भूत्वा विष्णुप्रसादेन मम पुमपत्यं जायतामिति काम्यं वा भवतु । मृदन्नसन्तुष्टा मृत्-मृत्तिकैव अन्नं-आहारः तेनैव सन्तुष्टाऽस्मि किं मृष्टान्नेन मे स्यात्-इत्यभिप्रायः । अथवा मृदेव भूमिरेव बीजे सहकारिकारण-वशात् अन्नत्वेन परिणमति खलु । तर्हि विकारभूतान्नात् अविकारिणी मृदेव त्मे आहाराय वरमिति वाऽर्थः । पीताम्बरमपि भारःगर्भिणीनां शरीरे कंचित्कालं कार्श्यं दृश्यते आहारादौ अनादरात् । तदा पट्टवस्त्रधारणं केवलं भारावहमिति ज्ञायते । तथा भूषणादि । अतस्तयोर्धारणं स्वान्ते-मनसि अद्य गीर्भणीदशायां-मे न रोचते मम नेष्टं भवति । एतत्स्वभावोक्त्या दर्शितम् । अत्र भगवद्भजनसन्तुष्टमानसानां मृष्टान्नभोजनपीताम्बरधारणकनकाभरण-धारणादौ प्रायशोऽनादर एवेति ध्वनिरपि व्यज्यते । वृत्तं गीतिः ॥३॥

प्रभावती— अयि—

मञ्जुलभाषिणि बाले त्वमञ्जसा भवसि नीतभारात्र ।
धाराभाराधारो भारस्ते गर्भगतकुमारस्स्यात् ॥४॥

सञ्जीविनी—१०. अम्ब ! तवाऽऽशीर्निजाशयं पुष्णातु ।

प्रभावती–वत्से

कान्त्या गौरी त्वमसि विमलाऽऽपन्नसत्वा शुभाङ्गी
भासा लक्ष्मीस्तनुगतरुचां भाग्यरूपा मनोज्ञा ।
वाचा वाणी मधुररसवत्प्रीतिदा ज्ञानदात्री
रम्या सौम्या रमणशरणा राजसे दौहृदेन ॥५॥

---

मञ्जुलेति-अयि मञ्जुलभाषिणि-मनोज्ञवचनशीले बाले-वधु सञ्जीविनि इति संबोधनेन प्रभावत्याः सञ्जीविनीवचनामृतपानेन अत्यन्तहर्षो जात इति ध्वनिः । अत्र-मम गृहे अञ्जसा-शीघ्रेण त्वं नीतभारा भवसि सुखप्रसववशात्तव गर्भधारणभारः निवर्तितो भवतीत्यर्थः ; गर्भधारणभारस्त्वद्य ते असह इति जानामि यतः- ते भारः-अद्य भारभूत गर्भगतकुमारः-गर्भस्थशिशुः- (पुमपत्यमेव भवतीति मातिशयश्रद्धया कुमार इत्युक्तम्) । धाराभाराधारस्स्यात्-धरायाः भारः धराभारः-भूभार इति यावत् । धराभार एव धाराभारः तस्य आधारः- आश्रयः स्यात्-भवेत्-भूभारवहनक्षमः राज्यधुरन्धर भवेदित्याकांक्षा । गुरुजनानामाशीरेवविधैव । तथाह महाकविः कालिदास.- शाकुन्तले—"पुत्रमेवंगुणोपेत चक्रवर्तिनमाप्नुहि" इति । वृत्तं-गीतिः ॥४॥

१०. तव वचनं सफलं भवतु इति सञ्जीविनीवचनेन तस्या अपि पुमत्यापेक्षा क्षिप्रप्रसवश्च अभिप्रेतं इति व्यज्यते ।

**(ततः प्रविशति राजा प्रद्योतः-तं दृष्ट्वा सख्या सह सञ्जीविनी प्रासादान्तर्गता)**

कान्त्येति—आपन्नसत्वा त्वं गर्भवतीति यावत्। शुभानि अङ्गानि यस्यास्सा-अङ्गेषु जातसौन्दर्या अत एव कान्त्या गौरीव विमला भवसि-पार्वतीव सुन्दराङ्गी निर्मलाङ्गी च भवसीति तात्पर्यम्। गौरी प्रकृत्या सुन्दरी खलु-अतोऽस्याः सुन्दरी - त्रिपुरसुन्दरीत्यादिपर्यायनामानि। तनुगतरुचां शरीररोचिषां भासा-दीप्त्या त्वं लक्ष्मी.-श्रीरिव भाससे। अत्र रुचां भासा इति आम्रेडितं श्रूयते। रुक् शब्दस्य अर्थसंकोचो वा 'भा' शब्दस्य अर्थविशेषो वा कार्यः रुचामिति बहुवचनेन मुखे प्रभा एका, बाह्वो.-शोभा अन्या, पादयोर्द्युतिरपरा, इति समाधानेन तासां भा·-प्रकाश इत्यर्थानु-सन्धानेन सर्वं समञ्जसं भवति। सैव लक्ष्मीरिव भाग्यरूपा-भाग्यशालिनी-मनोज्ञा-मनोहरा। लक्ष्मीः रमा, त्व रामा उभयत्र शक्यार्थः एक एवेति कृत्वा मनोज्ञेत्युक्तम्। वाचा-वाक्पाटवेन त्वं वाणीव-शारदेव प्रतिभासि। यत.- सा मधुररसवत्प्रीतिदा-मधुररसः- अमृत तद्वत्प्रियकरी। अमृत हि पानमात्रेण सन्तृप्तिं जनयति। वचनामृतमपि श्रवणमात्रेण सन्तुष्टिं करोति। त्वमपि तथा-सुवचनशीलेति यावत्। ज्ञानदात्री-यथा वाग्देवी ज्ञानप्रदा त्वमपि सकाले पत्युरपि कृत्याकृत्यविषये सुखबोधक्षमेति तात्पर्यम्। एतत्पञ्चमाङ्के स्पष्टं भवति। त्व गौरीलक्ष्मीभारतीरूपा गुणशालित्वाद्रम्या द्रष्टुं श्रोतुं कीर्तयितुं च आकर्षणदा। तथैव सौम्या-सोमवदाह्लादकरी। रमणशरणा-रमणस्य-पत्युः जीवदेवस्य शरणा-आश्रयीभूता-इदं चतुर्थाङ्ककथया विदितं भवति शरणमस्या अस्तीति-शरणा अर्श आदित्वात् अचि टाप्। अथवा-रमण एव पतिरेव-शरणं रक्षकः यस्यास्सा इति पतिव्रता पतिप्रियेत्यर्थो लभ्यते। दौहृदेन राजसे-गर्भिणी सती प्रकाशसे। द्वे हृदी यस्मिन् तत् दौहृदं-गर्भधा-रणम्। मातृहृदयेन साकं शिशोर्हृदयं जरायुणा बध्यत इति गर्भिण्याः द्विहृदया इति व्यवहारः। मन्दाक्रान्तावृत्तम् ॥९॥

प्रद्योतः—११. अयि प्रिये! प्रियंवदेव किमपि प्रियं वदसि, किं तत्?

प्रभावती—१२. नाथ! तव वधूः पूर्णगर्भा। तदचिराद्वैद्य-विदुषी सूतिकालयमलङ्करोतु। प्रथमगर्भः खलु वधूनां प्रसवकाले मनोव्याकुलतां जनयति।

प्रद्योतः—१३ सर्वं सज्जीभवति। अलमतिचिन्तया। सर्वं शुभं भवति।

सेविका—१४. (प्रविश्य) जयतु देवः- जयतु देवी। इदानी-मेव सञ्जीविन्याः प्रसवः सञ्जातः। प्रसूतः पुंशिशुः।

---

एतद्दृश्यस्य आरम्भात् एतावत्पर्यन्तकथासंन्दर्भेण शान्तिरसोदयस्य स्थायीभावो ध्वन्यते।

११. 'प्रियंवदे'ति शकुन्तलायाः काचित्सखी। सा सर्वदा स्वसख्या मानसोल्लासकराणि प्रियवचनान्येव भाषमाणाऽवर्ततेति शाकुन्तलनाटकाव-लोकनप्रणयिनां विदितं भवति। प्रियंवदेव स्वप्रियापि प्रियं वदतीति परिहास-वचनम्।

१२ वधूः-सञ्जीविनी। तस्याः गर्भधारणादिदानीं दशमो मासः प्रचलतीति तात्पर्यम्। तदित्यनेन अद्य वा श्वो वा प्रसवो भवतीत्याकूतमेव कारण व्यज्यते। स्त्रीणां प्रसववेदना सुदुस्सहा खलु। तत्सुलभप्रसवोपाय एव वेदनाशमनक्षमः। तदर्थं वैद्यानामानयनम्।

१३. सन्निहिता एव वैद्या इति राज्ञि राज्ञ्याः मनोव्याकुलतां जिहीर्षति सति-

१४. सूतिकागृहात्काचित्सेविका प्राप्ता सती पुंशिशुप्रसवं निवेदयति।

प्रभावती—१५. अहह! किं पुंशिशुः प्रसूतः। इदमस-द्भागधेयम्। गृहाणेदमाभरणम्। (इति तस्यै स्वकण्ठस्थं सुवर्णहारं प्रयच्छति)

प्रद्योतः–१६. बहु प्रमोदामहे। कस्कोऽत्र भोः!

सेवकः–१७. किमाज्ञापयति देवः।

प्रद्योतः–१८. क्षिप्रं कुमारमानयाऽत्र। (सेवकस्तथा करोति)

प्रद्योतः—१९. (आगतं प्रणमन्तं कुमारं दृष्ट्वा) कुमार! पुत्रसम्पन्नोऽसि। अचिरात्सरस्यवगाहनं कृत्वा सूतिकागृहे जातकर्म निर्वर्तय।

जीवदेवः–२०. यथाज्ञापयति पितृपादः (तथैवाचरति)।

---

१५. पुमपत्यजननवार्ताश्रवणेन प्रहर्षिता प्रभावती वार्ताहारिण्यै कार्तस्वरमालां पारितोषिकं ददाति।

१६. अत्र बहुवचनप्रयोगः सर्वेषां सञ्जातस्य प्रमोदस्य सूचकः अथवा राजभिस्सर्वदा बहुवचनेनैव स्वाभिप्रायप्रकटनं राजत्वद्योतकम्।

१७. सेवकाः स्वस्वामिनं 'देव' शब्देनैव व्याहरन्तीति सम्प्रदायः।

१८. जीवदेवस्यानयन वक्ष्यमाण 'जातकर्म' निर्वर्तनोपदेशार्थम्।

१९. आगतं प्रणमन्तं कुमारमित्यादिना सेवकेन कुमारस्तत्रानीतः, स पितरमभिवन्दितवान्-त दृष्ट्वा राजा एवं वदतीत्यर्थो लभ्यते। अवगाहनं स्नानम्। जातकर्म सूतिकागृह एव निर्वर्तितव्यमिति सम्प्रदायविदो वदन्ति कारणं तु सद्योजातशिशोः बहिरानयनं शीतवातातपनिमित्तरुगापादक-मिति।

२०. पितृपाद इति तीर्थपाद देवपाद इतिवत् गौरवार्थसूचकं श्रद्धा-भक्तिद्योतकं च।

प्रद्योतः—२१. अयि प्रिये! एकादशे दिने शिशोर्नामकरण-महोत्सवः महता विजृम्भणेन आचरितव्यः । तदर्थं व्यवसिता भवामः । (इति उभौ प्रासादान्तः प्रविशतः)

जनाः—२२. किमिदं राजधान्यां सर्वत्र शर्कराखण्डभार-भूषिताः शकटाश्चरन्ति ।

ब्राह्मणाः-२३. जीवदेवस्य पुत्रजननात् सर्वे सुखिनो भवन्ति।

राजन्याः—२४ क्षत्रियवंशोऽद्य पावितो भवति ।

वैश्याः-२५. अस्मदार्जितधनविनियोगस्य सदवकाशो जातः।

इतरे–२६. वयमिदानीं राज्ञः पौत्रजननवार्तया हर्षोत्कर्ष-मानसा भवामः । यद्यदाज्ञाप्यते तत्सर्वमविलम्बं निर्वर्त्यते ।

(प्रधानमन्त्री त्रिभावसुः प्रासादमुपयाति । सेवकः कश्चित्तस्या-गमनं राज्ञे निवेदयति । मन्त्री राजाज्ञया राजसभां प्रविशति)

---

२१. व्यवसिता भवामः- तदपेक्षितकार्यकलापसाधने व्यापृता भवामः ।

२२. अपत्ये-विशेषेण पुमपत्ये जाते बन्धुमित्रादिभ्यः शर्करा-समर्पणमानन्दसूचकम् ।

२३. "सर्वे जनास्सुखिनो भवन्त्वि" त्याशीर्वादः ब्राह्मणैः प्रायशः सर्वत्र सर्वदा क्रियते । विशेषतो राजपुत्रजननादिहर्षोत्कर्षापादकसमयेषु ।

२४ क्षत्रियाणा राजकुलपवित्रता समादरणीयैव ।

२५. स्वभावतो वणिजः दानधर्मपरायणाः राजपुत्रजन्मोत्सवादि-काले तैः विशेषतो धर्मार्थं धनविनियोगः सर्वत्र दृष्टचर. ।

२६. शूद्रादीनां सेवकजनानां च एतादृशमङ्गलमहोत्सवकालेषु सर्वप्रकारेण सेवाप्रदर्शनं स्वाभाविकराजभक्तिप्रदर्शनसूचकम् ।

विभावसुः–२७. प्रभो! भवदाज्ञया नामकरणमहोत्सवाय-सर्वं सन्नद्धम्। प्रजास्सर्वे सभाङ्गणमलङ्कुर्वन्ति। पुरोहिताः पुण्याहं वाचयन्ति। सर्वे भवदागमनं निरीक्षन्ते।

प्रद्योतः–२८. अयमहमागतोऽस्मि। (सभां प्रविश्य सिंहासने उपविश्य) भोः पुरोहिताः! शिशोः "ज्ञानसूर्य" इति नाम विधीयताम्।

यतः—

सूर्यो जातोऽत्रान्धकारश्च नष्टो ज्ञानस्फूर्तिः प्राणिनां कर्मनिष्ठा।
जीवामोदो जातहर्षा सवित्री किं वाऽपेक्ष्यं ज्ञानसूर्ये प्रदीप्ते ॥६॥

---

२७. मन्त्रिमुख्यो विभावसुः नामकरणमहोत्सवाय सज्जीकृतव्यापारान् राज्ञे निवेद्य महासभाप्रवेशाय तं प्रार्थयते।

२८. शिशोः ज्ञानसूर्य इति व्यवहारनाम भवत्विति राजा पुरोहितेभ्य. सूचयित्वा तस्य कारणमेव निर्दिशति।

सूर्य इति–पुत्रे जाते सर्वत्र हर्षप्रकाश' जात इति सूर्यो जात इत्युक्तम्। सूर्यप्रभया यथा अन्धकारो नष्टो भवति तथा राजपुत्रजननात् न केवलं राजवर्गस्य अपि तु सर्वप्रजावर्गस्य च विविधव्यसनानि निरस्तानीति तात्पर्यम्। तथा प्राणिनां ज्ञानस्फूर्ति' सूर्योदये सति समस्तजन्तूनां बुद्धिवैशद्य कार्यव्यापृतत्व यथा भवति तथैव जनाना "इतः परमेव भवति, वय सुखिनो भवामः, अस्माभिरेतादृशकार्याणि देशाभ्युदयाय कर्तव्यानि, यज्ञयागादिकर्माण्येव निर्वर्तितव्यानी"त्यादिज्ञानप्रबोधो जातः। तथैव कर्मनिष्ठा-तत्तद्व्यापारसाधनेच्छा च जातेत्यभिप्रायः। जीवानां प्राणिनाम्, आमोदः-हर्षः जातः कारागृहे बन्धनस्थाः विसृष्टाः। पश्वादीनां बालतृणाद्यदनेन सन्तुष्टिर्जातः। एवमादिजीवामोद अभ्यूहनीयः। सवित्री-माता जातहर्षा-हर्षनिर्भरा अभूत्। प्रथममेव पुमपत्ये जाते कस्याः प्रसवित्र्याः एवं सन्तोषः न जायेत? सूर्यसंबन्धिसंज्ञाख्यबुद्धिप्रचोदनशक्तिरत्र सवित्रीशब्देनोक्त-

पुरोहिताः—२९. (जीवदेवमुद्दिश्य) उच्यताम्-"एवं गुण-विशिष्टायां शुभतिथौ मम कुमारस्य नामकरणाख्यं कर्म करिष्ये" इति ।

जीवदेवः—३०. (तथा सङ्कल्प्य) अस्य शिशोः व्यवहार-नाम 'ज्ञानसूर्यः' ।

पुरोहिताः—३१. नामकरणमुहूर्तश्शुभमुहूर्तोऽस्तु ।

सर्वे—३२. शुभमुहूर्तोस्तु । (इत्यनुवदन्तो मन्त्राक्षतान् शिशोस्तन्मातापित्रोश्च मस्तकेषु प्रक्षिपन्ति । मङ्गलवाद्यानि प्रचलन्ति । वनिताः गीतानि गायन्ति । ब्राह्मणाः आशीर्मन्त्रानुद्घोषयन्ति । अधिकारिणः सभासदस्सर्वान् गन्धपुष्पताम्बूलादिभिः सम्भावयन्ति । सर्वे हृष्यन्ति । समस्तमङ्गलानि भवन्ति)

॥ सर्वे निष्क्रान्ताः ॥

---

मित्यत्र धियो यो नः प्रचोदयादिति श्रुतिरेव प्रमाणम् । ज्ञानसूर्ये प्रदीप्ते ज्ञानरूपसूर्याविर्भावे किं वाऽपेक्ष्य भवेत्-सर्वं सुसम्पन्नं भवतीति विचारेण अस्य शिशोः ज्ञानसूर्याभिधानविधानाय राज्ञो मतिः प्रसृतेति भावः ते शालिनीवृत्तम् । तल्लक्षणम्-"शालिन्युक्ता म्तौ तगौ गोब्धिलोकैः" इति ॥६

२९. पुरोहिताः नामकरणसंस्कारावसरे जीवदेवमुखेन सङ्कल्पं कारयन्ति ।

३०. जीवदेवः ज्ञानसूर्य इति तस्य शिशोः नाम प्रकाशयति ।

३१. पुरोहिताः नामकरणमहोत्सवनिर्वर्तनमुद्घोषयन्ति ।

३२. तदेव सभासदस्सर्वे अङ्गीकुर्वन्ति ।

॥ इति प्रथमदृश्यव्याख्या ॥

## ॥ चतुर्थाङ्के ॥

# ॥ द्वितीयदृश्यम् ॥

— प्रासादस्थानम् —

(ततः प्रविशति चेट्या सह प्रभावती)

प्रभावती—१. हञ्जे ! अपि कुशलं तव स्वामिन्यास्सञ्जीविन्याः शिशोश्च ?

चेटी—२. कुशलं शिशोः–मातुर्विषादः ।

प्रभावती—३. किं निमित्तम् ?

चेटी-४. न ज्ञायते । तस्यै अन्नपाने न रोचेते-सखीसंलॉपोऽप्युद्वेजनकरः दीर्घं दीर्घं निश्वसिति । मुहुर्मुहुर्बाष्पं विमुञ्चति ।

प्रभावती—किं तथ्यं वदसि ?

---

॥ द्वितीयदृश्यव्याख्या ॥

१. अवरोधस्त्रिय अन्त.पुरे पृथगगारेषु निवसन्ति खलु । अतः राज्ञ्याः प्रभावत्यास्स्ववध्वास्संञ्जीविन्या विषये चेटीं प्रति कुशलप्रश्नः ।

२. 'कुशलं शिशोः' इत्यनेनैव मातुस्तु न तथेत्यवगम्यते । तथापि मातुः शरीरनिमित्तकं व्यसनं न भवति-किन्तु मानसिकं भवतीति प्रकटनार्थं मातुर्विषादः इत्युक्तम् ।

३. विषादकारणावगमाय प्रश्नः ।

४. चेट्या तत्कारणं कथं वा ज्ञायेत । अतः न ज्ञायते इत्युक्तम् । किन्तु चेटी सञ्जीविन्याः अन्तर्विषादजनितबाह्यव्यापारानेव कथयति ।

५. इदं परिहासवचो वा तथ्यवचनं वेति देव्यास्संशयः ।

चेटी—६. न कथञ्चिदुच्यते सेवकजनैरतथ्यम्।

प्रभावती—७. तर्हि स्वयमेव तदन्तःपुरं गत्वा जानामि तस्याः विषादहेतुम्।

(सञ्जीविनीसमीपमासाद्य) वत्से सञ्जीविनि कथं व्याकुल-चित्ता त्वम्?

सञ्जीविनी—८. अम्ब चिन्तया।

प्रभावती—९. का चिन्ता?

सञ्जीविनी—१०. क्षेमचिन्ता।

प्रभावती—११. क्षेमस्य कस्य?

सञ्जीविनी—१२. (मौनेन तिष्ठति)

प्रभावती—१३. किं स्वक्षेमस्य?

---

६. चेटीजनाः परिहासाय न प्रगल्भन्ते इत्याकूतम्।

७. त्वं व्याकुलचित्तेति त्वच्चेटीमुखाद्विदितम्। किं तत्तथ्यम्। तथा चेत् कारणं किम् इत्यभिप्रायं सूचयत्यत्र कथंशब्दः।

८. चिन्तया व्याकुलचित्तासीत्यभिप्रायः।

९. "कीदृशी सा चिन्ते"ति चिन्ताहेत्ववगमाय पुनः प्रश्नः।

१०. "कुशलविषये" इत्युत्तरम्।

११. कस्य कुशलविषये तव चिन्तेति प्रश्नान्तरम्।

१२. स्वस्याः पत्युरिति वक्तुं लज्जया तूष्णींभावस्थितिः।

१३. अनिर्धारितोत्तरया राज्ञ्या तव क्षेमविषये किं चिन्ता भवतीति प्रश्नः कृतः।

सञ्जीविनी—१४. न। अहं तव हस्तपालिता सुक्षेमा।

प्रभावती—१५. किं शिशोः?

सञ्जीविनी—१६. न। स मम हस्तपालितस्सक्षेमः।

प्रभावती—१७. किं तव भर्तुः?

सञ्जीविनी-१८. आम्। तस्यैव महात्मनः ग्रहचारवशगस्य।

प्रभावती—१९. कोऽयं ग्रहचारः?

सञ्जीविनी-२०. लग्नराशौ रविकुजयोगः। अष्टमे शनिः। द्वादशे गुरुः।

प्रभावती—२१. एवं सति किं भवति?

---

१४. नेति निषेधं सूचयित्वा स्वस्याः श्वश्रूहस्तपालनेन श्वशुरगृहे स्वक्षेमाय न कापि चिन्तेति तस्य निषेधस्य हेतुं दर्शयति।

१५. तर्हि शिशोः क्षेमविषये किं चिन्तेति प्रश्नः।

१६. नेति निषेधमुखात् शिशुरक्षणविषये स्वयमतिजागरूकेति कथयति।

१७. "किं तव भर्तुः" इत्ययं प्रश्नः प्रकरणोचितः।

१८. आमित्यङ्गीकार एव समुचितमुत्तरम्। "तस्यैवे"त्यवधारणं "महात्मन" इति पत्युः शुद्धशीलत्वं"ग्रहचारवशगस्ये"ति तस्य संभविष्यन्महापत्सूचन च कृतम्।

१९. ग्रहचारविचारावगमे समुत्सुकतया पुनः प्रश्नः।

२०. कुजस्य रवेश्च जन्मराशौ शनेरष्टमे गुरोश्च द्वादशे स्थितिः सर्वापत्करेति सूचयति सञ्जीविनी।

२१. तत्प्रकारावगमे कुतूहलं प्रदर्शयति राज्ञी।

सञ्जीविनी—२२. किं भवेच्छृणु–

"द्वादशाष्टमजन्मस्थाश्शन्यर्काङ्गारका गुरुः ।
कुर्वन्ति प्राणसन्देहं स्थानभ्रंशं धनक्षयम्"॥

प्रभावती–२३. धनक्षयान्न भीः । स्थानभ्रंशाद्रक्षणं सुकरम् । प्राणसन्देह इति केवलं मम प्राणान् दुनोति । भवतु मम प्राणप्रियाय इदं निवेदयामि स कलयतु कालोचितं रक्षणकार्यं मम पुत्रस्य । (इति गत्वा प्रद्योताय सर्वं निवेद्य तेन सह वधूनिवेशं गच्छति)

प्रद्योतः—२४. जाते! तव विषादस्य कारणं विदितं मया। मा विषीद । क्षिप्रमप्रतिहतरक्षणोपायं कल्पयामि मम कुमारस्य ग्रहगतिफलपरिहाराय । कस्कोऽत्र भोः ।

सेवकः–२५ आज्ञापयतु देवः ।

प्रद्योतः—२६. पुरोहितान्-मन्त्रिसचिवान् - कार्तान्तिकान्-कालज्ञांश्च क्षिप्रमत्र प्रापय ।

---

२२ अयं जीवति वा न वेति संशयः-स्थानभ्रंशः-धननाशः-इत्यादय एव तत्फलानीति दर्शितम् ।

२३ प्राणसन्देह इति वाक्येन वज्रपातेनेव विभिन्नहृदया राज्ञी सर्वमिदं राज्ञे निवेदयति । अत्र करुणरसस्य बीजमुपन्यस्तम् ।

२४ इद वाक्यजातं खिन्नहृदयायास्संञ्जीविन्यास्समाधानार्थम् । अत्र 'जाते' इति स्नुषायाः सम्बोधनं राज्ञः तस्यां पुत्रीवात्सल्यं सूचयति ।

२५. सेवकः आज्ञाकरणाय सन्निहितः ।

२६. पुरोहिताः- पुरः- प्रत्यक्षं हिताः- इष्टप्राप्त्यनिष्टपरिहाराय अपेक्षितानि कर्माणि कृत्वा आलोचनान्युपदिश्य वा हितं कुर्वन्ति ।

सेवकः—२७. (गत्वा तैस्सहाऽऽगच्छति)

प्रद्योतः-२८. भोः पुरोहिताः मन्त्रिसचिवाः कार्तान्तिकाः-कालज्ञाः-शृणुत—

जीवो मे जीव एव प्रियहृदयसती साऽस्य सञ्जीविनीष्टा
भाग्यान्मे ज्ञानसूर्यो द्युमणिकुलमणिश्शैशवं प्राप्य भाति।
दौर्भाग्याज्जीवधार्यं ग्रहगतिवशतस्सम्भवेत्किं भविष्यं
ज्योतिष्यान्निश्चितार्थान् वयमिति विदिताश्शान्तिकर्माचराम॥७॥

---

मन्त्रिणः- तत्तत्कालोचितराजनीतिपुरस्कृतव्यापारान्बोधयन्ति। सचिवाः-तत्तद्व्यापारसाधने सहायका भवन्ति। कार्तान्तिकाः- कृतान्तं विदन्ति। ग्रहादिकृतानि निमित्तानि फलानि च जानन्ति। कालज्ञाः-कालं भूतभवद्भविष्यद्रूपं जानन्ति, यद्यत्कर्तव्यं तत्सूचयन्ति। अतस्ते कालवेत्तारः। तानाह्वाययतीत्यर्थः।

२७. ते सन्निहिता भवन्ति।

२८. स्वपुत्रस्य ग्रहगतिविषयं तेभ्यो निवेदयति यथा—

जीव इति—जीवः-जीवदेवः मे जीव एव-मम प्राणा एव अनेन तस्य यदापतति तत्स्वस्यैवाऽऽपततीति वचनेन पुत्रे परमप्रीतिर्दर्शिता। अस्य जीवदेवस्य प्रियहृदयसती - प्रियं हृदये यस्यास्सा-अथवा प्रिय एव हृदये यस्यास्सा अत एव सती-पतिव्रता सा सञ्जीविनी इष्टा-मम प्रीतिपात्रभूता मे भाग्यात्-असद्भागधेयेन द्युमणिकुलमणिः-सूर्यवंशप्रदीपः ज्ञानसूर्यः-सञ्जीविनी-जीवदेवयो पुत्र मम पौत्रः शैशवं प्राप्य भाति-शिशुदशायां वर्तते। दौर्भाग्यात्-अस्मद्दुर्दैवात् ग्रहगतिवशतः- ग्रहचारवशात् जीवधार्यं जीवेन अनुभूयमानं किं भविष्यम्-इतः परं प्राप्स्यमानं किमनिष्टं सम्भवेत्। इति ज्योतिष्यात्-जातकावलोकनात् निश्चितार्थान्-विदितांशान् वयं विदिताः-

त्रिकालज्ञः—२९. दीयतामस्य जातकम् । ग्रहचारं विज्ञाय फलं निश्चीयते ।

प्रद्योतः–३०. इदमिदं जातकम् ।

| | | | |
|---|---|---|---|
| लग्न र कु शु | बु | | |
| गुरु केतु | राशिकुण्डली | | चं |
| | | | रा |
| | | श | |

त्रिकालज्ञः-३१. (सम्यक्परिशील्य) सूर्याङ्गारकयोः जन्मराशिस्थितिः-सूर्यजस्याष्टमस्थाने-जीवस्य द्वादशे । ज्ञातम् वर्षत्रय जीवदेवस्य ग्रहगतिः प्रतिकूला । जन्मकाले शनिदशायां गतवर्षाणि एकादश एष्याणि अष्टौ । इदानीं केतुदशा प्रचलति । तत्र त्रीणि वर्षाण्यवशिष्टानि । अयमेकोनत्रिंशद्वर्षीयः । द्वात्रिंशवर्षे शुक्रदशा प्रारभते । तदनन्तरं यावद्विंशतिवर्षं तस्य महोदयकालः । यतः- शुक्रः लग्ने प्रथमकेन्द्रे वर्तते । मीनः अस्य उच्चराशिः। अयं शुभग्रहः। शुभफलमेवातनोति । बुधः लग्नस्य सुयोगकारकः । स शत्रुक्षेत्रस्थितोऽपि धनस्थानस्थित्या उच्चस्थानस्थशनिना दृष्टत्वाच्च अनुकूलो भवति । चन्द्रोऽपि पञ्चमत्रिकोणे स्वक्षेत्रे भवति । अनेन मातुः सौख्यम् । किं बहुना बुधशुक्रचन्द्रग्रहाः अनुकूलाः । रविगुरुशनिकुजाः प्रतिकूलाः । तस्मादौषधोपचारेण नवग्रहशान्त्या-देवब्राह्मणपूजया च सर्वं शुभं भवति ।

---

एवं भवतीति निश्चित्य शान्तिकर्म - तत्परिहारोचितकार्याणि आचराम-करवाम । स्रग्धरावृत्तम्—करुणरसस्य आलंबनविभावोऽत्र सूचितः ।

२९. त्रिकालज्ञः ग्रहगतिपरिशीलनाय जातकमपेक्षते ।

३०. तत्तदानीमेव प्रत्यर्पितम् ।

३१. जातकं परिशील्य सञ्जीविन्या यथोक्तं तथैव कथयति । राशिकुण्डलस्थग्रहाणा बलाबलानि विदित्वा तद्दशाफलानि मूलोक्तप्रकारेण ब्रवीति । "पूर्वजन्मकृतं पापं व्याधिरूपेण पीडयेत् । तच्छान्तिरौषधैर्दा-

विभावसुः—३२. बहवस्सन्ति किल भिषङ्मणयोऽस्मिन् नगरे। ते धन्वन्तरिसदृशा इति सर्वे वदन्ति। तेषां हस्ताऽऽयत्ता भवति जीवदेवस्य शुभप्राप्तिः। कुतोऽत्र चिन्ता? ईश्वरानुग्रहेण जीवदेवस्य क्षेमं भवतीति मे प्रतिभाति।

त्रिकालज्ञः—३३. यथेप्सितं वदन्तु भवन्तः। जीवदेवः महाव्याधिग्रस्तो भवति तत्परिहारः सञ्जीविनीकरस्पर्शादेव भवति। व्याधिग्रस्तस्य भर्तुस्सविधे तया न स्थतव्यम्। स युवा साऽपि युवती। महाननर्थो भवेत्। चिन्त्यतां सुष्ठु चिन्त्यताम्।

प्रभावती—३४. अयि सञ्जीविनि कस्तेऽभिप्रायः?

---

नैर्जपहोमसुरार्चनै." इति शास्त्रमनुसृत्य तच्छान्तिकर्माणि च सम्यङ् निर्दिशति।

३२. न केवलं प्रासादे राजवैद्याः। अस्यां राजधान्यामपि अनेके वैद्यविशारदास्सन्ति। तेभ्यस्सकाशादधिगतचिकित्सः जीवदेवः भगवत्कृपया अचिरात् स्वस्थो भवतीति मन्त्री समादधाति।

३३. वदन्तु नाम यथेष्टं "नहि वाचां दरिद्रता"- महाव्याधयः पुनः जीवदेवं पीडयन्त्येव। तेषां निग्रहः- चिकित्सा, पण्डितप्रकाण्डेन न केनापि वैद्येन साध्यः। स च सञ्जीविनीकर्तव्यो भवति। परन्तु सा युवती। व्याधिग्रस्तस्य तस्य यूनस्समीपे वस्तु नार्हतीति त्रिकालज्ञस्याभिप्रायः। अत्र सूचितस्य महानर्थस्य हेतुः यूनोः सन्निधानम्। तच्च स्वस्थयोर्विषये शुभप्रदमेव। व्याधिग्रस्तयोर्विषये-व्याधिग्रस्तेन सह-स्वस्थायास्संयोगविषये-रोगिण्या सह नीरोगसम्बन्धविषये वा महानर्थपदं स्यात्। तच्च मा भूदित्याकूतेन चिन्त्यतां चिन्त्यतामिति द्विरुक्तिः तयोरयोगाय कर्तव्यानुसन्धानं क्रियतामित्यवधारणार्थिका भवति।

३४. अस्मिन् दुरूहव्यापारे श्वश्रूः बध्वाः अभिप्रायं पृच्छति।

सञ्जीविनी—३५. गुरुजनाः यथाऽऽज्ञापयन्ति ।

प्रभावती-३६. तर्हि इयं जनकस्य गृहे वसतु कञ्चित्कालम् ।

प्रद्योतः—३७. तत्कुमारोऽत्रैव अस्मन्निकटे वर्तेत ?

प्रभावती—३८. सप्तमवयस्को बालः मातृवियोगं कथं सहते ?

प्रद्योतः-३९. तर्हि सोऽपि तया सह वसतु ज्योत्स्नानगर्याम् । अस्ति खलु तत्र तस्य विद्याभ्यासाय विशेषसौकर्यम् ।

सर्वे—४०. अनुमोदामहे ।

त्रिकालज्ञः-४१. सत्येवं, जीवे रोगग्रस्ते सञ्जीविनीकरस्पर्शावकाशः कथम् ?

---

३५. अहं गुरुजनमतानुवर्तिनी । अतः "भवत्यै यथा रोचते तथानुवर्ते" इति सविनयं समुचितमुत्तरं दत्त्वा अभिहितम् ।

३६. जीवस्य यावद्ग्रहगतिपरिहारः तावत्तस्याः स्वजनकगृहे वासमनुमन्यते राज्ञी ।

३७. तावत्पर्यन्तं तत्सुतस्य वासः कुत्रानुमन्यते इति राजा साक्षेपं पृच्छति ।

३८. मात्रा सहैवेति राज्ञ्या अभिप्रायः ।

३९. तमेवानुमोदते राजा । "अस्ति खलु तत्र विद्याभ्यासाय विशेषसौकर्यम्" इत्यनेन ज्योत्स्नानगरादपि तेजोवतीनगरे साधारणविद्याभ्यासाय प्रौढविद्याभ्यासाय च परिकराः अधिका भवन्तीति द्योत्यते ।

४०. सर्वे तदेवानुमोदन्ते ।

४१. जीवदेवेन प्राप्तेषु व्याधिषु सञ्जीविन्या हस्तचिकित्सावकाशः कथं कल्प्यते इति तर्कयति त्रिकालज्ञः ।

सर्वे—४२. एतदपि विशेषतश्चिन्तनीयम् ।

प्रभावती—४३. किं कुर्मः ?

सञ्जीविनी-४४. अम्ब ! चिन्तां मा कुरु। यदृच्छागमनाय देववरोऽस्ति मे । यदा मम भर्ता रोगग्रस्तो वैद्यशिरोमणिभिश्चिकित्सितोऽपि दुःखितो भवति तदाऽयं मां स्मरतु । तदनुपदमेवाऽहमत्र सन्निधाय आत्मकर्तव्यव्यापारेण कृतकृत्या भवामि ।

सर्वे—४५. महान् प्रमोदः । तथैव क्रियताम् ।

प्रद्योतः-४६. प्रिये प्रभावति, प्रस्थापय प्रियवधूं सकुमाराम् ।

प्रभावती-४७. साऽस्मत्पुत्रस्य जीवदेवस्य अनुज्ञां सम्पादयतु ।

सञ्जीविनी-४८. तथा । (इति प्रियसमीपमासाद्य सर्वं वृत्तांतमस्मै आवेद्य प्रियस्य हस्ततलं स्वनेत्राभ्यां संस्पृश्य प्रणयपूर्वकं प्रणम्य-तदनुज्ञां लब्ध्वा पुनरागत्य जननीगृहाय प्रयाणं कर्तुं समुत्सुका भूत्वा इयमहं सर्वेभ्यः प्रणाममाचरामि ।

---

४२. अय महान् विचारः विमर्शार्हं इति जना अभिप्रयन्ति ।

४३. अत्र न कोऽप्युपायं जानातीति श्वश्रूश्चिन्तयति ।

४४. यदृच्छागमनाय स्वस्मै दत्तं देववरं निवेदयति सञ्जीविनी । युक्तकाले पत्या मम स्मरणादेव अहमत्रागत्य चिकित्सां कृत्वा तद्रोगान् परिहरामीति प्रतिजानीते च ।

४५. तच्छ्रवणेन सर्वे सन्तुष्यन्ति ।

४६. राजा वधूप्रस्थानसन्धानाय राज्ञी प्रेरयति ।

४७. सा भर्तुराज्ञां प्राप्नोत्वित्यादिशति ।

४८. स्वनेत्राभ्यां प्रियस्य करतलस्पर्शः अनुरागातिशयं सत्कुलप्रसूतायाः गम्भीरवृत्तं च प्रकटयति ।

सर्वे—४९. कल्याणं भूयात् ।

प्रभावती—५०. मम पुत्रहिताय अचिरादायाहि गच्छ ! मङ्गलमस्तु ।

प्रद्योतः—५१. अयि वधु ज्ञानसूर्यस्य विद्याभ्यासे त्वं परमादरा भवेः । गच्छ सुखिनी भव । (सञ्जीविनी सर्वैरनुज्ञाता कुमारेण सखीभिश्चानुगता सेनया रक्षिता रथाधिरूढा तेजोवती-मनुयाति)

॥ सर्वे निष्क्रान्ताः ॥

---

४९. तस्याः शुभमाशंसन्ते सर्वे ।

५०. पुत्रहिताय-आपत्काले पुत्रं रक्षितुमित्यभिप्रायः ।

५१. कुमारस्य विद्याभ्यासार्थं जागरूका भवेत्युपदिश्य राजा तस्याश्शुभोदयमाशंसते ।

॥ इति द्वितीयदृश्यव्याख्या ॥

## ॥ तृतीयदृश्यम् ॥

---

॥ जीवदेवस्य प्रासादः ॥

नेपथ्ये—

सञ्जीविन्या वियोगात्कलुषितमनसो जीवदेवस्य देहे-
संवारण्या सुतीक्ष्णाद्गुदरुगुदभवद् वातकोपाद्यदर्शः
तच्छान्त्यर्थं प्रसिद्धाश्शुभकरभिषजः कुर्वते तीव्रवैद्यं
देवा विप्राः कृतार्चाः ग्रहजपविधयस्साधितास्सम्प्रयोगैः ॥८॥

---

॥ तृतीयदृश्यव्याख्या ॥

नेपथ्ये-पटान्तरेऽभिनेतृजनाः एवं कथयन्ति ।

सञ्जीविन्या इति-सञ्जीविन्याः- स्वकलत्रस्य वियोगात्- भर्तृसम्मत्या स्वजनकगृहप्रवेशादारभ्य कलुषितमनसः-व्याकुलितचित्तस्य जीवदेवस्य देहे-शरीरभागे यदर्शः- तत्संज्ञका या गुदरुक्-गुदे रोगः उदभवत्-उद्भूता । गुदे कुत्र? गुदे सार्धाङ्गुलपरिमिताः याः शिम्बिगर्भसदृशाः बिलरूपाः 'प्रवाहणी'-'विसर्जिनी' - संवरणीनामिकाः तिस्रो वलयो वर्तन्ते । तासु अन्तस्थतृतीयसंवरणीवलौ इत्यभिप्रायः । तस्य अर्शसो विप्रकृष्टहेतवः के इत्युक्ते-सुतीक्ष्णात्-अत्यन्तोष्णोद्रेकात् इत्यनेन तीक्ष्णं शोकः- वातानपस्पर्शो लङ्घनमित्यादयो हेतव इत्युक्तम् । सन्निकृष्टहेतुस्तु वातप्रकोपः । यद्यपि सर्वे रोगाः वातपित्तकफाख्यत्रिदोषजाः । यथा-"पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रये । सर्व एव प्रकुप्यन्ती"ति । तथापि तत्तदाधिक्यात् व्यपदेशभेदोऽङ्गीकर्तव्यः । अतोऽत्र वाताधिक्यमिष्यते । तच्छान्त्यर्थं तत्परिहाराय प्रसिद्धाः-जगद्विख्याताः शुभकरभिषजः- हस्तशुद्धिभूषिताः वैद्याः तीव्रवैद्यं-चरकसुश्रुत-भावप्रकाशादिषूक्तप्रकारेण निश्चितभैषज्यं कुर्वते - तन्वन्ति । तथैव देवाः-

(ततः प्रविशन्ति शय्याशरणो जीवदेवः- वैद्याः बन्धुवर्गाः)

जीवदेवः-१. हा हतोऽस्मि ! बाधा ! बाधा आसने तीव्रबाधा !

प्रभावती-२. हा ! पुत्रक ! केन दुरदृष्टेन त्वामवमृशतीदमर्शः ! (इति रोदिति)

भिषजः—३. किमिदम् ? अमूल्यौषधिप्रयोगेणापि सुसूक्ष्मशस्त्रचिकित्सयाऽपि अर्शोऽदृश्यं न जातम् । किं करवाम ! एतावदवधि अस्माभिरार्जितस्य सुयशसः कलङ्कस्सम्प्राप्तः । देवाः रक्षत रक्षत ।

---

विविधदेवता विप्राः- ब्राह्मणाः कृनार्चा.- पूजिता इत्यर्थः । ग्रहजपविधयः- नवग्रहजपादय· सम्प्रयोगै·- शास्त्रोक्तविधिभि· साधिता -कृताः इति यावत् । तथापि रोगो न परिहृत इत्यभिप्रायः । स्रग्धरावृत्तम् ॥८॥

अत्र 'संजीविन्या वियोगात्कलुषितमन्यस.' इत्यनेन विप्रलंभशृङ्गारस्य बीजमुपक्षिप्तम् ।

१ गुदरोगग्रस्तो जीवदेव· बाधया हाहाकारेण प्रलपति । अत्रैव करुणरसस्य उद्दीपनविभाव· केचिदनुभावाश्च सूचिताः ।

२. मातापि तद्बाधा दृष्ट्वा विलपति ।

३ किमिदमिति अनर्घौषधीप्रयोगेण सुविचिन्तितचिकित्सया च अर्श·परिहार ·र्थं न जात इत्युद्वेगभावप्रदर्शकम् । कलङ्कस्संवृत्तः-यद्गीय रुक् न परिह्रियतेऽस्माभि· तदाऽस्मद्भैषज्ये शङ्कामावहन्तस्सर्वे अस्मान् दूष्यन्तीत्यभिप्रायः । किं करवाम-अनन्तरकरणीयमस्मदायत्तं न भवति । देवा· रक्षत रक्षत-दैवानुग्रहेणास्मच्चिकित्सा सफला भूयात् । तेनास्मत्प्रसिद्धिर्निरन्तराया भूयादिति देवप्रार्थनापरा अभूवन् सर्वे भिषङ्मणय इति भावः ।

प्रभावती–४. (रुदती) किमिदानीमुपेक्षा-पुत्रदुःखदुःखिताहं न जीवामि ।

प्रद्योतः–५. साध्वीमणे! यद्यत्साध्यं तत्सर्वं कृतम् । दैवमेवाऽत्र निदानम् ।

प्रभावती–६. नाथ किं विस्मरसि त्रिकालज्ञस्य वचनम्- "सञ्जीविनीकरस्पर्शादेव जीवदेवस्य व्याधिपरिहारो भवति" इति ।

प्रद्योतः–७. पुत्रक स्मर सञ्जीविनीं स्मर चिरात्तेऽर्शः शान्तं भवति ।

जीवदेवः—८. हा सञ्जीविनि कुत्रासि ?

सञ्जीविनी-९. (सञ्जीविनी खिन्नहृदया व्योममार्गादायाता) (स्वगतम्)

---

४. सुतदुःखेन दुःखिता माता प्रलपन्ती, पतिः तमुपेक्षत इति तमाक्षिपति ।

५. साध्यं सर्व प्रयतितम् । सर्वप्रयतनं निष्फलमासीत् । दैवानुग्रह एवात्रापेक्ष्यते इति राजा तां समादधाति ।

६. सञ्जीविनीसान्निध्यमत्रापेक्ष्यते-त्रिकालज्ञवचनादिति पत्नी पतिं स्मारयति ।

७. अर्श शान्त्यर्थं सञ्जींविनी स्मरेति पुत्रमादिशति ।

८. स तथा ता स्मरति । अत्र संजीविनीस्मरणमेव विप्रलम्भशृङ्गार-विभावस्य उद्दीपनवस्त्विति भाव्यम् । एवमुत्तरत्र जीवदेवस्य शोकदशासु ।

९. देवत्वेरेण वस्तुस्थितिं परिज्ञाय शोकविह्वला सञ्जीविनी अम्बरपथादायाति । स्वान्तरङ्गे चिन्तयति च । अत्र खिन्नहृदये'ति पदेन संजीविन्यामपि करुणरसोदयस्सूचितः ।

अर्श इति—जीवे-जीवदेवाख्ये मम भर्तरि अर्शस्पर्शः गुदरोगः लग्नः-सञ्जातः तत्कारणात् मातातातौ-तस्य पितरौ मम श्वश्रूश्वशुरावित्यर्थः। शोके

अर्शस्स्पर्शो लग्नो जीवे शोके मग्नौ मातातातौ ।
वैद्याः श्रेष्ठा व्यर्थोद्योगाः देवा यूयं रक्षेतामुम् ॥९॥

(प्रकाशम्) हे प्रियबान्धवाः ! नाऽयं सम्प्रदायेन प्रणामस्यावसरः । हृदा केवलं सर्वे प्रणम्यन्ते । भो भिषजः कीदृशी चिकित्सा कृता ?

भिषजः-१०. करञ्जचूर्णं तक्रेण सह पायितोऽसौ । गुदाङ्कुरोऽपि रजनीचूर्णलेपेनाच्छादितः ।

---

मग्नौ-दुखितौ भवतः । श्रेष्ठाः वैद्याः-भिषग्वराः अस्य चिकित्सायां व्यर्थोद्योगाः- निष्फलप्रयत्ना भवन्ति । तेषां चिकित्सया तस्य रोगो न परिहृत इति तात्पर्यम् । हे देवाः- कर्तुमकर्तुमन्यथाकर्तुं च समर्थाः प्रभावशालिनः देवाः यूयं-यूयमेव अमुं रक्षेत-तं रोगबाधाद्रक्षत तं रोगं परिहृत्य मत्पर्ति पालयतेति भाव॰। अत्र प्रार्थनायां 'विधिलिङ्' प्रयोगः। देवनावरात् स्वहस्तस्पर्शेनैव सोऽयं रोगः परिहृतो भवतीति जानत्यपि मानुषप्रयत्नः दैवबलमेवापेक्षते इत्याकूतेन स्वस्याः अबलत्वमबलात्वं च विज्ञाय"दैवाधीनं जगत्सर्वमि"त्यादिना दैवमेव पर शरणं विदित्वा देवतानुग्रहोऽत्रावश्यक इति दैवभक्तिं प्रदर्शयति सतीमणिः सञ्जीविनी । विद्युन्मालावृत्तम्-तल्लक्षणं-"मो मो गो गो विद्युन्माला इति ॥९॥

कार्यत्वरावशात् यथायोग्यं सर्वेभ्यस्सम्प्रदायानुसारेण प्रणामाचरणाय नाय काल इति तात्पर्यम् । भिषग्वरान् चिकित्साविधान पृच्छति

१०. करञ्जचूर्णं तक्रेण सम्मिश्र्य उदरे प्रवेशितम् । करञ्जचूर्णलक्षणं तु-"चिरबिल्वाग्निसिन्धूत्थनागरेन्द्रयवारलु । तक्रेण पिबतोऽर्शांसि निपतन्त्यसृजा सह"इति भावप्रकाशे । चिरबिल्वः- करञ्जः तस्य फलस्य (अत्र फलशब्देन मज्जा ग्राह्या) चूर्णम् करञ्जचूर्णं । अरलुः- शोणकः । तक्रेणेति किम्-"सतक्र लवणं कुर्याद्वातवर्चोनुलोमनम् । न प्ररोहन्ति गुदजाः

सञ्जीविनी-११. साध्वनुष्ठितम्। तावेव चूर्णलेपावानीयेताम्।

भिषजः—१२. कुमारि तौ तव सन्निधौ वर्तेते।

सञ्जीविनी—१३. अयि प्रिय इदं पिब। (इति करञ्जचूर्णसहितं तक्रं जीवदेवं स्वहस्तेन पाययति। रजनीचूर्णं च स्वहस्तेनैव लिम्पति)

जीवदेवः—१४. आः तक्रपानेनेदानीं हृष्टो भवामि। लेपेन तीक्ष्णबाधा परिहृता। अर्शःपरिहारो जातः। सञ्जीविनि त्वमेव जीवसञ्जीविनी ममार्शोरुग्निवारणाय। (सञ्जीविनी आकाशेऽन्तर्हिता भवति)

---

पुनस्तक्रसमाहता.। तक्राभ्यासोऽर्शसे कार्यः बलवर्णोऽग्निवृद्धये। स्रोतस्सु तक्रशुद्धेषु सम्यक् चरति तद्रसः। तेन पुष्टि तथा तुष्टिः बलं वर्णश्च जायते" इति तक्रप्रयोजनं दर्शितम्। गुदाङ्कुरोऽपि रजनीचूर्णेनाच्छादितः अत्र निर्दिष्टरजनीचूर्णलक्षणमेवं प्रदर्शितम्। "पिप्पली सैन्धवं कुष्ठं शिरीषस्य फलं तथा। स्नुधादुग्धार्कदुग्धं वा लेपोऽयं गुदजान् हरेत्" इति-अथवा-हरिद्राजालिनीचूर्णं कटुतैलसमन्वितम्। एष लेपो वरः प्रोक्तो ह्यर्शसामन्तकारक."। इति। वातजार्शः- पित्तजार्श - कफजार्शः-तत्त्रिदोषजार्शः- शोणितजार्शः द्वन्द्वजार्शश्चेति षड्विधम्। अर्शोरोगाणां अनेकविधा चिकित्सा भवन्तीत्यत्र दिक्प्रदर्शनम्।

११. तच्चूर्णलेपनद्रव्याऽऽनयनायादिशति।

१२. तौ तथैव सन्निधापितौ।

१३. सञ्जीविनी प्रियेति पतिं सम्बोध्य स्वहस्तेन जीवदेवं करञ्जचूर्णमिश्रितं तक्रं पाययति। लेप च गुदव्रणस्योपरि लिम्पति।

१४. तत्क्षणं परिहृतार्शोबाधः जीवदेवः स्वपत्नीं प्रशंसति।

भिषजः—१९.

हस्तशुद्धा वयं सत्यं वीर्यं चास्त्यौषधे महत् ।
सञ्जीविन्या स्तथाप्यत्र हस्तस्पर्शाज्जयोऽभवत् ॥१०॥

वयमिदानीं धन्याः । शास्त्रविहितचिकित्सायां न दोषलेशः ।

मातापितरौ—

जातो जीवः पुनर्जातो हस्तस्पर्शात्सतीमणेः ।
ईदृग्वधूसहावासाद्वयं धन्या महीतले ॥११॥

---

१९. हस्तेति-वयं हस्तशुद्धा इति सत्यम्-असद्धस्तशुध्या अनके रोगा. परिहृता इति तात्पर्यम् । अन्तश्शुध्या बहिश्शुध्या च हस्तशुद्धिर्भवतीति विवेकः । वैद्यानामन्तश्शुद्धिस्तु - अरिषड्वर्गपरित्यागः- शान्तचित्तता-करुणा-परोपकारबुद्धि:-धनाकर्षणे अनाकांक्षा परश्रेयोऽभिलाषः-इत्यादयः श्रेष्ठ-वृत्तयः । बहिश्शुद्धिस्तु-स्नानादिना देहशुद्धिः- निर्मलवस्त्रधारणम्-शुद्धौ-षधसङ्ग्रहः चिकित्सागृहनैर्मल्यव्यवस्था - चिकित्साशस्त्रशलाकादीनां सर्वदा-शुद्धीकरणम्-वाक्सौष्ठवम् - हस्तलाघवः- जागरूकता-इत्याद्यैर्भवति । औषधे महद्वीर्यं भवति - तत्तद्रोगनिवारकौषधीविशेषेषु शक्तिश्च महती भवत्येव । तथापि-इत्थं चापि अत्र-अस्मिन् जीवदेवस्यार्शसः चिकित्साविषये सञ्जी-विन्याहस्तस्पर्शाज्जयोऽभवत्-सञ्जीविनीहस्तस्पर्शद्वारा रोगोऽपहृतः । अत-स्सैवाऽत्र विजयकारणमिति सञ्जीविनीप्रशंसा ॥१०॥

तन्मुखादस्मद्वैद्यप्रभावः विजयी भवति । यतः-शास्त्रविहितचिकित्सायां-न दोषलेशः । अत एव अस्माभिस्सज्जीकृतचूर्णलेपप्रयोगेणैव अर्शो निवारितं किल ।

जात इति-जातो जीवः पुनर्जातः- आवाभ्यां जनितोऽय जीवदेवः अर्शसः परिहारादिदानी पुनर्जात इव भवतीत्यभिप्रायःकथम् ? सतीमणेः हस्तस्पर्शात्-साधुशीलायास्सञ्जीविन्याः हस्तस्पर्शमात्रेण अर्शः प्रनष्टमिति हेतोः । ईदृग्वधूसहावासात्-एतादृशसतीमणिना सह निवासात् महीतले वयं

(कश्चित्कालं जीवदेवः अनामयेन सुखं जीवति)

अन्तःपुरे-कालान्तरे-१६. हा! हा! जीवदेवः पाण्डुरोगग्रस्तः। तस्य त्वग्रूक्षा। मूत्रं कृष्णम्। नयने अरुणे। का गतिः!

जीवदेवः—१७. हा! हा! त्वचि तापः! मूत्रकोशे बाधा! नयने दहतः।

प्रभावती—१८. हा जात! पुनरपि रोगपीडितस्त्वम्। अहं मन्दभागिनी। कुत्र मन्नाथः?

प्रद्योतः—१९. अत्रैव वर्ते। किमापतितम्। कुतो रोदिषि। ब्रूहि प्रिये ब्रूहि।

प्रभावती-२०. शीघ्रं कायचिकित्सा कार्यतां सुतस्य पाण्डु-रोगग्रस्तस्य।

प्रद्योतः—२१. कुत्र वैद्याः?

---

धन्या भवामः लोके वयं पुत्रवन्त इति प्रख्यात्या कृतकृत्यास्स्म इति माता-पित्रोर्हर्षोक्तिः॥११॥

१६. कालान्तरे पाण्डुरोगग्रस्तं जीवदेवं दृष्ट्वा जनाः भयशोका-भ्यामेवं प्रलपन्ति। पाण्डुरोगस्य चिह्नानि त्वचः काठिन्यम् - कृच्छ्रेण मूत्र-विसर्जनम्-रक्ताक्षत्वमित्यादि। अत्र भयानकरसस्य बीजं दर्शितम्।

१७. पूर्वोक्तचिह्नान्येव निर्दिश्य जीवदेवः बाधया विह्वलो विलपति।

१८. पुत्रव्यसनेन दुःखिता माता च प्रलपति-स्वपतिं संसरति च।

१९, 'ब्रूहि' 'ब्रूहि' इति द्विरुक्तिः स्वपत्नीरोदनकारणविज्ञाने त्वरामासक्तिं च प्रकटयति। करुणरसस्य, भयानकरसस्य वा उद्दीपनमत्र स्पष्टम्।

२०. वैद्यमुखात्पाण्डुरोगस्य परिहारोपायः कल्प्यतामित्याशयः।

२१. वैद्यानां सन्निधापनाय सम्भ्रमोक्तिः।

वैद्याः—२२. अत्रैव सन्निहिताः स्मः प्रभो ।

प्रद्योतः–२३. किं रोगपरिहारस्साध्यः ?

वैद्याः—२४. किमसाध्यं जाग्रत्यायुर्वेदभानौ ।

प्रद्योतः—२५. साधयत चिकित्सां सुतस्य ।

वैद्याः–२६. तथा। किं बहुकालचिकित्सयापि पाण्डुरोगो न शान्तः !

प्रभावती—२७. सञ्जीविनीसान्निध्यमेवापेक्ष्यते ।

प्रद्योतः—२८. पुत्र ! जीवदेव स्मर सञ्जीविनीम् ।

जीवदेवः–२९. हा प्रिये सञ्जीविनि ! कुत्रासि शीघ्रमायाहि !

सञ्जीविनी-३०. (तत्क्षणं तत्र सन्निधाय) अत्रास्मि मा भूदार्यपुत्रस्य विषादः ! वैद्यमहोदयाः! कृतप्रतीकारप्रकारः कीदृशः ?

---

२२, तत्रैव स्थितानां वैद्यानां प्रतिवचनम् ।

२३, रोगस्य साध्यासाध्यत्वं पृच्छति ।

२४, आयुर्वेदोक्तचिकित्साप्रयोगेण सर्वं साध्यं भवतीत्यभिप्रायः ।

२५. तर्हि मम सुतस्य पाण्डुरोगचिकित्सायां व्यापृता भवत इत्यादेशः ।

२६. बहुकालं भैषज्यप्रयोगे कृतेऽपि रोगो नापहृत इति चिन्ताक्रान्ता भवन्ति वैद्याः ।

२७. तद्रोगचिकित्सा सञ्जीविनीप्रभावायत्तेति स्मारयति प्रभावती पतिदेवम् ।

२८. तस्याः स्मरणाय पुत्रं प्रेरयति पिता ।

२९. तथा तां स्मरति रोगग्रस्तो जीवदेवः ।

३०. तत्क्षणमेव सन्निहिता सती सञ्जीविनी पतिं सूक्तिभिस्समादधाति । वैद्यैः प्रयुक्तरोगप्रतीकारं विज्ञातुं तान् पृच्छति ।

वैद्याः—३१. अयोरजः गोमूत्रैस्सप्तरात्रं भावितं पयसा सह पानमेकाविधा चिकित्सा ।

सञ्जीविनी—३२. पाण्डुरोगस्य निदानं किम् ?

वैद्याः—३३. पाण्डुरोगस्य विप्रकृष्टनिदानानि-अतिव्यवायः-अतिशयेनाम्ललवणमद्यसेवा-मृद्भक्षणम्, दिवास्वापः-एतेषां सेवनेन वातपित्तकफाः शरीरमतितीक्ष्णं कृत्वा रक्तं विदूष्य त्वचि पाण्डुरत्वं जनयन्तीति भैषज्यशास्त्रम् ।

सञ्जीविनी-३४. अलं ज्ञातमन्यत् कतिप्रकाराः पाण्डुरोगाः ।

वैद्याः—३५. पञ्चप्रकाराः—वातपित्तकफोद्भवास्त्रयः-तत्सन्निपातोत्पन्नश्चतुर्थः- मृद्भक्षणहेतुकः पञ्चमः ।

सञ्जीविनी ३६. यूयमायुर्वेदपण्डितप्रकाण्डाः । आनयताऽत्र गोमूत्रभावितमयोरजः पयश्च ।

वैद्याः—३७. इदमिदम् ।

---

३१. अयोधूलिः सप्तरात्रं यावत् गोमूत्रे संस्कृत्य पयसा सम्मिश्र्य रुग्णस्य पानार्थं प्रदत्तेति कृतचिकित्साविधानं कथयन्ति भिषजः ।

३२. रोगस्य निदानं पृच्छति ।

३३. वैद्याः शास्त्रोक्तकारणानि विवृण्वन्ति ।

३४. पाण्डुरोगप्रकारावगमाय पुनः प्रश्नः ।

३५. सन्निपातोत्पन्नः - वातपित्तकफाख्यत्रिदोषाणामपि विषमावस्थया जातम् । पञ्चप्रकारेषु मृद्भक्षणजन्योऽप्येक इति प्रकटितम् ।

३६. तान् प्रशस्य तैः प्रकल्पितं गोमूत्रभावितमयोरजः क्षीरं च आनेतव्यमित्यपेक्षते ।

३७. वैद्यास्तदानयन्ति ।

सञ्जीविनी—

वातं वायोर्देवात्पित्तं सूर्यात्कफस्तथाऽब्देवात्।
तज्जन्यं पाण्डु ते जीवेशात्परिहरन्तु कारुण्यात् ॥१२॥

(इति देवान् सम्प्रार्थ्य जीवदेवमौषधं पाययति। स्वयमन्तर्दधाति)

जीवदेवः ३८. किमिदमाश्चर्यम्! त्वचि मार्दवम् मूत्रे सुवर्णतां नयनयोर्नैर्मल्यमनुभवामि। पाण्डुरोगः प्रणष्ट इव भाति। श्लाघ्याः खल्वसद्वैद्यधुरीणाः- श्लाघ्यतरमायुर्वेदभैषज्यम्। श्लाघ्यतमा सा।

प्रभावती—३९. सा का?

---

वातमिति—वात वायोर्देवात्-वातस्याधिदेवता वायु', पित्तं सूर्यात्-पित्तस्य सूर्य -कफस्तथाऽब्देवात्-कफस्य आप' इत्यनेन तत्तदधिदेवताशक्तिव्यापारेण तत्तद्दोषा. शरीरे प्रादुर्भवन्ति। यथा-बाह्य वायो शरीरान्तःप्रसरणेन- वाताधिक्यप्रचुरपदार्थसेवनेन वा शरीरे वातधातुः- सूर्यस्य तापेन उष्णयुक्ताहारेण वा पित्तधातुः- तथा अपां गुणेन शीतेन शीतवस्त्वभ्यवहारेण वा कफधातुश्शरीरे जायते। तेषां समावस्थायां शरीररक्षणायापेक्षितानि कार्याणि कुर्वन्ति ते। विषमावस्थाया त एव रोगानुत्पादयन्तीति सङ्ग्रहेण त्रिदोषतत्त्वं ज्ञातव्यम्। ते-वायुसूर्याब्देवता तज्जन्यपाण्डुं-वातपित्तकफाख्यत्रिदोषवैषम्याज्जातं पाण्डुगदं जीवेशात्परिहरन्तु-परिहृत्य मम जीवेशं-जीवदेवं रक्षन्त्वित्ति पुन' देवताप्रार्थनां कृत्वा औषधं प्रयच्छति सञ्जीविनी जीवदेवाय। वृत्तं गीतिः ॥१२॥

३८. नीरोगस्य अरुजो वा यथा त्वक् मृदु' मूत्रं सुवर्णवर्णं नयने निर्मले च भवन्ति इति स्वानुभवं प्रकटय्य तथा परिणाममाश्चर्यमिव जानाति जीवदेवः। भिषज' भैषज्यं च प्रशंसति। विशेषेण ताम्। अत्र अद्भुतरसोदयस्सूचित' तत्तद्विभावानुभावैः।

३९. का, सेति माता सुतमनुयुङ्क्ते।

जीवदेवः—

सा नारी गृहगौरी वारं वारं ममार्शसः पाण्डोः ।
रक्षति या सविलासा हस्तस्पर्शेन देवता जाता ॥१३॥

प्रभावती—४०. सञ्जीविनीप्रभावोऽनन्यसाधारणः । पुत्र जीवदेव इतः परं सुखेन जीवं धारय ।

— कालान्तरे —

जनाः–४१ अहो ! कष्टम् । जीवदेवः राजयक्ष्मणा पीडित इति श्रूयते ।

जीवदेवः—४२. हा ! किमिदं ममाङ्गेषु सादः प्रादुर्भूतः । तालु शुष्यति । कफः संस्रवति । कुत्र माता ? अम्ब ! हा ! अम्ब !

---

सेति–सा नारी गृहगौरी-मम रोगपरिहाराय या कारणभूता सा स्त्री सर्वमङ्गलेव जगति गृहे सर्वमङ्गलस्वरूपा सर्वमङ्गलप्रदा च अस्तीति तात्पर्यम् । देवताभुता या देवतास्वरूपा सती या वारं वारं हस्तस्पर्शेन-भूयः करस्पर्शान्केवलं मम अर्शःपाण्डुरुजौ सविलासा परिहरति-मम आपादे अर्शः-पाण्डुरोगौ लीलया परिहृत्य मां रक्षतीति सन्तोषातिशयेन पत्नीप्रशंसोक्तिः । वृत्तं गीतिः । अत्र शृङ्गाररसोदयस्य वा, शान्तिरसोदयस्य वा आकारस्सूचितः ।

४०. माता स्वश्वश्वाः अनन्यसाधारण हस्तस्पर्शप्रभावं संस्तुत्य सुतमाशिषानुगृह्णाति ।

४१. एव स्थिते पुनः कालान्तरे जीवदेवस्य देहे प्रादुर्भूतराजयक्ष्मरोगं दृष्ट्वा जनाः एवं चिन्तयन्ति ।

४२. सादः-कार्श्यम्-अङ्गेषु साद एव राजयक्ष्मणो लिङ्गम् । तथा तालुशोषणम्-कफसंस्रवणमित्यादि ।

प्रभावती—४३. (प्रविश्य) जीवदेव ! कुत एव प्रलपसि, किमापतितम् !

जीवदेवः-४४. अम्ब इदानीं प्रलपामि । उत्तरक्षणे यमदूतैस्संलपामि ।

प्रभावती—४५. चेटि ! शीघ्रं गत्वा प्रभुवर्यमानय ।

चेटी-४६. (तथा करोति)

प्रद्योतः-४७. किमिदं ! "विपद्विपदमनुबध्नाति" इति लोकोक्तिर्न मृषाभवति । यतः-

---

४३. स्वपुत्रस्य पुनः किमापतितं कुतः प्रलपनमिति माता सुतं पृच्छति ।

४४. राजयक्ष्मणा पीडितोऽहं बाधयाद्य प्रलपामि। उत्तरक्षणे यमकिङ्करैस्सह संलपामि-अचिरान्म्रिये इति भाव.। अनेन शोकस्य पराकाष्ठा दशामनुभवता नायकेन करुणरसोद्रेगस्सम्यक् प्रदर्शित. अत्र प्रलपामि-संलपामीतिपदयोः 'प्र'-'सं' इत्युपसर्गद्वययोगात् - 'लप' धातोरर्थभेदः। तथाचोक्तम्-"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" इति। सम् इत्यत्र अनुस्वारः अनुनासिकलकारो भवति लकारे परे ।

४५. प्रभावती पतिमानेतुं चेटीमाज्ञापयति ।

४६. पतिरागच्छति ।

४७. एका विपद्यदा भवति तामेवान्यानुसरति-तदनन्तरमन्येति विपत्परंपराप्राप्तिः लोकदृष्टा । अत एवेयं लोकोक्तिः । अत्र तु प्रथममर्शः-अनन्तरं पाण्डुरोग'-इदानीं राजयक्ष्मा इति रोगाः बहुधा मम सुतं पीडयन्तीति व्यसनाक्रान्तस्य पितुः प्रद्योतस्य वचनम् । तदेवेत्थं समर्थयते सः-अर्श इति—अयं मम पुत्रः जीवदेवः आदौ-प्रथमं अर्शोग्रस्तः गुदगदेन पीडितः

अर्शोग्रस्तोऽयमादौ भिषगविषयतः पालितः स्वस्य पत्न्या
पाण्डोश्चामुं प्रबाधा तदनु समदहद्रक्षितोऽसौ तथैव ।
अन्या काचित्कुमारं पुनरपि रुगसौ बाधयत्येव तीव्रं
भूयो भूयो विशेषाद्रुगपहृततनुः पीड्यते जीवदेवः ॥१४

विधिनियमो नातिलङ्घ्यः । सन्निहिता वा भिषजः ?

भिषजः–४८. स्वामिन् ! सन्निहितास्स्मः ।

प्रद्योतः–४९. रोगस्य निदानं सम्यग्विदित्वा समुचित-चिकित्सां कुरुत ।

भिषजः–५०. प्रभो ! अयं रोगः राजयक्ष्मेति प्रतिभाति । इदमस्य निदानम् ।

---

भिषगविषयतः- वैद्यानां चिकित्साऽसाध्यतावशात् स्वस्य पत्न्या सञ्जीविन्या पालितः- रक्षित. । तदनु अनन्तरं पाण्डुः-पाडुरोगः अमुं-जीवदेवं समदहत्-अतपदित्यर्थः। तदापि तथैवासौ तदा तद्बाधापरिहारद्वारा रक्षित -पालितः । पुनरपि कुमारं मम पुत्रमन्या काचिद्रुक्-कश्चिद्रोगः- राजयक्ष्मेति यावत् । बाधत एव पीडयत्येव । एवमित्थम् एषः जीवदेव. मम पुत्रः भूयोभूय - पुनः पुनः विशेषात्-अधिकतरं रुगपहृततनुः-रोगग्रस्त इति यावत् । तीव्रं-विशेषेण पीड्यते-बाध्यते । स्रग्धरावृत्तम् । विधिनियमः- दैवसङ्कल्पः नातिलंघ्यः- अलंघनीयः दैवादागतं यत्तदनुभवितव्यमेवेति तात्पर्यम् । वैद्यानां सान्निध्यं पृच्छति ॥१४॥

४८. राजगृहे भिषजा सान्निध्यं प्रतिदिन भवितव्यम् । विशेषतः राजसम्बन्धिनः यस्य कस्यापि रोगे प्राप्ते तेषां निरन्तरसान्निध्यम् अनिवार्यं खलु ।

४९. एवमियं वैद्यानां राजाज्ञा ।

५०. अस्य रोगस्य राजयक्ष्मेति नाम । कारणं तु-

वेगानां सन्निरोधात्क्षयकृतिवशतस्साहसादन्नदोषा-
द्रोधेन स्रोतसां तन्निहितहितरसो दह्यते तेन वातः ।
देहस्थो रोगमेतं जनयति कुपितोऽतिव्यवायस्य हेतोः
प्रक्षीणे शुक्रधातौ तदनु तदितरे धातवो यान्ति सादम् ॥१५

---

वेगानामिति—वेगानां वातमूत्रपुरीषाणां सन्निरोधात्- अतिमात्रं निरुद्धप्रसरात् क्षयकृतिवशतः-क्षीयते अनेनेति क्षयः-धातुक्षयहेतुभूतकार्येभ्यः इति यावत् । तानि कार्याणि-अतिव्यवाय-- अनशनम्-ईर्ष्यादय इति निर्दिष्टानि । साहसात्-बलिष्ठैस्सह मल्लयुद्धादिव्यापारात् अन्नदोषात्-विषमाशनात् विषमाशनलक्षणम्-"बहु स्तोकमकाले वा भुक्तं तद्विषमाशनम्" इति उक्तं भवति । स्रोतसां रोधेन-रसवाहिनीमार्गेषु रुद्धेषु सत्सु तन्निहित -रसवाहिनीशिरान्तस्थ हितः शरीरस्वास्थ्यकारी यो रसः- भुक्तान्नपानपरिपाकरूपो रसविशेष दह्यते-शुष्यतीति यावत् । तेन-तच्छोषणेन देहस्य -शरीरान्तर्व्याप्तः वातः-व्यानाख्यो वायुः प्रकुपितः दूषितस्सन् एतं रोगं राजयक्ष्माणं जनयति-रोगजनने कारणं भवति । अतिव्यवायस्य-कल्पितरहितमैथुनव्यापारस्य हेतोरपि-कारणादपि अयं रोगः प्रादुर्भवतीति तात्पर्यम् । यतः-अतिव्यवायकारणेन शुक्रधातौ प्रक्षीणे-अत्युत्कृष्टबलकरनिर्मलरेतोनामधातौ क्षयं गच्छति सति तदनु अनन्तरं तत्क्षयेण प्रतिलोमक्रमात् तदितरे धातवः मज्जादयः सादं-क्षयं यान्ति-प्राप्नुवन्ति । यथा-शुक्रक्षयेण-मज्जाक्षयः। तत्क्षयेणास्थिक्षयः। अस्थिक्षयेण मेदःक्षयः । तत्क्षयेण मांसक्षयः । मांसक्षयेणासृक्क्षयः रक्तक्षयेण रसक्षय इति प्रतिलोमक्षयव्यापारस्सर्वेधातुषु प्रसरति । अनेन व्यवायकार्यं मानुषधर्मत्वेनानुगृहीतमपि शास्त्रविधीनुल्लंघ्य कालदेशादिकमुपेक्ष्य स्वेच्छयाऽतिमात्रमाचरितं चेत्-तत क्षयरोगस्य हेतुर्भवतीत्युक्तत्वात् "अति सर्वत्र वर्जयेत्" इत्यनुशासनमत्राप्यतिजागरूकतया पालनीयमित्युपदेशेनायुर्वेदस्य परमोपकारकत्वं प्रदर्शितं परमकारुणिकैरायुर्वेदोपदेष्टृभिः । स्रग्धरा वृत्तम् ॥१५॥

अतः अस्य रोगस्य राजयक्ष्मा-क्षयः- शोषः- इति पर्याय-नामानि

जीवदेवः—५१. हा तापः ! करयोस्तापः ! पादयोस्तापः ! ज्वरो मे सर्वाङ्गाणि तपति। हा ! हा !! हा !!! ।

प्रभावती-५२. (रुदती) जात ! सहस्व दैवादारोग्यं भवेत् ।

प्रद्योतः—५३. (प्रदुःखितः दीर्घं दीर्घं निश्वस्य) पण्डिताः ! क्रियतामाशु चिकित्सा-जीवतु जीवदेवः ।

पण्डितेष्वेकः—५४.

मलायत्तं बलं पुंसां शुक्रायत्तं च जीवितम् ।
तस्माद्यन्तेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥१६॥

---

राजयक्ष्मा—"राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः । तस्मात्तं राजयक्ष्मेति प्रवदन्ति मनीषिण"। वैद्यो व्याधिमता व्याधेर्यत्नेन यक्ष्यते पूज्यते इति यक्ष्मशब्दस्य निरुक्तिः । धातुव्यापारक्षयकारित्वात्क्षय. । रसादिधातूनां शोषणात् शोणः इति च प्रदर्शिता ।

५१. रुग्ण· जीवदेव करपादादिसर्वाङ्गेषु ज्वरतापमनुभवन् हाहा-कारेण रोदिति। अनेन नायके तन्मातापित्रोश्च करुणरसोद्गार प्रकटितः। अतिव्यवायादिदोषकारणप्रसक्त्या बीभत्सरसस्यास्पदं बीजमभिहितम् ।

५२. प्रभावती सुतं शान्तवचनैस्समादधाति ।

५३. प्रद्योतोऽप्यत्यन्तव्यसनाक्रान्तः जीवदेवस्य रक्षणाय भिष-ग्भिश्चीकित्सामपेक्षते ।

५४. मलेति-पुंसां बलम् मलायत्तं-मानवानां बलं। अतिमारादिना मले नष्टे बलं क्षीयते मलेऽविनष्टे बलं तिष्ठति । धातुषु यः स्नेह. तदेव ओजः, ओज एव बलम् । शुक्रायत्तं च जीवितं-शुक्रधातुरक्षणेन प्राणधारणं नियतं भवति । तस्मात्-अतः यक्ष्मिणः- क्षयरोगिणः मलरेतसी-मलश्च रेतश्च मलरेतसी यत्नेन-प्रयत्नपूर्वकं संरक्षेत्-पालयेत् । इत्यायुर्वेदविधिः । अत्र बीभत्सरसस्य कारणभूताः उद्दीपनविभावाः प्रदर्शिताः ॥१६॥

इति हि शास्त्रम् ।

अन्यः—५५ तदर्थम् ?

प्रथमः-५६. तदर्थं-"शालिषष्टिकगोधूमयवमुद्गादयो हिताः" ते देयाः ।

तृतीयः—५७. "सपिप्पलीकं सयवं सकुलत्थं सनागरम् । दाडिमामलकोपेतं स्निग्धमाज्यं रसं पिबेत्" इति भावप्रकाशोक्तां चिकित्सां करवामः । (इत्यनेकविधाश्चिकित्सा बहुकालं कुर्वन्ति)

प्रद्योतः—५८. किं भोः ! कुमारस्य यक्ष्मा परिहृतः ?

भिषजः ५९. कुमारः यत्नेन चिकित्सितः । रोगस्तु चिकित्सा-ऽसाध्य इव प्रतिभाति ।

प्रभावती-६०. सञ्जीविनीहस्तस्पर्श एव परमं भैषज्यं मन्ये ।

प्रद्योतः—६१. कुमार ! संस्मर प्रियभार्याम् ।

जीवदेवः–६२. भोः प्रिये ! किमियमुपेक्षा मयि ? प्रसीद ।

---

५५. मत्तो रक्षणाय किं कार्यमिति पृच्छति ।

५६. शालिषष्टिकगोधूमयवमुद्गादय षण्मासप्रभवशालिधान्यं गोधूम धान्यं-यवाः- मुद्गाः-सेवितव्याः- इत्युक्तम् ।

५७. मूलोक्तपिप्पल्यादिरसं पिबेदित्यन्या चिकित्सा ।

५८. चिकित्सापरिणामः कथ भवतीति राजा पृच्छति ।

५९ रोगश्चिकित्सासाध्यो न भवतीति भिषजामुत्तरम् ।

६०. सञ्जीविनीहस्तस्पर्शेन रोगपरिहारो भवतीति स्मारयति राज्ञी ।

६१ तस्यास्सान्निध्याय तां स्मरेति पुत्रमादिशति पिता ।

६२. तां स्मृत्वा तथा उपेक्षा कृतेति उपालम्भं करोति रुग्णः । अयमुपालंभोऽपि विप्रलंभशृङ्गारस्य अनुभावरूपेणालंबो भवति ।

सञ्जीविनी—६३. (सन्निधाय) प्रसीदत्वार्यपुत्रः ।

नोपेक्षा मे त्वयि भवति भोः कारणं स्मारणं ते
क्षिप्राऽऽयाता स्मरणकलिता साधयाम्यद्य कार्यम् ।
दुस्साधोऽयं जगति विदितो राजयक्ष्मा तथापि
प्राणत्राणं सुकृतवशतो दैवयोगाद्भवेत्ते ॥१७॥

भो भिषग्वराः कृता भवद्भिर्गुणवच्चिकित्सेति मन्ये ।

भिषजः-६४. कृता चिकित्सा परन्तु सा गुणवती न जाता।

सञ्जीविनी—६५. का सा चिकित्सा ?

---

६३. सञ्जीविनी सन्निधाय पतिमेवं समादधाति ।

नोपेक्षेति-त्वयि मे उपेक्षा न भवति-मया त्वं नोपेक्षितः ते स्मारणं कारणं भवति-मम सान्निध्यविलम्बे त्वया मत्स्मरणविलम्ब एव हेतुः। अत्र स्मरणमेव स्मारणं स्वार्थे अण् प्रत्ययः। स्मरणकलिता क्षिप्रायाता-अद्य ते मम स्मरणं जातं स्मरणानुक्षणमेवाहमत्रागता । अद्य कार्यं साधयामि-इदानीं मम कर्तव्यं निर्वर्तयामि । अयं राजयक्ष्मा दुस्साध इति जगति विदितः-क्षयचिकित्सा न सुकरा इति लोके प्रसिद्धिः । तथापि-एवं सत्यपि ते प्राणत्राणं-तव प्राणरक्षणं दैवयोगाद्भवेत्-देवताप्रसादेन भवतीति निश्चयार्थेऽत्र 'विधिलिङ्' । मन्दाक्रान्तावृत्तम् । एतच्छ्लोकार्थेन विप्रलम्भशृङ्गारस्य व्यभिचारिभावा अपि केचित्सूचिताः ॥१७॥

गुणवच्चिकित्सा-गुणकारी औषधप्रयोगः ।

६४. कृतापि चिकित्सा गुणकारिणी नाभूदिति तथ्यं कथयन्ति भिषजः ।

६५. कीदृशी चिकित्सा कृतेति पृच्छति ।

भिषजः—६६. यवकुलत्थजलशेषमिश्रितं घृतसंस्कृतमौषधं दत्तम् । पिप्पलीनागरमिश्रितं कल्कं च प्रयुक्तम् । ककुभत्वक् नागबलावानीरबीजम्-एतानि चूर्णीकृत्य मधुघृतसहितं तच्चूर्णं पयसा पायितम् ।

सञ्जीविनी—६७. सर्वं साध्वनुष्ठितम् । तत्पानं तत्कल्कं चानयत ।

भिषजः—६८. इदमुभयमत्र सन्निधापितम् ।

सञ्जीविनी-६९. (पानं स्वहस्तेन जीवं पाययति । कल्केन तदङ्गानि लिम्पति) प्रिय ! कथमिदानीं ते तापः ?

जीवदेवः-७०. अहह ! परिहृततापोऽहं जातः । सञ्जीविनीकरस्पर्शेनाग्निरपि शीतो भवति । साध्वीमणे ! श्लाघ्यं ते जन्म ।

(सञ्जीविनी मौनेनैवान्तर्दधाति)

प्रभावती—जात !

इयं ते भार्याऽलं तव भरणशक्ता वरगुना
परं साध्वी स्त्रीणां कुलमणिरिवैषात्र जनिता ।

---

६६. यद्यत्कृतं तत्सर्वमावेदयन्ति ।

६७. भिषग्भिस्सम्पादितानामौषधविशेषपानकल्कादीनामानयनाय वैद्यान् प्रेरयति ।

६८. ते तानि सन्निधापयन्ति ।

६९ सञ्जीविनी जीवदेवम् औषधरसं पाययति । कल्कं च प्रयुङ्क्ते । तत्परिणामं च पृच्छति ।

७०. तत्क्षणं परिहृतरोगः जीवदेवः स्वसतीमणिं श्लाघते । अत्र संजीविनीकरस्पर्शेन अग्निरपि शीतो भवतीत्यतिशयोक्त्या अद्भुतरसस्यानुभावः कश्चित्प्रदर्शितः ।

रुजां शान्तेः पत्युः भिषगभिनुता कीर्तिमहिता
वयं धन्या लोके सुखपरवशास्तन्महिमतः ॥१८॥

(जीवदेवः कश्चित्कालं निरामयो जीवति)

— कालान्तरे —

जीवदेवः-७१. हा ! कर्णशूलं मां दहति । कुत्र मे माता ?

चेटी-७२. कुमार ! ते माता अभ्यवहारं करोति । क्षिप्रमायाति । किञ्चिच्छय्यायां शयित्वा समाश्वासयात्मानम् ।

---

प्रभावत्यपि स्ववधूमेवं प्रशंसति-

इयमिति-इयं ते भार्या-तव पत्नी एषा सञ्जीविनी अलं तव भरणशक्ता-त्वां निखिलरोगेभ्यः परित्रातुं शक्नोति । कथम् ? सा वरयुता-सा देवैर्दत्तेन वरेण महिमशालिनी भवतीति तात्पर्यम् । परम्-इतोऽपि, साध्वी पतिव्रता-पतिव्रताप्रभावेणापि सावित्रीव पतिं त्वां रोगेभ्यो रक्षितुं समर्थेति ध्वनिः । अत्र-अस्मिन् लोके कुलमणिरिवैषा जनिता-नारीजनशिरोमणिरिव जाता । कुतस्तथा जाता ? पत्युः रुजां शान्तेः-भर्तू रोगनिवारणाय । किंच सा भिषगभिनुता-सर्वैः राजवैद्यैः प्रशंसिता । कीर्तिमहिता-अतः यशसा समुज्ज्वला भवति । तन्महिमतः वयं सुखपरवशास्सन्तः लोके धन्या भवामः-तत्प्रभावातिशयेन जगति वय सुखिनः सार्थकजन्मानश्च भवामः । शिखरिणीवृत्तम् । अत्र शान्तिरसोदयस्य स्थायिविभावानुभावव्यभिचारिभावाः यथोचितमुपन्यस्ता इति ध्वन्यते ॥१८॥

एवं कश्चित्कालं यापयति सुखेन जीवदेवः ।

७१. पुनः कर्णशूलेनाविद्धः शूलबाधामसहमानः मातरमाह्वयति ।

७२. माता अभ्यवहारं करोतीति चेटी निवेदयति ।

जीवदेवः—७३ हा ! हा ! तोदः ! बाधः ! तापः ! आह्वय ! आह्वयाम्बाम् ।

प्रभावती-७४. (आगत्य) किं पुनः कर्णशूलम् ? रोगदेवतेदानीं तवेन्द्रियनिवासपरा । भवतु ! यदाऽर्शःपाण्डुयक्ष्मभ्योऽपि राक्षितः कुमारः कर्णरोगोऽपि चिकित्सासाध्यो भवत्येव । चेटि ! वैद्यानत्र प्रापय ।

भिषजः-७५. (समागत्य) कुतः कुमारोऽद्य शय्यायां निषक्तः ।

प्रभावती-७६. कर्णरोगेण पीडितोऽयं कुमारः ।

भिषजः-७७. हा ! दैवहतकोऽयं राजकुमारः । भवतु स्वकार्यं निर्वर्तयाम ।

प्रभावती-७८. (चेटीं प्रति) स्वामिने निवेदयेमां वार्ताम् ।

चेटी—७९. तथा ।

---

७३. बाधायाः औल्बण्येन मातुराह्वानाय चेटी प्रेरयति ।

७४. किम् इन्द्रियनिवासपरा-श्रोत्रेन्द्रियरोगग्रस्तो भवति कुमार इति मातुः शोकप्रलापः। चिकित्सासाध्यो भवति रोग इति आत्मनस्समाधानं च । वैद्यानाह्वापयति ।

७५. शय्यायां रोगबाधाकुलितं जीवदेवं दृष्ट्वा पुनश्शय्याश्रयणाय कारणं पृच्छन्ति भिषजः ।

७६. तस्य कर्णशूलबाधा जातेत्यावेदिताः ।

७७. भिषजोऽपि विषादं सूचयित्वा चिकित्सायां प्रवर्तन्ते ।

७८. सती प्रभावती पतिं प्रद्योतं एनां वार्तां चेटीमुखात् श्रावयितुमिच्छति ।

७९. चेटी प्रद्योताय राज्ञे तद्वार्तां निवेदयति ।

प्रद्योतः—८०. (तत्रायाति) (सुतं दृष्ट्वा-)

कीदृग्भाग्यहतस्त्वमत्र जनितो दौर्भाग्ययोगेन मे
रोगो रोगमनुक्रमादहरहस्त्वां याति देहान्तकः।
सन्तापस्त्वतिमात्रगो भवति नस्त्वद्दुःखसन्दर्शिनां
कीदृग्वा स भवेदनुक्षणमहो रोगाभिभूतस्य ते ॥१९॥

भो भिषग्वराः! कर्णरोगा बहुप्रकारा इति श्रूयते। तेषु कतमोऽयम्? येन मत्सुतोऽद्य शयने निपातितः। तस्य चिकित्सा च का? विशदयन्तु भवन्तः।

भिषजः—८१. कर्णरोगाः अष्टाविंशतिप्रकाराः।

---

८०. पिता सुतस्य स्थितिं पश्यन्नेव विलपति।

कीदृगिति-मे दौर्भाग्ययोगेन-मम दुर्दैवेन अत्र-अस्मिन् मम गृहे त्वं कीदृग्भाग्यहतो जातः-त्वं निर्भाग्यस्सन् जनित इत्यात्मनिन्दावचनं तस्य महदन्तरङ्गव्यसनं सूचयति। अहरहः- प्रत्यहं क्रमात् क्रमेण देहान्तकः- शरीरनाशकः रोगः- एकः रोगः रोगमनु-अन्यं रोगमनुसृत्य त्वां याति त्वां प्राप्नोति। एकस्य रोगस्य प्रादुर्भावे सति चिकित्सया तत्परिहारावसर एव अन्य रोग प्रसरतीति तात्पर्यम्। त्वद्दुःखसन्दर्शिनां-त्वदीयरोगबाधां पश्यतां नः-अस्माकं सन्तापः-व्यसनम् अतिमात्रगो भवति-अतिशयेनोदितं भवति। क्षणं पश्यतामेवं व्यसने प्रादुर्भूते अनुक्षणं रोगाभिभूतस्य-सर्वदा रोगपीडितस्य ते-तव स सन्तापः कीदृग्वा भवेत्-कीदृश इति वक्तुमसाध्यमिति तात्पर्यम्। शार्दूलविक्रीडितं वृत्तम्। अनेन करुणरसस्य उद्दीपनविभावोदयस्सूचितः ॥१९॥

वैद्यान् कर्णरोगप्रकारान् तच्चिकित्साञ्च पृच्छति राजा।

८१. अष्टाविंशतिः कर्णरोगप्रकाराः यथा-कर्णशूलम् - कर्णनादः-बाधिर्यम्-क्ष्वेडः- कर्णस्रावः- कर्णकण्डूः- कर्णगूथः- प्रतिनाहः-, जन्तुकर्णः-

एको भिषक्-८२. तत्र प्रथमं कर्णशूलं कुमारमापीडयति। अत्र चिकित्सा-ममधुशृङ्गवेरं वा ससैन्धवतैलं वा कदुष्णं कर्णयोर्धार्यं भवति।

अन्यः-८३. लशुनरसो वा आर्द्रकरसो वा शिग्रुरसो वा वारुणी वा मूलकरसो वा कदलीरसो वा कदुष्णः कर्णपूरको भवति।

तृतीयः-८४. इदमपि शृणोतु देवः-

अर्काङ्कुरानम्लपिष्टान् सतैललवणान्वितान्।
सन्निदध्यात्सुधाकाण्डे कोरिते मृत्स्नयावृते ॥२०॥

प्रद्योतः ८५. तां चिकित्सां साधयत-यया अचिरेण शूलोपहतिस्स्यात्।

भिषजः-८६. (ते तथाऽऽचरन्ति। तथापि शूलबाधा नापहृता)

प्रद्योतः-८७. कुमार! सञ्जीविनीं मनसि कलय। अचिरात्ते कर्णशूलं परिहृतं भवति।

---

द्विविधविद्रधिः- कर्णपाक-पूतिकर्ण- चतुर्विधार्शः, सप्तविधार्बुदम्-चतुर्विध-शोफ- इति भिषजः वदन्ति।

८२. तत्र प्रथमभूतेन कर्णशूलेन कुमारः पीड्यते। तत्र चिकित्सा एवमिति आवेदयत्येको भिषक्।

८३. कदुष्णं लशुनरसम्-आर्द्रकरसं शिग्रुरस वारुणीरसं मूलकरसं कदलीरसं वा कर्णे प्रक्षिपेदित्यन्यो वैद्यविद्वानभिप्रैति।

८४. अर्काङ्कुरानिति मूले प्रदर्शितचिकित्सामुपदिशति तृतीयो भिषक् ॥२०॥

८५. यया चिकित्सया शूलं निवार्यते तस्यास्सम्पादनाय प्रयतितव्यम् इत्यादिशति राजा।

८६. तथाऽऽचरणेनापि कर्णशूलं नापहृतम्।

८७. तदा राजा सञ्जीविनीं स्मरेति पुत्रमादिशति।

जीवदेवः—८८. अयि ! सञ्जीविनि ! कर्णशूलान्मां रक्ष ! कृपालुर्भव !

सञ्जीविनी—८९. (सन्निधाय स्वगतम्) भिषग्भिर्यावत्यश्चिकित्साः कर्तव्याः तावत्यः कृतप्राया एव। अत्र निदानं पृच्छामि। (प्रकाशम्) भो ! वैद्यचूडामणयः ! कर्णशूलस्य निदानं वेदितुमिच्छामि।

भिषजः—९०.

समीरणश्श्रोत्रगतोऽन्यथा चरन् समन्ततः शूलमतीव कर्णयोः।
करोति दोषैश्च यथा स्वमावृतः सकर्णशूलः कथितो दुराचरः ॥२१॥

इति वदन्ति शास्त्रविदः।

सञ्जीविनी—९१. सत्यमभिहितम्। लशुनरसमाहरत।

भिषजः—९२. अत्र वर्तते।

सञ्जीविनी-९३. (तद्रसं कर्णयोस्स्रावयति। शूलं निर्गच्छति)

---

८८. स तथा करोति।

८९. कृतास्सर्वाश्चिकित्साः फलप्रदा नाभूवन्निति विज्ञाय सञ्जीविनी रोगनिदानं यथावज्ज्ञायते वा न वेति परीक्षितुकामा तान् रोगनिदानं पृच्छति।

९०. कर्णान्तः प्रविष्टो वायु. प्रतिलोममार्गेण चरन् पित्तकफरक्तैः शूलं जनयतीति शास्त्रोक्तप्रमाणमुदाहरन्ति ते।

९१. लशुनरसानयनाय सञ्जीविनी वैद्यान् चोदयति।

९२. तद्रसमाहरन्ति वैद्याः।

९३. तया तस्य कर्णे तद्रसस्रवणमात्रेण शूलवेदना विनष्टाऽभूत्।

गतमिति-कर्णशूलं गतं गतं-कर्णशूलबाधा निवृत्तैव। आदरार्थे अवधारणार्थे वा द्विरुक्तिरत्र बोध्या। धर्मपत्न्या-मम भार्यया सञ्जीविन्या हितं कृतं-कर्णशूलपरिहारद्वारा मम परमोपकारः कृतः। सतां मतं,

जीवदेवः—

गतं गतं कर्णशूलं हितं कृतं धर्मपत्न्या ।
सतां मतं सम्प्रधार्य भिषग्वराः श्लाघ्यकार्याः ॥२२॥

(सञ्जीविनी अन्तर्दधाति । सर्वे सन्तुष्टा भवन्ति)

(जीवदेवः निरामयो जीवति कश्चित्कालम्)

— कालान्तरे —

(मातापितृसुतादीनामेकत्रैकदा अभ्यवहारः प्रचलति)

जीवदेवः-९४. अम्ब ! मम दक्षिणनेत्रं किञ्चिच्चिमचिमायते ।

प्रभावती ९५. पुरुषाणां दक्षिणनेत्रस्पन्दनं शुभोदर्कायेति श्रूयते ।

जीवदेवः-९६. न तु स्पन्दनम् अम्ब ! किमपि नेत्रान्तस्तुदति । बाष्पमपि स्रवति ।

---

विद्वदभिप्रायः संप्रधार्य बहुमन्तव्य, अनुसर्तव्यश्च । भिषग्वराः श्लाघ्यकार्याः-एते राजवैद्याः स्तुत्यचिकित्सका इति प्रशंसनीया । इदं वृत्तं अनुष्टुप्-छन्दोजातेषु षट्पञ्चाशदधिकद्विशत-(२९६) वृत्तेषु अष्टत्रिंशं (३८) वृत्तम् । अस्य मंदधारेति नामनिर्देश. क्रियते । तल्लक्षणम्-"जतौ गगौ मंदधारा"इति ।

९४. चिमचिमायते-इत्यनुकरणशब्दः नेत्ररोगसूचको भवति ।

९५. इदं शकुनशास्त्रविदितम्-पुरुषाणां दक्षिणनेत्रस्पन्दनेन शुभमापद्यते इति ।

९६. नेत्रान्तरे तोदः- नेत्रयोर्बाष्पाविर्भावश्च न शुभसूचक इति प्रतिवदति कुमारः ।

प्रद्योतः-९७. नेत्ररोगो भवेत् । कर्णशूलमनु नेत्ररोगः । एव-मेव हि दैवहीनस्य कुमारस्य जीवितकालपरिणामः ।

प्रभावती—९८. कथमयं दैवहीनः वयमेवाधन्याः स तु श्रीकरपालितः ।

प्रद्योतः—९९. वयं लक्ष्मीकरास्फालिताः ।

प्रभावती-१००. न तु सञ्जीविनीकरस्पर्शवेदिनः ।

प्रद्योतः-१०१. किं श्रीरेव सञ्जीविनीति तवाशयः ?

प्रभावती—१०२. आम, सत्यम् ! प्रिय !

प्रद्योतः-१०३. बहुमतस्ते आशयः । भवतु कार्तान्तिकमाहूय कुमारस्य भविष्यं पृच्छामः । कस्कोऽत्र भोः ।

---

९७. नेत्ररोगो भवदिति प्रद्योतस्याभ्यूह । कर्णशूलानन्तरं नेत्र-रोगमनुभवितुमयं दैवहीन इत्यनुतापवचनम् ।

९८. श्रीकरपालितत्वात् अयं न हतदैव', वयमेवाधन्या इति राज्याः अभिप्राय. ।

९९. राज्ञा धनकनकादिमण्द्धिमत्त्वात् वयमपि लक्ष्मीप्रसादयुक्ता इति राज्ञः आशय ।

१०० कुमारः जीवदेवस्सञ्जीविन्याः करस्पर्शप्रभावं जानाति । वयं तथा न जानीम' । तर्हि वयं कथं कुमार इव धन्या इति राज्या आक्षेपः ।

१०१. "श्रीकरपालित- सञ्जीविनीकरस्पर्शप्रभावज्ञः" इति वाक्य-द्वयतात्पर्यावगमात् किं श्रीरेव सञ्जीविनीति राज्ञः पुनः प्रश्नः ।

१०२. 'आम्' इत्यङ्गीकारः ।

१०३. राजा तद्वचनं सम्भाव्य जीवदेवस्य भविष्यावगमार्थं कार्ता-न्तिकानयनाय सेवकमाह्वयति ।

सेवकः—१०४. आज्ञापयतु देवः ।

प्रद्योतः–१०५. शीघ्रं गत्वा ज्यौतिषिकप्रवरमानयात्र ।

सेवकः—१०६. यथाऽऽज्ञापयति देवः ।

सेवकः १०७. (कार्तान्तिकेन सहागत्य) स्वामिन् ! सन्निहितोऽयं ज्यौतिषिकप्रवरः ।

प्रद्योतः–१०८. कार्तान्तिकप्रवरं प्रणमामि ।

कार्तान्तिकः–१०९. दीर्घायुष्मान् भव । सर्वत्र राजकार्यसिद्धिरस्तु ।

प्रभावती—११०. पूज्यपाद ! प्रभावत्यहं प्रणमामि ।

कार्तान्तिकः—१११. कल्याणं भूयात् ।

प्रभावती—११२. कुमारस्य भविष्यं पृच्छामि ।

---

१०४. सेवक राजाज्ञा निरीक्षते ।

१०५. राजा कार्तान्तिकमानयेत्याज्ञापयति ।

१०६. सेवकस्तथेति गच्छति ।

१०७. तमानीय तद्वार्तां राज्ञे निवेदयति सेवकः ।

१०८. राजा तं प्रणामेन सम्भावयति ।

१०९. कार्तान्तिकस्तमाशिषानुगृह्णाति ।

११०. राज्ञ्यपि तथा तं प्रणमति ।

१११. तस्यै समुचिताशिषं प्रयुङ्क्ते कार्तान्तिकः ।

११२. जीवदेवस्य भविष्यविषये जिज्ञासां करोति राज्ञी ।

कार्तान्तिकः-११३. रविशन्यङ्गारकाः प्रतिकूलस्थानस्थाः कुमारस्य विविधरोगोत्पादका भवन्ति। अचिरात्ते शुभफलदा भवन्ति।

प्रभावती—११४. कथम्? कथम् अस्मत्कुमारोऽद्य नेत्र-रोगेण पीडितः?

कार्तान्तिकः–११५. इदमेवास्य चरमं रोगस्थानम्। इतः परमयं यावज्जीवं निरामयो भवति।

उभौ–११६. महान् प्रमोदः। (कार्तान्तिकं सम्मानेन तोषयति राजा) (कार्तान्तिकः निर्गच्छति)

जीवदेवः-११७. शय्या! शय्या! नेत्रे तीव्रवेदना। (शय्यायां रुग्णो बाधां नाटयति)

प्रभावती ११८. कुत्र वैद्याः?

सेवकः—११९. आगताः।

---

११३. प्रतिकूलस्था रविशन्यङ्गारकाः कुमारस्य तत्काले व्याधि-कारका अपि शीघ्रं शुभफलदा भवन्तीति ज्यौतिषिको ब्रूते।

११४. नेत्ररोगपीडिते कुमारे कथं तेषां शुभफलमिति राज्ञी कार्तान्तिकमनुयुङ्क्ते।

११५. नेत्ररोगपरिहारानन्तरं कुमारस्य कोऽपि रोगो न सम्भवति शुभमेव भवतीत्युत्तरम्।

११६. तद्वार्तया सन्तुष्टो राजा कार्तान्तिकं बहुमानेन तोषयति।

११७. अत्रान्तरे जीवदेवः नेत्ररोगबाधां प्रकाशयति।

११८. राज्ञी वैद्यानां सन्निधानमपेक्षते।

११९. ते सन्निहिता भवन्ति।

प्रभावती—१२०. भो भिषग्वराः ! इदानीं पुत्रस्य नेत्र-चिकित्सा महता यत्नेन साधयितव्या । यतः–

"सर्वेन्द्रियाणां नयनं प्रधानं" शास्त्राणि लोकाश्च वदन्ति नित्यम् ।
अन्धस्य वृत्तिर्जनयेज्जुगुप्सां नेत्रेण हीना न सुखं लभन्ते ॥२३॥

एको-भिषक्–१२१. नेत्रमण्डलं द्व्यङ्गुलायतस्थूलम् । तत्र पक्ष्म-वर्त्म श्वेतमण्डलं कृष्णमण्डलम्- दृष्टिमण्डलं चेति पञ्चभागाः । तत्र दृष्टिमण्डलं मध्यस्थम् । तदनन्तरं कृष्णमण्डलम् । तदुत्तरं श्वेत-मण्डलम् । तदनन्तर वर्त्म । अन्तिमं पक्ष्मेति व्यवस्थितम् ।

प्रद्योतः—१२२. तत्रोत्पन्ना व्याधयः कति ?

भिषक्–१२३. "नेत्रमण्डले अष्टसप्ततिव्याधयः। यथा-दृष्टि-मण्डले-चतुर्दश-कृष्णमार्गे चत्वारः-शुक्लभूमिकायामेकादश-वर्त्मनि-एकविंशतिः- पक्ष्मयोर्द्वौ-सन्धिषु-नव-अन्यत्र सप्तदश" इति ।

---

१२०. प्रभावती स्वपुत्रस्य नेत्रचिकित्सार्थं वैद्यानादिशति ।

सर्वेति-सर्वेन्द्रियाणा नयनं प्रधानं-पञ्चज्ञानेन्द्रियाणा मध्ये नेत्रमेव मुख्यतमम् । इदं तत्वं शास्त्राणि लोकाश्च नित्यं वदन्ति-इदं शास्त्रतः वेद्यते लोकतः ज्ञायते । अन्धस्य वृत्तिः-नेत्रहीनस्य व्यापारः, जुगुप्सां जनयेत्-बीभत्साकरो भवति । नेत्रेण हीनाः- अन्धाः सुखं न लभन्ते-न किमपि सुखं तेषा भवतीत्यभिप्रायः । उपेन्द्रवज्रावृत्तम् ॥२३॥

१२१. पक्ष्मणोरन्तः श्वेताकारगोलकः तदन्तः कृष्णरूपावयवः-तदन्तः- मध्यमावयवः- तदन्तः कनीनिकेति नेत्राङ्गानां विवरणम् ।

१२२. प्रद्योतः नेत्ररोगप्रकारान् पृच्छति ।

१२३. भिषजामेकः नेत्रस्य पञ्चस्थानेषु अनिर्दिष्टस्थानेषुचोद्भवाना व्याधीनां संख्यां निर्दिशति ।

प्रद्योतः—१२४. तत्र निदानम् ?

अन्यो भिषक्-१२५. उष्णाभितप्तस्य जलप्रवेशः-दूरेक्षणम्-स्वप्नविपर्ययः स्वेदः-रजोधूमनिषेवणम्-छर्दिः-वमनम्-शुक्तारनालांबु-कुलत्थम् माषः- विण्मूत्रनिग्रहः- वातागमनिरोधः- रोदनम्-शोकः-तापः- शिरोऽभिघातः-अतिशीघ्रयानम् ऋतुविपर्ययः- क्लेशाभिघातः-मैथुनम् बाष्पग्रहः- सूक्ष्मनिरीक्षणमित्यादि ।

प्रद्योतः—१२६. भवतु नाम नेत्रशास्त्रविचारः । अद्य कुमारस्य नेत्ररुक् कीदृशी ? तच्चिकित्सा कथमिति निर्धार्य प्रसक्त-कार्यं साधयत ।

भिषजः—१२७. यथाऽऽज्ञापयति प्रभुवर्यः ।

एको भिषक्-१२८. (जनान्तिकम्) कुमारः दृष्टिरोगाकुलितः । दृष्टिपटलानि चत्वारि । प्रथमं तेजो (रक्तम्) जला (रसा) श्रितं बाह्यपटलम् । द्वितीयं पिहिताश्रितम् । तृतीयं मेदआश्रितम् । चतुर्थं अस्थ्याश्रितम् ।

अन्यः-१२९. तत्रापि दृष्टेः द्वितीयमण्डलजनितोऽयं नेत्र-रोगः । यतः- दृष्टिवैक्लव्येन माक्षिकमशकान् केशांश्चाऽयं जालकानवि

---

१२४. राजा तथा निदानं पृच्छति ।

१२५. अन्यो भिषक् मूलोक्तरीत्या निदानानि कथयति ।

१२६. राजा तदा कुमारस्यापतितं नेत्ररोगनिदानं परिभाव्य तत्प्र-तीकाररूपां चिकित्सा कुरुतेति समादिशति ।

१२७. तथेत्युक्त्वा ते परस्परमालोचयन्ति ।

१२८. तत्र एकः- कुमारस्य दृष्टौ रोगः रुक् सम्पन्न इत्युक्त्वा चतुर्णां दृष्टिपटलाना स्वरूपाणि निरूपयति ।

१२९. द्वितीयः कुमारेणानुभूयमानो रोगः द्वितीयपटलभूतमांसा-श्रय इति निर्धारयति । तद्दशाया व्याधिग्रस्तः यथा यथा रोगचिह्नानि प्रदर्श-

पश्यति। दूरस्थरूपाणि समीपस्थानीति-समीपस्थानि दूरस्थानीति मन्यते। यत्नतोऽपि सूचीच्छिद्रं न पश्यति। अयमेव दृष्टिविभ्रमः।

तृतीयः—१३०. अथ चिकित्सा-प्रोक्षणसेचनोत्सादनोद्वर्तनानि। शालिमुद्गयवाहारः। कट्वम्लगुरुतीक्ष्णोष्णमाषनिष्पाव-मैथुनादिवर्जनमित्यादि।

सर्वे-१३१. सर्वं यथायथं साधयामः। (इति चिकित्सां कुर्वन्ति)

भिषजः-१३२. कुमार! जीवदेव! कथमास्ते ते दृष्टिबाधा?

जीवदेवः—१३३. यथास्थितमास्ते।

भिषजः-१३४. किं शास्त्रदृष्टा चिकित्सा वितथा भवति।

प्रद्योतः-१३५. किं भोः! साधिता नेत्रचिकित्सा? किमसौ फलकारिणी? किं कुमारः नीरोगस्संवृत्तः?

भिषजः-१३६. किं वदाम असदनुष्ठितं सर्वं व्यर्थमिव भवति।

---

यति तानि विवृणोति।

१३०. तच्चिकित्साप्रकारान् विशदयति।

१३१. सर्वे यथोक्तां चिकित्सां कुर्वन्ति।

१३२. नेत्रबाधा परिहृता वा न वेति कुमारं पृच्छन्ति भिषजः।

१३३. स नेति ब्रूते।

१३४ 'शास्त्रोक्तचिकित्सा कथं निष्फलाऽभूत्' इत्याश्चर्यचकिता भिषजः।

१३५. चिकित्सा किं सफलेति राजा पृच्छति।

१३६. सा निष्फला अभूदिति ते विमुखास्सन्तो ब्रुवन्ति।

प्रभावती-१३७. न कदापि व्यर्थं भवति। किं तु सञ्जीविनी-हस्तस्पर्शमपेक्षते ।

भिषजः-१३८. अनुभववेद्येयं राज्ञीवाणी । यतः-

अर्शस्स्पृष्टे कुमारे तदनु बलवता पाण्डुरोगेण जुष्टे
यक्ष्मायत्ते विमुग्धे चकितगतिगते कर्णशूलाभितप्ते ।
तत्तच्छास्त्रोपदिष्टा बहुनियमकृतास्साचिकित्साश्च सर्वाः
सञ्जीविन्याः प्रसादात् सपदि सुफलितास्सैव सद्यो गतिर्नः ॥२४

---

१३७. सञ्जीविनीहस्तस्पर्शप्रभावेण सा सफला भवतीति राज्ञी तान् समादधाति ।

१३८. पूर्वानुभवः दृष्टपूर्वप्रभावः इति ते तद्वचनमेवानुमोदन्ते। पूर्वानुभवं स्मरन्ति। अर्श इति-प्रथमं कुमारे अर्शस्स्पृष्टे जीवदेवे गुदरोगग्रस्ते तदनु अनन्तरं बलवता पाण्डुरोगेण जुष्टे-अत्युग्रेण पाण्डुव्याधिना पीडिते यक्ष्मा-यत्ते-राजयक्ष्माक्रान्ते विमुग्धे-तया बाधया मोहं गते चकितगतिगते-भया-भिभूते कर्णशूलाभितप्ते-कर्णरोगेण दुःखिते सति तत्तच्छास्त्रोपदिष्टाः-तत्तद्रो-गाय विहिता बहुनियमकृताः- अत्यन्तजागरूकतया अस्माभिरनेकप्रकारेण प्रयुक्ता. सर्वास्सच्चिकित्साः-समीचीनास्सर्वे व्याधिपरिहारोपाया' सञ्जीविन्याः प्रसादात्-कुमारस्य सतीमण्याः साध्व्याः सञ्जीविन्याः हस्तस्पर्शादेव सपदि तत्क्षणं सुफलिताः-फलदायकाः अभूवन् । अतः सैव न' सद्योगतिः-अद्या-प्यस्माकं सञ्जीविन्येवाश्रयदात्री तद्धस्तस्पर्शेनैव नेत्ररोगोऽपि परिहृतो भवति। तेन अस्माभिः कृता चिकित्सा सार्थिका भवति । वयं यशस्विनो भवाम इति तात्पर्यम् । स्रग्धरावृत्तम् । अत्र जीवदेवेन अनुभूतरोगाणां निर्देशमात्रेण वक्तृश्रोत्रादिजनेषु भयानकरसे समुल्लसिते कीदृशी तावत्तद्र-सस्य व्याप्तिस्तदनुभवितरीति विद्वद्भिरूह्यम् ।

प्रभावती-१३९. कुमार! तामेवाकलय मनसि ते।

जीवदेवः-१४०. प्रिये! सञ्जीविनि! प्राणरक्षिणि! तव हस्तस्पर्शमपेक्षते मे दृष्टिरोगः।

सञ्जीविनी-१४१. (सन्निधाय)

नेत्रे दृष्टौ रोगो जातः कान्तस्याहं कान्ता जाता।
वैद्येभ्योऽलं कार्यं जातं दैवात्कार्यं भूयाज्जातम् ॥२५॥

भो वैद्यपण्डिताः! न विलंबः कार्यः। दृष्टितर्पणवस्तूनि क्षिप्रमाहरत।

भिषजः-१४२. अत्रैवैतानि सर्वाणि।

---

१३९. स्वप्रियां स्मरेति पुत्रमादिशति माता।

१४०. स तां स्मृत्वा तद्द्वारा रोगनिवारणमाकांक्षते।

१४१. सा तत्रायाति।

नेत्रेति—नेत्रे दृष्टौ रोगो जातः- नेत्रगोलान्तर्गतदृष्टिपटले दृष्टिविभ्रमाख्यो रोगः सम्भवति। कान्तस्य-मम प्राणप्रियस्य अहं कान्ता जाता-अहं प्रिया भवामि। अत एव 'कान्ता' हितकरणाय आकृष्टात्र तिष्ठामीति ध्वनिः। वैद्येभ्योऽलं कार्यं जातम्-भिषग्वरैः या या चिकित्सा साध्या सा सा सम्यङ्निर्वर्तिता। अद्य दैवात्कार्यम्-इदानीं देवतानुग्रहेण प्राप्तव्यफलरूपव्यापारः जातं भूयात्-सम्पाद्यो भवति। अत्र प्रार्थनायामाशीर्लिङ्। अनेन सञ्जीविन्या हस्तस्पर्शे सकलरोगपरिहारप्रभावो भवेदपि तस्याः अहम्मतिं विना दैवाश्रयापेक्षा सर्वदा अभूदिति उत्तमनायिकागुणाः व्यङ्ग्यमर्यादया तात्पर्यार्थेन वा बोध्यन्ते ॥ विद्युन्मालावृत्तम् ॥२५॥

• दृष्टितर्पणवस्तूनि-दृष्टिरोगपरिहारकौषधानीत्यर्थः ॥

१४२. तत्रस्थान्येव तानि निर्दिशन्ति वैद्याः।

सञ्जीविनी-१४३. (तानि स्पृष्ट्वा स्वहस्तेनार्पयति । तत्क्षणं जीवदेवो नवदेही निरामयः सुदृष्टिमान् भवति)

प्रद्योतः-१४४. जीवदेव चिरं जीव । मम कुलस्य जीवप्रदो भव ।

प्रभावती—१४५.

चरमोऽयं यदि रोगो मम तनयो निजसुतेन सह पत्न्या ।
सुखवासे निरतश्चेद्वयमपि कृतिनो भवेम लोकेऽस्मिन् ॥२६॥
जात ! त्वं पुनर्जातः। इतः परं त्वं तव जातेन सुखमनुभव ।
जाते ! वधूमणे ! त्वमत्रैव मम जातेन सह निवस ।

---

१४३. जीवदेवस्य नेत्रयोस्तान्यौषधानि स्वहस्तेनैव सञ्जीविनी सन्दधाति । रोगश्च झटिति परिहृतो भवति ।

१४४. तेन प्रहृष्टः पिता सुतमाशीर्भिरनुगृह्णाति ।

१४५. माताप्येवमाशंसते –

चरमेति—अय रोगो यदि चरमो भवति-जीवदेवानुभूतोऽयं व्याधिः कार्तान्तिकवचनेन अन्त्यो भवेच्चेत् मम तनयः-कुमारः जीवदेवः सह पत्न्या-सञ्जीविन्या सह सह निजसुतेन-स्वस्य कुमारेण ज्ञानसूर्येण साकं सुखवासे-सुखेन वासं कर्तुं निरतः आसक्तो भवतीत्याशंसा । तथा चेत् वयमपि तस्य माता पिता अन्ये बान्धवाश्च अस्मिन् लोके-इह कृतिनो भवेम धन्यास्स्याम । अत्र "सह पत्न्या सुखवास" इत्यनेन दम्पत्योः रतिसौभाग्य-मितः परं सार्थकं सफलं भूयादिति "सुतेन सुखवास" इत्यनेन पुत्रस्य लालन-पालनादिव्यापारे हर्षोत्कर्षः भूयादिति च व्यङ्ग्यार्थः सुविशदं स्फुरति । तथा संभोगशृङ्गारोदयः पुनः प्रस्फुरति रसतत्वविदां विदुषाम् । वृत्तं गीतिः। पत्या सह स्वगृहे निवासाय वधूं सञ्जीविनीं चोदयति च प्रभावती ॥२६

सञ्जीविनी-१४६. शीघ्रं मम जातेन सहात्रागत्य तत्र जातेन सह एतद्गृहमधिवसामि। (इत्युक्त्वा आकाशेऽन्तर्दधाति)

सर्वे-१४७. अहह महदद्भुतं जातम्। वयं धन्याः।

भिषजः—१४८. वयं सुकृतिनो जाताः। (ते राज्ञा सम्मानिता गच्छन्ति)

— सर्वे निष्क्रान्ताः —

॥ इति श्री वेङ्कटरमणार्यकृते जीवसञ्जीविनीनाटके चतुर्थोऽङ्कः ॥

---

१४६. तथा करोमीत्युक्त्वा सञ्जीविनी अन्तर्हिता भवति।

१४७. एतदद्भुतकार्याणि दृष्ट्वा सर्वे प्रहृष्टा भवन्ति।

१४८. भिषजो धन्यभावं सूचयित्वा राज्ञा बहुमानिताः गच्छन्ति। अद्भुतरसानुभवानन्तरं शान्तिरसदयोऽत्र सूचितः।

॥ इति तृतीयदृश्यस्य व्याख्या समाप्ता ॥

इति श्रीवेङ्कटरमणार्यविरचिते

जीवसञ्जीविनीनाटके चतुर्थाङ्कस्य स्वेनैव रचिता—

"रसोल्लासिन्याख्या" व्याख्या समाप्ता

---

## ॥ पञ्चमोऽङ्कः ॥

— प्रथमदृश्यम् —

॥ ज्योत्स्नानगरम् ॥

(ततः प्रविशति सञ्जीविनी ज्ञानसूर्यः चेटी च)

ज्ञानसूर्यः-१. अम्ब ! ह्यस्त्वं कुत्र गता । गतकालेषु च त्वं कञ्चित्कालं गृहे नावात्सीः । किमत्र रहस्यम् ।

सञ्जीविनी—२. पुत्र ! एतावत्पर्यन्तं तद्रहस्यमेव । इदानीं प्रकाश्यते । शृणु—

पिता ते रोगेभ्यो विकलहृदयो मामिह यदा
स्मरन्नासीद्वेगादहमतिभराच्चं गतवती ।
हितं स्पर्शं कृत्वा रुगपहरणं साधितवती
ममादृष्टात्सोऽयं सुखितमनसा जीवति चिरम् ॥१॥

---

॥ पञ्चमाङ्के प्रथमदृश्यव्याख्या ॥

१. 'ह्यः' इति जीवदेवनेत्ररोगपरिहाराय सञ्जीविनीनिर्गमनकालं प्रति प्रश्नः । गतकालेषि-त्यनेन तत्पूर्वम् अर्शः-पाण्डु-राजयक्ष्म कर्णशूलापनोदार्थं प्रस्थितान् समयान् प्रति प्रश्नः । रहस्यं गूढोद्देशः तद्वेदितुमपेक्षते बालः ।

२. यदेतावद्गोप्यमासीत् तदिदानी प्रकाशितं भवति । सावधानं शृण्विति माता सञ्जीविनी सुतं ज्ञानसूर्यं बोधयति ।

पितेति—ते पिता-तव जनकः जीवदेवः रोगेभ्यः विकलहृदयस्सन्-अर्शआदिव्याधिभ्यः दुःखेन विकृतमानसः वेगात्-आशु मामिह यदा

त्वमपि भाग्यसम्पन्नः पितरमचिरात्पश्यसि ।

ज्ञानसूर्यः-३. तर्हि प्रस्थापय मां मज्जनकगृहाय ।

सञ्जीविनी-४. अहमपि त्वया सह यास्यामि । पित्रोरनुज्ञां प्रतीक्षे ।

ज्ञानसूर्यः-५. आगच्छ । गच्छाव गुरुजनसमीपम्। (इति मातामहसविधं प्राप्तौ) (तत्रैव चन्द्रिकापि स्थिता)

चन्द्रिका—६. वत्से ! एतावदवधि त्वमुद्विग्नमना इवासीः । अद्य त्वमत्युत्साहवतीव दृश्यसे । वत्स ! मातृसन्निधिस्त्वां मोदयति

---

स्मरन्नासीत्-अत्रस्थां मां मनसाऽऽह्वयत् तदाहमतिरभसात् गतवती-अहं क्षिप्रं तत्सन्निधिं प्रति प्रस्थिता । तत्र गत्वा हितं स्पर्शं कृत्वा-तस्य प्राप्तस्य तत्तद्रोगस्य निवारणाय वैद्यैस्सञ्जीकृतान् औषधविशेषान् मद्धस्तेनैव प्रयुज्य रुगपहरणं साधितवती रोगपरिहारमकार्षम् । सोऽयं-तव पिता ममादृष्टात-मद्भागधेयात् सुखितमनसा-सुखी भूत्वा, शान्तहृदयेन चिरं जीवति-अद्य प्राणिति इतः परं चिरकालं दीर्घायुर्भूत्वा जीविष्यतीत्यभिप्राय' । शिखरिणी-वृत्तम् ॥१॥

तव अचिरात्पितृदर्शनमेव तत्राहष्टमिति भावये ।

३. विदितपितृवृत्तान्तः पुत्रः पितृसमीप प्रति प्रस्थानाय मातरं प्रार्थयते ।

४. त्वया सह मयापि गन्तव्यम् । मातापित्रोरनुज्ञात्रावश्यकी ।

५. तां लभावहे आगच्छेति मात्रा सह मातामहीमातामहसमीपं गच्छति ।

६. अयि कुमारि ! एतावत्पर्यन्तं त्वं चिन्ताक्रान्तेवासीः इदानीं समुत्सुकेव प्रतिभासि कथमिति काकुः । मातृसन्निधानबलेन वृद्धानस्मान्ना-

किम्? कुतो मौनं भजसे? वद वद तव मञ्जुलवाणीश्रवणे मातामहस्तेऽतिकुतूहली।

ज्ञानसूर्यः—७. त्वम्?

चन्द्रिका—८. अहमपि तथा। कथय कथितव्यम्।

ज्ञानसूर्यः-९. कथयति मे माता अद्भुतकथाम्। मातृसान्निध्यान्मे मोहः। पितृसान्निध्याद्बोधः। तत्पितृगृहं गच्छामि।

कलानिधिः—१०. जाते! का सा अद्भुतकथा? श्रवणपारणां चिकीर्षुरहम्।

चन्द्रिका—११. कथय तनये। निभृतं कथय।

---

लक्षयसि। त्यज मौनभावं भज भाषणसरणिं यच्छ्रवणे तव मातामहस्य मम भर्तुः कुतूहलं भवतीति सञ्जीविनीमाता चन्द्रिका दौहित्रं पृच्छति।

७. यदि मातामहः कुतूहली त्वं न कुतूहलिनीति किम्?

८. अहमपि त्वद्भाषणश्रवणे सञ्जातकुतूहला। अतः भाषस्व।

९. पृच्छ तव पुत्रीं सा कथयति विस्मयकरां कथाम्। अहं तु त्वद्वचनेनैव मातृसान्निध्येन मोहपरवशः। तथापि पितृसान्निध्यं गतस्य मम बोधो भवेदिति सोल्लुण्ठनवचनम्। अतः मोहपरिहारद्वारा बोधमुपलब्धुं पितृसमीपं गच्छामीति मातृप्रस्थानावलम्बकतदनुज्ञाप्राप्तये कृतं सचमत्कारवचनम्।

१०. तव पुत्रेण सूचिता विस्मयकरा वार्ता शुश्रूषुरस्मि। तां कथयेति पिता कलानिधिः सुतां सञ्जीविनीं प्रेरयति।

११. निर्भयं निर्लज्जं कथयेति माता चन्द्रिका च सुतामुत्सुकयति।

सञ्जीविनी—१२. मम पत्युर्जातकं किं दृष्टपूर्वम् ?

चन्द्रिका—१३. तत्र पतिरदृष्टशालीति विदितम् । तन्नजाता जातकदर्शनापेक्षा ।

सञ्जीविनी—१४. भगवदनुग्रहेण इतःपरं सोऽदृष्टशाली भविष्यति ।

चन्द्रिका-१५. किमितःपरमिति । एतावत्पर्यन्तम् ?

सञ्जीविनी—१६. दुरदृष्टशाली ।

चन्द्रिका-१७. कथं कथं कथय ।

सञ्जीविनी-१८.

---

१२. पाणिग्रहणात्पूर्वं जीवदेवस्य जातकं युष्माभिर्विचारितं किमिति पितरावनुयुङ्क्ते सुता ।

१३. स भाग्यशालीति श्रुतम् । अतः तज्जातकं न विचारितम् ।

१४. परमेश्वरप्रसादादितःपरं स भाग्यशाली भवेदित्याशंसावाक्येन स एतावत्पर्यन्तं दुरदृष्टशालीति सूचितम् ।

१५. प्रश्नोत्तरेणायमर्थः विशदो भवति ।

१६. दुरदृष्टशालीति प्रतिवचनं तदुत्तरकथाश्रवणे संभ्रमौत्सुक्यं जनयति ।

१७. अतः कथं कथमिति द्विरुक्त्या सम्भ्रमोक्तप्रश्नः ।

१८. अर्श इति—अर्शः-गुदरोगः । पाण्डुः- पाण्डुरोगः । यक्ष्मा-राजयक्ष्मा । कर्णशूलः-कर्णरोगः । अक्षिवेदना-नेत्ररोगः एतैः पञ्चभिर्व्याधिभिः कर्शितः-पीडितः मम पतिः अन्नपानाम्बुवर्जितः- निरस्तबुभुक्षापिपासावृत्तिः अभूत् ॥२॥

अर्शः पाण्डुस्तथा यक्ष्मा कर्णशूलोऽक्षिवेदना ।
एतै रोगैः कर्शितोऽयमन्नपानाम्बुवर्जितः ॥२॥

अतिव्यथया पीडितः ।

चन्द्रिका-१९. तत्परिहारः ?।

सञ्जीविनी-२०. राजवैद्यकौशलेन ।

चन्द्रिका-२१. कथमिदं त्वया ज्ञातम् ?

सञ्जीविनी—२२. तत्र मत्सान्निध्यमासीत् ।

चन्द्रिका—२३. कदा ?

सञ्जीविनी—२४. पञ्चवारम् ।

चन्द्रिका—२५. कुतः ?

सञ्जीविनी—२६. औषधस्पर्शाय ।

---

अतिव्यथया पीडितः बहूनि दुःखानि अन्वभूत्-इति जीवदेवस्य रोगवृत्तान्तं कथयति सञ्जीविनी ।

१९. तेषां रोगाणां परिहारः कथमभूदिति पृच्छति तन्माता चन्द्रिका ।

२०. स्वहस्तप्रभावेण कृतेऽपि परिहारे राजवैद्यकौशलेनेत्युक्तिः सञ्जीविन्याः स्वाहङ्कारखण्डनं विनयादिसौगुण्यं सत्कुलप्रभवादिसौजन्यं परगुणप्रशंसादिसौहार्दं च सूचयति ।

२१. देशान्तरे विद्यमानस्य जीवदेवस्य रोगप्राप्तेः तत्परिहारस्य च ज्ञानं कथमभवदिति प्रश्नः ।

२२. तत्राहं गता । प्रत्यक्षतो मया सर्वं दृष्टमित्युत्तरम् ।

२३. तत्र त्वं कदा गतवतीति पुनः प्रश्नः ।

२४. पञ्चकृत्व इत्युत्तरम् ।

२५. प्रस्थानकारणं पृच्छति चन्द्रिका ।

२६. मत्करस्पर्शेन औषधप्रयोगायेति वदति सञ्जीविनी ।

चन्द्रिका—२७. किं निमित्तं तत्स्पर्शः ?

सञ्जीविनी—२८. रोगपरिहारार्थम् ।

कलानिधिः २९. तत्परिहारः राजवैद्यकौशल्येनेत्युक्तं किल ।

सञ्जीविनी ३०. तथैव । तथापि मम हस्तस्पर्शः निमित्तको भवति ।

कलानिधिः-३१. कथम् ?

सञ्जीविनी ३२. तथास्ति देववरः ।

कलानिधिः-३३. केन यानेन त्वया तत्राऽगम्यत ?

सञ्जीविनी-३४ व्योमयानेन । अथवा स्वेच्छायानेन ।

कलानिधिः-३५. कथं ते तादृशी शक्तिः ?

---

२७. तव हस्तस्पर्शः औषधप्रयोगे कुतः ?

२८. तत्कारणादेव रोगपरिहारः ।

२९. तस्य रोगपरिहारः राजवैद्यकौशल्येनेति पूर्वं व्याहृतम् । तव हस्तस्पर्शादित्यद्य वदसि । तव वचने पूर्वापरविरोधो दृश्यते । कथं तत्परिहार इत्याकूतम् ।

३०. पूर्वं यदुक्तं तत्सत्यम् । अद्य यदुक्तं तच्च सत्यम् । प्रथमव्यापारस्य द्वितीयो निमित्तको भवति ।

३१. तत्प्रकार एव श्रोतव्यः ।

३२. तथा भवितव्यमिति जीवदेवस्य देवतानुग्रहः ।

३३. कथं तत्र गताऽऽसीरिति प्रश्नान्तरम् ।

३४. व्योमयानेनेति निर्देशः । अथवेत्यनेन तत्र अरुचिं पश्यन्ती स्वेच्छयेत्युत्तरं दत्तवती ।

३५. व्योमयानेन वा स्वेच्छया वा तत्र गन्तुं मानवसामान्यायाः तव शक्तिः कथमागतेति प्राश्निकस्याकूतम् ।

सञ्जीविनी-३६. वाणीब्रह्मप्रसादात् ।

कलानिधिः-३७. तत्प्रसादः कदाऽभूत् ?

सञ्जीविनी-३८. यदाहं विद्यार्थिनी सङ्गीतशालायाम् ।

कलानिधिः ३९. तदा द्वौ वृद्धब्राह्मणावागतौ । ताभ्यां त्वं परीक्षिताऽऽसीरिति शृणुमः ।

सञ्जीविनी ४०. तावेव वाणीब्रह्माणौ । तदाशीर्बलं मत्प्राणप्रियस्य प्राणरक्षणाय प्राभूत् । यतः—

क्रियासिद्धिर्लोके भवति हि सदा भक्तिवशत-
स्सुरेष्वासक्तं तां जनयति विशुद्धं निजमनः ।
मनश्शुद्धिर्सा(?)व्या स्थिरमतिबलात्संनियमत-
स्तथासीन्मे भाग्यादिति मम करे सिद्धिरतुला ॥३॥

---

३६. वाणीब्रह्मणोरनुग्रहात् तादृशशक्तिर्भवतीति तत्वकथनम् ।

३७. तादृशानुग्रहः कदा प्राप्त इत्यनुयोगः ।

३८ स्वस्याः विद्याभ्यासकाले इत्यावेदनम् ।

३९ वृद्धब्राह्मणीब्राह्मणाभ्यां विद्याभ्यासदशायां सञ्जीविनी परीक्षितेति यच्छ्रुतं तदवबोधयति कलानिधिः ।

४०. तौ वृद्धब्राह्मणौ वाणीब्रह्माणौ ताभ्यां मत्प्राणप्रियस्य रक्षणाय तादृशवरो मेऽनुगृहीत इति व्याकरोति । यथा —

क्रियेति—लोके-जगति क्रियासिद्धिः- प्रियप्राणरक्षणसदृशकार्यप्रभावः । सदा भक्तिवशतः भवति-यस्य देवे निरन्तरभक्तिः तस्य सा भवतीत्यर्थः । अनेन सञ्जीविन्या वाणीब्रह्मणोर्विषये सदा भक्तिरासीदिति व्यज्यते । सुरेषु देवेषु आसक्तं-निवेशित विशुद्धं निष्कल्मषं निजमनः-स्वस्य चित्तं तां परां भक्तिं जनयति-जननाय कारणं भवति । मनश्शुद्धिः-चित्तशुद्धिश्च स्थिरमतिबलात्-दृढसङ्कल्पात् सन्नियमतः-शास्त्रोक्तकर्मानुष्ठानेन

उभौ-४१. धन्यासि जाते ! अनुरूपसहधर्मिणी त्वं जीवदेवस्य ।

सञ्जीविनी-४२. तमनुप्राप्तुं पित्रोरनुज्ञां प्रतिपालयामि ।

उभौ-४३. भार्यायाः पतिगृहवास एव श्रेयान् । यतः ।

---

च भाव्या-भवितुं भावयितुं वा योग्या। अनेन क्रियासिद्धेः कारणं निरन्तर-भक्तिः-तस्याः कारणं मनश्शुद्धिः-तस्याः कारणं सत्कर्मानुष्ठानमिति कारण-परम्परोक्त्याऽत्र कारणमालालङ्कारः द्योतितः। भाग्यात्-अदृष्टबलात् मे तथाऽऽसीदिति-मम एवं समपद्यतेति। मम करे-मे हस्ते अतुला सिद्धिर्भवति-इतर-जनासाधारणक्रियासिद्धिः देवतानुग्रहादायातेति वस्तुतत्वबोधः प्रकाशित । शिखरिणीवृत्तम् ॥३॥

अत्र रसविचारः- "शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्साद्-भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ।"

एतेषा स्थायिभावाः-"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगु-प्साविस्मयश्चेति स्थायिभावाः प्रकीर्तिताः।" इति काव्यप्रकाशे मम्मटभट्टेन अष्टावेव रसा अङ्गीकृताः । तथापि "रसो वै सः । "रसग्ँ ह्येवाऽऽयं लब्ध्वाऽऽनन्दी भवति" इत्यादिवेदान्तवाक्यप्रमाणेन शान्तिरप्यन्यो रसोऽस्ति तस्य शम एव स्थायिभावः इति नवरसाः कैश्चिदालङ्कारिकैरङ्गीकृताः। प्रकृते अस्मिन् श्लोके शान्तिरसस्य सन्नियमपदेन यः शमः द्योत्यते । स एव स्थायी । तस्य श्लोके प्रतिपादिताः कारणपरंपराः विभावाः भवन्ति । क्रियासिद्धिः अनुभावस्थाने भवति। उत्तरवाक्ये "धन्यासि जाते" इत्यनेनाभिव्यंजित आनन्दातिशय एव व्यभिचारिभावो भवितुमर्हतीति बोध्यम् ।

४१. चन्द्रिका कलानिधिश्च जीवदेवस्य सञ्जीविनी अनुरूपा भार्येति ता श्लाघेते ।

४२. पतिसकाशानुगमाय पित्रोरनुज्ञां प्रार्थयते ।

४३. भार्यायाः भर्तृगृहे वास एव श्रेयस्करः । यतः—

कन्या जाता कलयति शुचं गोत्रसम्बन्धहाना-
दन्यं गोत्रं प्रविशति बलात्पालिता सा विवाहे ।
श्रेयान्वासो निजपतिगृहे दूषिता भूषिता वा
मात्रावासाद्बहुलसमयाच्छङ्किता स्यात्कदाचित् ॥४॥

तस्मात्सहर्षं वयमप्यनुयास्यामस्त्वां जामातृक्षेमदर्शनाय ।

सञ्जीविनी-४४. प्रियमिदं मे । श्वः प्रभाते प्रयाणोद्यमः कृपया क्रियताम् ।

उभौ-४५. तथास्तु ।

(प्रभाते सर्वे प्रयाणेन तेजोवतीनगरं प्राप्ताः । प्रत्युद्गताः प्रद्योतस्य प्रासादं प्रविष्टाश्च । तत्र-)

प्रद्योतः-४६ (राजानं कलानिधिमाश्लिष्य) चिराज्जातं मे भवद्दर्शनम्

---

कन्येति—जाता कन्या-स्त्रीशिशुर्जननमात्रात् शुचं कलयति दुःखं जनयति 'दारिका हृदयदारिका पितुः' इति लोकोक्तिः किल । आविवाहात्पालिता-विवाहकालपर्यन्तं पितृगृहे रक्षिता सा विवाहे अष्टवर्षादूर्ध्वं गोत्रहानात् पितृगोत्रपरित्यागपूर्वकम् अन्यं गोत्रं प्रविशति-भर्तुर्गोत्रं भजते । तस्याः निजपतिगृहे वास श्रेयान्-तस्मान्नवोढायाः स्वभर्तृगृहे निवासः श्रेयस्करः । तत्र सा दूषिता दोषयुक्ता भूषिता वा गुणयुक्ता वा स्यात् तस्यास्तत्रैव निवासः श्रेयान् योग्य । अन्यथा बहुलसमयात् दीर्घकालपर्यन्तं मात्रावासात् मात्रा सह निवासात्-मातृगृहे निवासेनेति यावत् । कदाचित्-प्रायशः सा शङ्किता स्यात्-असाध्वीत्वेन परिभाविता भवेत् । मन्दाक्रान्तावृत्तम् ॥४॥

४४. उत्तरदिने प्रयाणायानुकूल्यं रचयितव्यमिति प्रार्थना ।

४५. तथा क्रियते इति पित्रोरङ्गीकारः । तथैव प्रस्थानम् ।

४६. समानयोः चिरकालाद्दर्शनावसरे परस्पराश्लेषः साम्प्रदायिकः । अतः प्रद्योतराजः कलानिधिराजमालिङ्ग्य तद्दर्शने कृतार्थतां प्रकाशयति ।

कलानिधिः-४७. तथैव सखे मम हृदयम् ।

प्रभावती-४८. (चन्द्रिकामालिङ्ग्य) राज्ञि ! भवत्या दर्शनेन हृतकष्टा बहुहृष्टाऽहम् ।

चन्द्रिका-४९. त्वमेव धन्या । त्वत्सम्बन्धाद्वयमपि धन्याः।

सञ्जीविनी-५०. श्वश्रूजनं सश्रद्धं प्रणमतीयं वधूः ।

प्रभावती ५१. दीर्घसुमङ्गला भव ! कल्याणमस्तु ते ।

ज्ञानसूर्यः-५२. पितामहीं पितामहं च प्रणमाम्यहं प्रियपौत्रः ।

उभौ ५३. जात ! दीर्घायुष्मान् भव । सकलविद्यापारङ्गतो भव ।

ज्ञानसूर्यः-५४. ज्योत्स्नानगरे यावत्साध्यं तावद्विद्यापारीणोऽस्मि ।

उभौ-५५. महत्प्रमोदस्थानम् । अत्रापि समुचितविद्यामर्जय ।

---

४७. कलानिधिश्च प्रद्योतराजदर्शनेन तथैव कृतकृत्यतां प्रकाशयति ।

४८. प्रभावती चन्द्रिकामाश्लिष्य तद्दर्शनेन सञ्जात हर्ष प्रदर्शयति ।

४९. चन्द्रिकापि प्रभावत्याः धन्यत्वादानर्पयति ।

५०. सञ्जीविनी श्वश्रूं प्रणमति ।

५१. प्रभावती तामाशिषानुगृह्णति ।

५२. प्रभावतीं प्रद्योत च नमस्करोति पौत्रो ज्ञानसूर्यः ।

५३. सकलविद्यापारङ्गतो भवेति तयोराशिषो भाजनं भवति बालकः ।

५४. ज्योत्स्नानगरे स्वस्य विद्याभ्यासः प्रचलित इति कथयति ।

५५. एतद्वार्तया प्रमुदितौ तावुभौ तेजोवतीनगरेऽपि तस्य प्रौढविद्याभ्यासः प्रचलिष्यतीति सम्भावयतः ।

ज्ञानसूर्यः-५६. भवतु तथा भवदाशिषा ।

जीवदेवः ५७. सेवकः ! कुमारमानय ।

सेवकः-५८. (गत्वा कुमारेण प्रविश्य) देव ! सन्निहितोऽयं कुमारः ।

सञ्जीविनी-५९. प्रणमाम्यहं सञ्जीविनी ।

जीवदेवः-६०. भद्रे ! भद्रमस्तु ते ।

ज्ञानसूर्यः-६१. तव पुत्रोऽहं साष्टाङ्गमभिवादये ।

जीवदेवः-६२ साष्टाङ्गयोगसिद्धिर्भवतु ते ।

(ततस्तौ वृद्धान् प्रणमतः)

कलानिधिः-६३. (जामातुर्हस्तं निपीड्य)

पश्यामस्त्वां प्रमोदात्परिगलितरुजं क्षेमदेहं सुशान्तं
नासत्सान्निध्यमासीत्समुचितसमये तद्वयं क्षम्यवृत्ताः ।
एतत्संसारचक्रं भ्रमति बहुतरं द्वन्द्वभूयिष्ठनेमि
प्रायो भुङ्क्तेऽत्र दुःखं सुखमपि च जनो दिष्टकर्मार्जितं यत् ॥५॥

---

५६. तदाशिषमङ्गीकरोति ज्ञानसूर्यः ।

५७. राजा जीवदेवानयनाय सेवकमाज्ञापयति ।

५८. सेवकस्तथा करोति-तदागमनमावेदयति च ।

५९. आगतं पतिं दृष्ट्वा सती सञ्जीविनी प्रणमति ।

६०. पतिस्सतीमाशिषानुगृह्णाति ।

६१. ज्ञानसूर्यः पित्रे प्रणाममाचरति ।

६२. तस्मै यथोचितामाशिषमनुगृह्णाति पिता ।

६३. कलानिधिः जीवदेवस्य हस्तं स्वहस्तेन निपीड्य-

पश्याम इति-परिगलितरुजं - परिगलिता रुक् यस्मात्तं-नीरुजमिति यावत् । अथवा-परिगलिता-चिकित्सया निस्सारिता-अत एव विगता रुक्

ईश्वरानुग्रहेण भवतु ते भव्यसन्ततिः ।

जीवदेवः-६४. अनुगृहीतोऽस्मि ।

प्रद्योतः-६५. भोः कलानिधे ! वयमनुभूतराज्यसम्पदः । वार्धक्येऽद्य स्थिताः । तदिमां राज्यधुरां पुत्रायत्तां कृत्वा मत्क्षत्रिय-सम्प्रदायानुगत्या वानप्रस्थाश्रमगता भवामेति ममोद्देशः । कोऽत्र तवाऽऽशयः ?

---

यस्मात्त क्षेमदेहं-क्षेमेण युक्तं शरीरं यस्य तम् सुशान्तम्-अत एव शान्तमानस त्वां पश्यामः-त्वां वीक्षामहे-अत्र बहुवचनप्रयोगः गौरवार्थकः । समुचितसमये-नव रोगप्राप्तिकाले अस्मत्सान्निध्यं नासीत्-वयं नात्रागताः नतु-तस्मात् वय क्षम्यवृत्ताः-अस्मद्व्यापारः क्षम्यः-अस्मान् क्षमस्वेति तात्पर्यम् । द्वन्द्व-भूयिष्ठनेमि स्त्रीपुरुषरूपया चक्रस्य बाह्यवर्तुलपट्टिकया सङ्कलितम् एतत्संसारचक्रं-सर्वैरनुभूयमानं जननमरणात्मकं संसरणशीलं चक्रम्, बहुतरं-बहुधा-बहुवारं वा भ्रमति-सञ्चरति । दिष्टकर्मार्जितं यत्-यत्फलं दिष्टेन दैवेन कर्मभिः-स्वकृतपुण्यपापरूपकर्मभिः आर्जितं-सम्पादितं दुःखं सुखमपि च-दुःखकरं सुखहेतुकं च तत्फलम्, अत्र जनः प्रायो भुङ्क्ते-सामान्येनात्र प्राणी अनुभवत्येव । अत्र दिष्टं च कर्माणि चेति द्वन्द्वसमास । दिष्टशब्दार्थ' दैवमिति । तच्च पूर्वजन्मकृतकर्मैव नान्यत् । तथा चोक्तम्-"पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते" इति । एतत्संसारतत्वविमर्शः अचिरादनुभूतानेक-रोगस्य जामातुर्मनस्समाधानार्थं कृत इत्यवधेयम् । अत्र रूपकालङ्कारस्सुस्पष्टः । शान्तिरसाङ्कुरप्रवृद्धे जलसेचनवत् उद्दीपनविभाववस्तुप्रदर्शन ज्ञेयम् । स्रग्धरावृत्तम् ॥९॥

एवं तस्मै भव्यसन्ततिमाशंसते श्वशुरः ।

६४. कृतज्ञतां सूचयति जामाता ।

६५. राजा प्रद्योतः कलानिधिराजाय स्वस्य प्राप्तां वार्द्धकदशामावेद्य - राज्यभारं पुत्रायत्तं कृत्वा कुलक्रमागतवानप्रस्थाश्रमस्वीकाराय स्वसङ्कल्पं च सूचयित्वा तस्याभिप्रायं पृच्छति ।

कलानिधिः-६६. शास्त्रविहितं कुलक्रमागतं सम्प्रदायानुगतं तवाभिप्रायं को वा निषिध्येत् । यतः—

बाल्यं यौवनमार्याणामैहिकार्थस्य साधिके ।
वार्द्धक्यमन्तिमावस्था पारत्रिकपरायणे ॥६॥

इति हि शास्त्रम् ।

दिलीपरघुमुख्या ये सूर्यान्वयसमुद्भवाः ।
स्वराज्यं पुत्रसात्कृत्वा वानप्रस्थाश्रमे स्थिताः ॥७॥

इति हि कुलसम्प्रदायः ।

प्रद्योतः-६७. भवतु तथा । साधयावाद्य नित्यकर्मानुष्ठानाय ।

(इति निष्क्रान्तौ)

प्रभावती-६८. (शान्तिप्रभां दृष्ट्वा) केयं बालिका ?

---

६६. तस्य तथा सङ्कल्पः समुचितः शास्त्रानुगृहीतः सम्प्रदायागतमार्ग एवेति स्वाभिप्रायं द्योतयति ।

बाल्यमिति—आर्याणाम्- आर्यकुलप्रसूनानां बाल्यं यौवनं चेति द्वे अवस्थे ऐहिकार्थस्य साधिके-ऐहिकव्यवहारयोग्ये भवतः । वार्द्धक्यमन्तिमावस्थेति द्वे दशे पारत्रिकपरायणे-परलोकसुखावाप्तिसाधिके भवतः इति शास्त्रमर्यादा । श्लोकवृत्तम् ॥६॥

दिलीपेति—दिलीपरघुमुख्याः सूर्यान्वयसमुद्भवाः ये-दिलीपः-रघुः-इत्यादिरघुवंशप्रभवाः राजानः स्वराज्यं पुत्रसात् कृत्वा-स्वेन स्वेनानुभूतं राज्यं स्वस्वपुत्रे निक्षिप्य वानप्रस्थाश्रमे स्थिताः- वानप्रस्थाश्रमरता अभूवन् । इति सम्प्रदायश्चोदाहृतः इदमपि श्लोकवृत्तम् ॥७॥

६७. तस्याभिमतं विदित्वा राजा प्रद्योतः तदानीं कर्तव्यसन्ध्यादिनित्यकर्मानुष्ठानाय सपरिवारोऽन्तर्गच्छति ।

६८. चन्द्रिकाकलानिधिपुत्रः-सुधांशुः । सः प्रभावतीप्रद्योतपुत्रीं सुप्रभां परिणिनाय । तयोर्दुहिता शान्तिप्रभा । तां दृष्ट्वा बहुकालादपरिचितत्वात् केयं बालेति पृच्छति ।

चन्द्रिका-६९. तव दौहित्री ।

प्रभावती ७०. किमियं मद्दुहितुस्सुप्रभायाः पुत्री ?

चन्द्रिका ७१. आम् । मम पुत्रस्य सुधांशोर्वत्सला शान्तिप्रभा ।

प्रभावती ७२ इय ज्ञानसूर्यस्य— (इत्यर्धोक्ते)

चन्द्रिका ७३. वधूर्भवितव्या ।

सञ्जीविनी-७४. तदेव मे रोचते ।

सुप्रभा—७५ अयमेव ममाभिप्रायः ।

सञ्जीविनी—७६. स्त्रीजनाभिप्रायेण किम् ?

---

६९. तव दुहितु पुत्री दौहित्रीति चन्द्रिका ता स्मारयति ।

७०. किञ्चित्स्मृत्वा किं मद्दुहितुः सुप्रभायाः पुत्रीत्यनुयुङ्क्ते ।

७१. तथेत्युक्त्वा स्वपुत्रस्य सुधांशोर्वत्सला शान्तिप्रभा इति स्मारयति । अत्र सुधाशोर्वत्सला इत्यनेन शा न्तिप्रभा स्वजनकस्य सुधांशोरतिप्रियेति सूच्यते ।

७२. ज्ञानसूर्यस्येति अर्धोक्ति -वधूर्भवितुमर्हतीति स्वाभिप्रायं चन्द्रिकाभिप्रायः संवदति वा न वेति विज्ञानाय ।

७३. वधूर्भवितव्येति चन्द्रिका तद्वाक्यं पूरयति । अनेन तदभिप्रायः स्वस्याप्यभीष्ट इति प्रदर्शितम् ।

७४. भविष्या श्वश्रूस्सञ्जीविनी तां शान्तिप्रभां स्ववधूत्वेन परिग्रहणाय सम्मतिं सूचयति ।

७५. शान्तिप्रभायाः माता सुप्रभा तं सम्बन्धमेवाकाङ्क्षति ।

७६. वयं सर्वे स्त्रीजनाः एवमभिप्रेमः तावता किम् ? । एतादृशविवाहसम्बन्धव्यवस्थायाः पुंसामभिप्रायो मुख्यः । तेऽपि वयं यथा तथा अभिप्रयन्ति वा न वेति मम संशयः इत्याकूतम्। अनेनेय अनुकूलनायकायत्तेति गम्यते ।

सुप्रभा—७७. पुंसः स्त्रीजनानुरोधिनः ।

सञ्जीविनी—७८. यदि स्त्रियः पुरुषमतानुवर्तिन्यः ।

सुप्रभा—७९. तथा वयम् ।

सञ्जीविनी—८०. तर्हि तवेष्टार्थसिद्धिर्भवति ।

चन्द्रिका—८१- सर्वानुमतमिदम् ।

प्रभावती—८२. तदेतत्सम्पादनीयम् । प्रथमं तावत्प्रचलतु विद्याभ्यासः ज्ञानसूर्यस्य - शान्तिप्रभायाश्च । आगच्छ, इदानीं स्नानपूजादिकं साधयामः

— इति सर्वे निष्क्रान्ताः —

---

७७. पुसस्स्त्रीजनानुरोधिनः- इत्यनेनेयं स्वाधीनपतिकेति भाव्यते ।

७८. स्त्रियः कुशला अपि विदुष्योऽपि दक्षा अपि पुरुषमते स्थिता एव शोभन्ते इति पतिव्रतात्वमुपदिशति ।

७९. तथा वयमित्यनेन अहं वा मे माता वा न कदापि पतिमतोल्लङ्घिनीति प्रतिजानीते ।

८०. यदि गृहे पत्नीपत्योरभिप्रायः एकरूपः तदा सर्वार्थसिद्धिर्भवति । प्रकृते तव वचनेन तव अभिमतं सिद्धिप्रदं भवतीति मन्ये ।

८१ न केवलमिदं ममाभिमतं, परं सर्वानुमतम् ।

८२. तर्हि तत्सिद्धं सम्पादयामस्समुचितसमये । अयं तु शान्तिप्रभायाः ज्ञानसूर्यस्यैव विद्याभ्यासकालः । प्रचलतु विद्याभ्यासः कञ्चित्कालम् । अनन्तरमस्मिन् विषये प्रयत्नो भवत्विति सञ्जीविनीवचनमुररीकृत्य देवतापूजादिकार्यनिर्वर्तनाय सर्वा अन्तः प्रविशन्ति ॥

॥ इति प्रथमदृश्यव्याख्या ॥

## ॥ द्वितीयदृश्यम् ॥

— तेजोवतीनगरम् —

नेपथ्ये—१.

उच्चस्थो जीवसूर्योऽधिगतवसुमतीभारनिर्वाहको यः
प्रद्योतात्सुप्रभावात्करकलितजगद्भासकः शुद्धमूर्तिः ।
सत्त्वानि स्वस्वकर्मस्वनुगतकरणान्याशु संन्धाय सौम्य-
स्सन्मार्गे चारशीलो जगति विजयते सत्यधर्मेक्षणेन ॥८॥

---

१. स्वपित्रधिगतराज्यधुरंधरस्य जीवदेवस्य प्रभावम् एव वर्णयन्ति जनाः ।

उच्चस्थ इति— यः जीवसूर्य सुप्रभावात् प्रद्योतात् अधिगत-वसुमतीभारनिर्वाहकः-महाप्रभावशालिनः प्रद्योतराजस्य सकाशात् लब्ध-राज्यस्य शासने अत्यन्तसमर्थः, यः करकलितजगद्भासक. करै. प्रजाभि-र्दत्तै. कररूपधनैः कलितः-निर्वर्तितः जगद्भासकः-जनानां प्रीतिदायककार्य-जनितप्रभावः यस्य सः-अत्र भासृधातो· भावे घञि - भास·. ततः स्वार्थे कप्रत्यय. । य उच्चस्थः- नूतनतया उन्नतस्थाने सिंहासने प्रतिष्ठा-पित· तादृशो जीवसूर्य -सूर्यसदृशः जीवदेव शुद्धमूर्तिस्सन् - निष्कपट-स्वभावस्सन् सत्वानि-प्राणिनः प्रजा इत्यर्थः । स्वस्वकर्मसु-तत्तद्योग्यवृत्तिषु अनुगतकरणानि-पारंपर्यादागतसाधनानि आशु सन्धाय-सपदि विधाय सौम्यः सर्वेषामिष्टार्थसाधने सुमुखो भूत्वा सन्मार्गे चारशीलः-विहितपथ-मनुसरन् सत्यधर्मेक्षणेन-सत्यरक्षणं-धर्मपरिपालनमिति यत्-तदवेक्षमाणस्सन् जगति विजयते-लोके प्रसिद्धो भवतीति प्रकरणार्थः । पूर्णोपमागर्भित-

(ततः प्रविशति जीवदेवः सञ्जीविन्या महिष्या सह)

जीवदेवः—२. प्रिये ! कथं ते सौख्यं कलयामि ।

सञ्जीविनी–३. प्रिय !

असुखं कलयति सुसुखं कुमतिर्हा विषयरागबद्धस्सन् ।
यदि निजसुखपरता स्याद्दुःखं दूरे भवेत्तदा पुंसाम् ॥९॥

---

रूपकार्थस्तु—प्रद्योतात् सुप्रभावात् - प्रकाशमानमहिम्ना अधिगतवसुमती-भारनिर्वाहकः- क्षोणीजातप्राणिवर्गसस्यप्रभृतीनामभिवृद्धिकार्ये दक्षः- सूर्योदये सति सर्वप्राणिनां बुद्धिर्विकसति, सर्वे स्वस्वकार्येषु तत्परा भवन्ति, सस्यादयः समृद्धिं यान्तीति तात्पर्यम् । "हिरण्ययेन सविता रथेन आ देवो याति" इति श्रुतिः । उच्चस्थ'-उच्चस्थानं गत -खमध्यस्थितिमाप्त इत्यर्थ. । करकलितजगद्भासकः-स्वकिरणैस्सम्पादितजगत्प्रकाशकः । "विश्वमाभासि रोचनम्" इति श्रुतिः । अनुगतकरणानि सत्वानि स्वस्वकर्मसु आशु सन्धाय सृष्टान् सर्वान् स्वस्वव्यापारपरान् कृत्वा - "निवेशयन् अमृतं मर्त्यं च" इति श्रुतिः । सौम्यः-प्रसन्न.-सोमाय-चन्द्राय हितस्सन् इति वा "इतस्सिक्तं सूर्यगतं । चन्द्रमसे रसं कृधि" इति श्रुतिः । "सलिलमये शशिनि विमूर्च्छिता रवेर्दीधितयः" इति वराहमिहिरः । सन्मार्गे-आकाशे चारशीलः-सञ्चरणस्वभावः "आसत्येन रजसा वर्तमानः" इति श्रुतिः । सत्यधर्मेक्षणेन-सत्यं धर्मं च पालयन् "मिनीमसि द्यवि द्यवि" "यत्किंचेद" मिति च श्रुतिः । जगति-विजयते उष्णप्रकाशदानेन लोकेषु सर्वोत्कृष्टो भवतीति सङ्ग्रहार्थः । यथा सूर्यः-तथा जीवदेवः प्रसिद्धो भवतीति भावार्थः । स्रग्धरावृत्तम् ॥८॥

२. स्वप्रियायामतिशयितानुरागेण तस्यास्सुखं कलयितुमिच्छति ।

३. प्रियेति सम्बोधनं वक्ष्यमाणार्थविमर्शायावधानाकर्षणार्थम् । वैषयिकसुखं न सुखमिति सम्बोधयति पतिम् । यथा—

अन्नपानादिना वस्त्रभूषादिना गन्धमाल्यादिना गीतवाद्यादिना।
हासतोषादिना वासशय्यादिना नैजरागादिना सौख्यमापद्यते ॥१०

किमिदमेव सौख्यं कलयसि ?

जीवदेवः—

कलयामि सर्वं कलहसयाने मम भावमेवं सुलभेन विद्धि ।
पतिभावनेन स्वहितं हितं मे प्रतिबोधय त्वं तव सेवकं माम् ॥११॥

---

असुखमिति - कुमति -बुद्धिहीनः विषयानुरागबद्धस्सन्-स्रक्चन्दन-वनितादिविषयपाशबद्धस्सन् असुखं मुसुखं कलयति-दुःखं सुखमिव भावयति। सुखाद्यं दुःखपरिणामि यत् तन्नित्यसुखमिति भ्रान्त्या जानाति। हेति निपातः अज्ञजनेष्वनुतापं सूचयति । यदि निजसुखपरता स्यात्-शाश्वतसुखसम्पादने यदीच्छा जायते तदा दुःखं दूरे भवेत्पुसः-तदा मनुष्यस्य दुःखं नश्यतीत्यर्थः। वृत्तं गीतिः ॥९॥

अन्नेति—सौख्यमन्नपानादिना-मृष्टान्नभोजनेन - अमृतपानेन वस्त्र-भूषादिना - पीताबरादिधारणेन हारकेयूरादिभूषणेन गन्धमाल्यादिना-हरिचन्दनादिलेपनेन-जातीमल्लिकादिपुष्पधारणेन गीतवाद्यादिना-सङ्गीतेन-अभिनयादिना, हासतोषादिना-हास्यप्रधानवचनेन नाटकाद्यभिनयदर्शन-जनितसन्तोषादिना वासशय्यादिना - हर्म्यप्रासादादिषु वासेन-स्त्रिया सह सम्भोगादिना नैजरागादिना निर्व्याजप्रेमप्रदर्शनादिना आपद्यते प्राप्यते किल। प्राप्यतां नाम किमिदं सर्वं वस्तुतः तात्विकं सुखं सम्पादयति ? नेतिभावः ॥१०॥

विषयलोलुपो जीवदेवः प्रतिवदति—

कलयामीति—हे कलहंसयाने-हंसगमने प्रिये ! सर्व-पूर्वोक्तं सौख्यं तनोतीत्यहं भावये । इति मम भावं मम हृद्गताभिप्राय सुलभेन विद्धि-त्वया वेदितुमेवं शक्यम्। त्वं पतिभावनेन-अहं तव पतिरिति गौरवेण स्वहितं-

सञ्जीविनी-४. (स्वगतम्) जटिलानुरागो विदुषामपि बुद्धिमन्धयति । (प्रकाशम्) मैवं वदत्वार्यः । अहमेव तव सेविका । किं तवाकूतम् ? विशदय मदनुग्रहाय ।

जीवदेवः-५. प्रिये । एतावत्पर्यन्तं त्वं पत्युर्दौर्भाग्यात् रतिसुखविमुखासि । आवामिदानीं यौवनपदभूषितौ । तथापि राज्यपरिपालननियुक्तौ । कथमनयोस्सुपथेन सञ्चारः ?

सञ्जीविनी ६. प्रिय आवां प्राप्तपुत्रौ । रतिसुखे मास्तु ते प्रलोभः । प्रजापालनासक्तिरेव प्रधाना भवतु ।

---

तव यद्धितं-मे हित-ममापि यद्धितं तदुद्दिश्य तव सेवकं मा प्रतिबोधय-तव सेवापरस्य मम उपदेशं कुर्विति ललितनायक इव दीन दीन प्रलपति । इद पद्यं कोकरतावृत्तनिबद्धम् तल्लक्षणम्- "सयसैर्भवेत्कोकरता ययुक्त." इति । अत्र नायके पुनः विभावानुभावव्यभिचारिभावैः पुष्टःरत्याख्यस्थायिभावः संभोगशृंगारात्मना परिणमते । नायिकायां तु शांतिरसस्य स्थायिभाव एव भवतीति ध्वन्यते । स ध्वनिः उत्तरवाक्येन अभिव्यज्यते ।।११।।

४. इदमाकर्ण्य प्रतिभाशालिनी सञ्जीविनी स्वयमेवं चिन्तयति-जटिलानुराग-प्रबलवैषयिकानुरागगतिः विद्वांसमपि अन्धयति-अन्धं करोति । मैवं वदत्वार्यः-सेवक इति वचनमनुचितम् । अहमेव तव सेविका । सती या सा पतिं सेवते इति लोकविदितं खलु । तवाशयं स्पष्टं वदेति प्रार्थना ।

५. एतावदवधि अहं रोगग्रस्तोऽभवम् । अतः पत्या सह तव भोगावकाशो नासीत् । आवयोरिदानी यौवनदशा । अतस्सम्भोगकालः । तथाप्यद्यैव राज्यशासनभारप्राप्तिः । उभयमपि कार्यं कथं साधयितव्यमिति चिन्ता ।

६. आवयोस्सम्भोगः पूर्वमेव सञ्जातः । जातश्च पुत्रमणिः । अतः इतः परं मा भूत्ते सदा भोगलालसा । प्रजापालनरीतिमेवानुचिन्तय ।

जीवदेवः ७. अयि सत्यशीले ! तव सहायेन प्रजापालनं सुलभेन अनन्यसाधारणं भवत्येव । त्वं गृहिणी खलु ।

सञ्जीविनी-८. अतो गृहिणीधर्मं परिपालयामि।

पूजाऽतिथीनां गृहदेवतानां श्वश्र्वादिसेवा पतिपादभक्तिः ।
रक्षाऽबलानां भरण शिशूनां हितानुचिन्ता सततं प्रजानाम् ॥१२॥

जीवदेवः ९. इदानीं सुलभं जातं मत्कर्तव्यम् ।

सञ्जीविनी १०. न तथा। राज्यशासनरीतिर्न कदापि सुलभा। शृणु—

---

७ त्व गृहिणी-जाया, अहं गृहस्थः- पतिः। त्वं सत्यधर्मपरायणा-त्वत्सहायेनाहमपि प्रजापालनपरायणो भवामि । त्वया सह वर्तमानोहं न कदापि राज्यशासनमुपेक्षे इति तात्पर्यम् ।

८. यदि मां गृहिणी मन्यसे तर्हि गृहिणीधर्मं शृणु ।

पूजेति-अतिथीनां पूजा - इष्टदेवतानां कुलदेवतानां च समर्चनम् । श्वश्र्वादिसेवा - श्वश्रूश्वशुरप्रभृतिवृद्धबन्धुजनानामुपचारः । पतिपादभक्तिः-स्वपतिं देववद्भावयित्वा स्ववृत्तैर्भक्तिप्रदर्शनम् । अबलानां रक्षा-स्त्रीणामसहायकानां च अन्नवस्त्रदानेन कष्टपरिहारेण च संरक्षणम्। शिशूना भरणम्-बालानां पोषणम् । प्रजानां सततं हितानुचिन्ता-सर्वदा प्रजाभ्युदयाया-लोचनम् । वृत्तमुपजातिः । अत्रोक्ताः विषयाः शान्तिरसस्य अनुभावा-स्सन्तः शमाख्यस्थायिभावं पुष्यन्ति ॥१२॥

९. एतत्सर्वं विशेषतः प्रजापालनानुचिन्तनमपि त्वं निवहसीति श्रुत्वा मम कर्तव्यं सुशक भावयामीति सतीप्रशंसामुखेनात्मसम्भावना ।

१०. राज्यशासनमार्गः न कदापि सुगम । यतः—वृत्तीना-मिति— वृत्तीनां सुव्यवस्था-ये ये वर्णाः अन्तर्वर्णाश्च या या वृत्तीरव-लम्ब्य जीवेयुः तासां वृत्तीना शासनपूर्वकं परिष्कारः । विविधपथजुषां-सत्वरजस्तमोगुणबलादनेकमार्गानुयायिनां - चोराणाम् जाराणाम् राजशास-

वृत्तीनां सुव्यवस्था विविधपथजुषां स्थापनं शान्तमार्गे
दुष्टानां दण्डनीतिः परबलहरणाद्राज्यरक्षासुनीतिः ।
ईतीनां शाम्यरीतिस्सुरगुरुचरणेष्वादरोत्पादनं चे-
त्येवं स्याद्राज्यतन्त्रे बहुगहनकलाः साधनात्कीर्तिलाभः॥

---

नोल्लंघिनाम्-राजद्रोहिणां जनानां, शान्तमार्गे स्थापनम्-सामदानभेददण्डा-द्यचतुर्विधोपायैः सन्मार्गे प्रतिष्ठापनम् । दुष्टानां दण्डनीतिः-दुर्जनानां कपटहिंसकादीनां राजशासनानुसारेण कारागृहवासादिदण्डविधानम् । परबलहरणाद्राज्यरक्षासुनीतिः- शत्रुसैन्यं नाशयित्वा स्वराज्यरक्षायै या राजनीतिरावश्यकी तस्या अनुसरणम् । ईतीनां शाम्यरीतिः- "अतिवृष्टिर-नावृष्टिर्मूषकाश्शलभाश्शुकाः। अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" इत्यादिना यदा यदा, अतिवृष्ट्या गृहादीनां वारिवारणादीनां नाशो भवति, अनावृष्टिवशात् सस्याभिवृद्धिभङ्गेन धान्यादिलाभाभावात् जनाः क्षुत्पिपा-सापीडिताः क्षामडामरादिभिरर्दिता भवन्ति, मूषकाः सङ्गृहीतधान्यानि नाशयन्ति, शलभाः- संवर्धितानि सस्यानि नाशयन्ति, शुकाः वृक्षेषु आम्रबहुबीजादिफलानि नाशयन्ति, राजानः अत्यासन्नाः देशपालकाः अतिधनाशया वारं वारं विविधाधर्म्यकरशुल्कग्रहणैः प्रजाः बाधन्ते, तदा तदा तत्परिहाराय समुचितकार्योपायैर्देशपालनानुसरणम् । सुरगुरुचरणेष्वादरः-यज्ञयागजपतपोरूपपूजया देवताः- तृतीयचतुर्थाश्रमिणां क्षेमप्रदकार्यैर्गुरूंश्च तोषयितुमौत्सुक्यम्, अथवा-तत्तत्कुलदेवतादिविषये तत्तन्मातापित्रादिगुरुजन-विषये च जनेषु यथादरः उत्पद्येत तथा व्यवस्थाकरणम् । एतादृश्यः बहुगहन-कलाः-अतिक्लिष्टवर्तनानि राज्यतन्त्रे-राज्यशासनरीतौ भवन्तीति शेषः । साधनात्-सुराज्ञाम् अमात्यमन्त्रिसचिवपुरोहितादिसहायेन एतत्सर्वं सुष्ठु सा-धितं चेत् कीर्तिलाभः-अयं राजा धार्मिकः-कार्यदक्षः-कुशलमतिः-प्रजास्सम्यक् पालयतीत्यादियशसां पात्रं भवतीति तात्पर्यम् । स्रग्धरावृत्तम् । एतादृश-

जीवदेवः-११. त्वं मम आचार्यानी संवृत्ता ।

सञ्जीविनी-१२. यदा त्वमाचार्यः तदा त्वद्योगादहमाचार्यानी ।

जीवदेवः-१३. वक्तव्यं विस्मृतम् । त्वमाचार्येत्याशयः ।

सञ्जीविनी-१४. अलमनेन परिहासवचनेन ।

जीवदेवः-१५. परिहासभाव एव मां प्रेरयति परिहासितुम् ।

सञ्जीविनी-१६. नतु परिहासकार्यम् ।

---

राजश्रेष्ठस्यैव युद्धवीरदानवीरधर्मवीर इति ख्यातिः । अनेन पत्नीबोधेन जीवदेवे समुत्साहो जात इति व्यंग्यमर्यादया उन्नेतुं शक्यते । तादृशोत्साह एव वीररसोदयस्य स्थायी भावतीति सहृदयानां सूक्ष्मांशःपरिस्फुरति ॥१३॥

११. "आचार्यानी तु पुंयोगे स्यादाचार्यापि च स्वतः" इत्यमरसिंहेन तयोश्शब्दयोर्भेदस्स्पष्टमभिहितः । "आचार्यादणत्वं च" (वा-४-१-४९) इति णत्वाभावः । आचार्यानीशब्दार्थमपरिभाव्य जीवदेवेन स शब्दः प्रयुक्तः ।

१२. अतस्सञ्जीविन्या सदुत्तरमुपदिष्टम् । यथा-"त्वमाचार्यः यदा-तव पत्नी अहमाचार्यानीति" ।

१३. वक्तव्यशब्दो विस्मृत इति वदन् स समुचितार्थद्योतकम् 'आचार्या' शब्दं पुनः प्रयुङ्क्ते ।

१४. भार्या भर्तुः कथं वा आचार्या-उपदेष्ट्री भवेत् ? इयं परिहासोक्तिः, एतां त्यजेत्याकूतम् ।

१५. स्वस्मिन् परिहासभाव. प्रथममुदितः तमनुसृत्य परिहासवचनमिति समाधानम् । अनेन नायके हास्यरसोदयः ज्ञेयः ।

१६. परिहासकार्यं भोगरूपम् । तत्र नोद्यमः कार्य इत्यभिसन्धिः । अनेन नायिकाया. मनः शमप्रधानमेवेति स्पष्टम् ।

जीवदेवः-१७. तदपि भाववचने अनुवर्तते।

सञ्जीविनी-१८. किमयं समयः ?

जीवदेवः-१९. चन्द्रोदयसमयः, पश्य।

अस्तं याते दिनेशे तिमिरमपहरन्मित्रतेजोऽभिमृष्टो
देवश्चन्द्रोऽत्र भासा कुवलयमभितो ह्लादयन् व्योम्नि याति।
चेतोमोदो ह्यमोघो युवजननिचयो भोगयोग्यो नितान्तं
तस्मादावां प्रियेऽद्य स्वहितकृतिपरौ धर्मदृष्ट्या भवाव ॥१४

---

१७. यथा परिहासभावमनुसृत्य परिहासवचनं प्रवृत्तं, तथा परिहासभावं परिहासभाषणं चानुसृत्य परिहासकार्यमपि प्रवर्तते इत्यभिसन्धिः।

१८. "किमयं समय" इत्यनेन अयं कालः परिहासकार्यप्रवर्तनस्य उचितो वेत्याकांक्षा। एतदर्थानुसंधाने तस्या अपि कालः उचितश्चेत् सम्भोगकार्यमभिमतं प्रदर्शितमिति वक्तुं शक्यते। तदनुचितम्-यतः-लोकहितैषिण्यास्सञ्जीविन्यास्स्वसुखेऽनादरः पूर्वं प्रकटितः। तदनुसारेण "किमयं समय" इति वाक्यस्य काका अयं कालः सन्ध्यादिनित्यकर्मानुष्ठानाय युक्तः न तु पशुवत्क्रीडोपभोगायेति तस्या अभिप्रायस्याभ्यूहस्समुचितः।

१९. चन्द्रोदयसमयः संभोगस्योद्दीपकः तदर्थमभिसन्धाय वदति जीवदेवः। अत्र सम्भोगशृङ्गारस्य उद्दीपनविभावोऽपि प्रदर्शितः। सूर्यास्त-सूर्योदय-चन्द्रास्त-चन्द्रोदयवर्णनं नाटकेष्वभिमतमिति वाऽत्र चन्द्रोदयवर्णनम्।

अस्तमिति—दिनेशे-सूर्ये अस्तं याते सति मित्रतेजोऽभिमृष्टः- सूर्यतेजसा व्याप्तः- अत एव-देवः- ज्योत्स्नामुखाद्द्योतनशीलश्चन्द्रः तिमिरमपहरन्-अन्धकारं नाशयन् अत्र-अस्मिन् लोके-अस्मिन् स्थाने वा अभितः-परितः- सर्वत्रेति यावत्। भासा तेजोऽभिमर्शेन कुवलयं ह्लादयन्-भूमण्डलं तोषयन्-कुमुदानि विकसितानि कुर्वन् व्योम्नि याति अन्तरिक्षे सञ्चरति।

सञ्जीविनी—२०. धर्मदृष्टिः काऽत्र ?

जीवदेवः—२१.

पत्न्या धर्मस्स्वपतिसुखसम्पादनं स्तुत्यवृत्तै-
स्तत्सौख्यार्थं विहितकरणं सर्वदा भर्तृधर्मः ।
इत्यन्योन्यप्रियकरसृतौ शोभमानं समन्ता-
द्दाम्पत्यं तज्जगति गदितं सार्थकं कीर्तिपात्रम् ॥१५॥

तदावाभ्या परस्परधर्मः पालयितव्यः ।

---

चेतोमोदः अमोघः- सर्वेषां हृदयाह्लादः विशेषेण भवति । अत. युवजननिचयःनितान्तं भोगयोग्यः- यौवनदशामापन्नाः स्त्रीपुरुषाः विशेषतो भोगासक्ता भवन्ति । अतः आवामपि स्वहितकृतिपरौ-अन्योन्येन अन्योन्यस्य-मिथः हितं-सुखं यथा भवति तथा आचरणे रतौ भवाव । तच्चाचरणं तु धर्मदृष्ट्यैव-शास्त्रविधिनैव न तु वामाचारेण । शास्त्रमत्र सत्सन्तानसिध्यनुग्राहकम् । अत एव "प्रजायै गृहमेधिनाम्" इत्यादिप्रयोगः । स्रग्धरावृत्तम् ॥१४॥

२०. तां धर्मदृष्टिं पतिमुखाद्वेदितुमयं प्रश्नः ।

२१. पतिसुखसम्पादनं सतीधर्मः । पत्नीसुखसम्पादनं पतिधर्म इति सामान्याकारेण निर्देशः । इममर्थमेव विशदयति पत्नीत्यादिना—

पत्नीति—स्तुत्यवृत्तैः-प्रशस्ताचरणैः-स्वपतिसुखसम्पादन पत्न्या धर्मः-येन प्रकारेण स्वभर्तुः सुखं भवेत् तथाचरणं पत्न्या कर्तव्यम् । तथा तत्सौख्यार्थं सर्वदा विहितकरणं भर्तृधर्मः-भार्यायास्सुखलाभाय यत्कर्तव्यं तत्पतिधर्मः । इत्यन्योन्यप्रियकरसृतौ-पतिपत्न्यो. मिथः सुखलाभाय विहिते मार्गे समन्ताच्छोभमानं दाम्पत्यं-सर्वथा धर्ममार्गे वर्तमानयोर्दम्पतिभावः सार्थक कीर्तिपात्रमिति जगति विदितं-क्षेमकारि यशःप्रदमिति जनाः मन्यन्ते इत्यर्थः । मन्दाक्रान्तावृत्तम् ।

तस्मादावाभ्यामपि दम्पतिधर्मः अत्यन्तजागरूकतया रक्षितव्यः ॥१९

सञ्जीविनी–२२. रोगग्रस्ते त्वयि मया मम धर्मः पालितः ।

जीवदेवः–२३ आरोग्यस्थे मयि मया ममधर्मोऽपि पाल्यते ।

सञ्जीविनी–२४ यथा ते रोचते तथास्तु । किन्तु अस्ति मे काचिच्चिन्ता ।

जीवदेवः—

का चिन्ता मम कान्ते मयि सन्निहिते तवास्ति कथय त्वम् ।
चिन्तयसि यदिह कार्यं तदहं सम्पादयामि यत्नात्ते ॥१६॥

सञ्जीविनी—प्रिय ! अस्मत्पुत्रो ज्ञानसूर्यः इदानीं सकल-विद्यापारङ्गतवान् - विंशतिवत्सरो यौवनमधिगतवान् तस्यायं विवाहकाल इति मन्ये ।

जीवदेवः—२६. कुतोऽत्र चिन्ता-अनुरूपा कन्या लब्धा चेदचिरादेव परिणयविधिस्सम्पाद्यते ।

---

२२. जीवदेव· यदा अनेकरोगैः पीडितः तदा पत्नी समुचित-चिकित्सया तान् रोगान्परिजहारेति तस्या धर्मो निर्वर्तितः ।

२३. इदानीं स आरोग्यस्थितिमापन्न.। अतः स्वेन स्वस्य धर्मोऽपि पालनीय इति साकूत वचनम् ।

२४. यथा ते रोचते इत्यनेन पतिमतानुसरणं प्रदर्श्य-पतिबुद्धेरन्यत्रा-कर्षणाय स्वस्याः काचिच्चिन्ता सूचिता । का चिन्तेति—हे मम कान्ते-प्राणप्रिये ! मयि सन्निहिते सति-मयि तव समीपवर्तिनि सति तव का चिन्ता अस्ति कथय । न कस्या अपि चिन्तायाः अवकाशः । यत्किञ्चि-त्कार्यमिह चिन्तयसि यदि-यस्मिन् कस्मिन् कार्ये यदि काचिच्चिन्ता अस्ति ते तां मे निबोधय। यत्नात्ते तदहं सम्पादयामि-एतत्क्षणेऽहं तां सर्वप्रयत्नेन तवेप्सितं साधयामीत्यर्थः । वृत्तं गीतिः ॥१६॥

२५, प्रिय ! अस्मत्पुत्रस्य विद्याभ्यासस्समाप्तः अस्यायं विवाह-योग्यः कालः । अस्मिन् विषये मम चिन्ता ।

२६. अनुरूपकन्याधिगमेनास्य विवाहस्सम्पाद्यते ।

सञ्जीविनी—२७. अस्ति तदनुरूपा कन्या ।

जीवदेवः–२८. कुत्र ? का ?

सञ्जीविनी–२९. तव श्वशुरगृहे - शान्तिप्रभा ।

जीवदेवः—३०. मत्स्वसुः सुप्रभाया दुहिता ?

सञ्जीविनी–३१. तथा ।

जीवदेवः—३२. तयोर्वधूवरसम्पत्तिस्समुचिता । परन्तु अस्मत्स्त्रीजनाभिप्रायः कीदृशो वर्तते-न ज्ञायते ।

सञ्जीविनी—३३. ज्ञातः, सर्वसम्मत एव ।

जीवदेवः—३४. तर्हि पुरुषजनानामभिमतं च सम्पाद्य यथोचितकार्ये प्रवर्तामहे ।

सञ्जीविनी—३५. इदानीमहं निश्चिन्ता ।

---

२७. अनुरूपकन्याधिगमो भवतीति सूचितम् ।

२८. देशावबोधाय-व्यक्त्यवबोधाय च प्रश्नः ।

२९. तत्र "श्वशुरगृहे" इति देशनिर्देशः । "शान्तिप्रभे"ति व्यक्तिनिर्देशः ।

३०. श्वशुरगृहे इति वस्तुनिर्धारणाय संशये सत्यपि शान्तिप्रभेति नामनिर्देशेन स्वसृदुहितेति संशयज्ञाननिवृत्तिपूर्वकं व्यक्त्यवधारणज्ञानम् ।

३१. तदेवाङ्गीक्रियते ।

३२. तयोर्वधूवरानुरूप्यमङ्गीकृत्य स्त्रीजनानुमतिविषये शङ्कां करोति ।

३३. पूर्वमेव निश्चितां सम्मतिमनुस्मृत्य वदति ।

३४. स्त्रीजनानुमोदे पुरुषाणां सम्मतिस्सुसम्पाद्येति मत्वा तदनन्तरीयकार्ये प्रवर्तनमनुमन्यते ।

३५. अनेन धैर्यापादकवचनेन स्वस्याश्चिन्ता परिहृतेति वदति ।

जीवदेवः—३६. सर्वदा त्वं निश्चिन्ता भवितव्येति ममाशयः।

सञ्जीविनी—३७. प्रियभर्तृका संवृत्ताऽहम् ।

जीवदेवः—३८. प्रियपत्न्याः प्रियभर्तृयोगस्साधारणः ।

सञ्जीविनी—३९. आवयोस्त्वसाधारणः।

जीवदेवः—४०. तत्कथम् ?

सञ्जीविनी—

सुखे दुःखे भर्ता यदनुभवति स्वस्य गृहिणी
विरागद्वेषा सा तदनुभवति प्रार्थनपरा ।
तथा पत्न्यास्सत्यास्सुखमसुखमप्यादरतया
समं भक्त्वा भर्ताऽनुभवति तथा नौ समगतिः ॥१७॥

---

३६. एतमेव सर्वदा त्व निश्चिन्ता भवितव्येत्याशास्यते ।

३७. एतत्प्रियस्य समाधानवचनं श्रुत्वा सा स्वस्याः प्रियपतित्वं सूचयति ।

३८. यथा सा प्रियभर्तृका-तथा सोऽपि प्रियभार्य इति परस्पर-साधारणभागधेयं शंसति ।

३९. तादृशभागधेयमन्येषां विषये साधारणमपि जीवसञ्जीविनी-विषयेऽसाधारणमिति साभिप्रायकं वचनम् ।

४०. असाधारणमिति वचनं हेतुमाकांक्षते । तदर्थं विशदयति सञ्जीविनी—

सुखेति—भर्ता-पतिः सुखे दुःखे यदनुभवति-सुखदुःखयोगसम्भवे यथा यन्मनोवृत्तिको भवति, विरागद्वेषा सा स्वस्य गृहिणी-रागद्वेषरहिता भार्यापि, प्रार्थनपरा-पत्युस्सुखदुःखमेवापेक्षमाणा तन्मनोवृत्तिका भवेत् । पतिः यदा दुःखितः सापि तदा दुःखिता । स यदा सुखितः-सापि तदा सुखिता । स यदा तटस्थः सापि तदा तथैव । एवं दम्पत्योस्समचित्तप्रवृत्तिस्सहजा । न तु

जीवदेवः-४१. इदमसद्भाग्यम् । साधयामस्तावदनन्तर-कार्यभारनिर्वहणाय ।

॥ इति निष्क्रान्तौ ॥

---

रागद्वेषजन्या भवेदित्याशयः । यथा-पतिः देवताध्यानेन सुखी भवेच्चेत् भार्यापि भर्त्रानुभूयमानसुखमपेक्ष्यैव सुखिनी भवेत्। नतु देवताध्यानेन इष्टार्थ-फलसिद्धिर्भवतीति तत्र रागेण। तथा-यदा पत्नी प्रसववेदनया दुःखिता भवति तद्दुःखमपेक्ष्यैव पतिरपि स्वभावाद्दुःखी भवेत् नतु प्रसववेदनाद्वेषेण । इत्थमन्यान्युदाहरणान्युन्नेयानि । तथा पत्न्याः- भार्यायाः सुखमसुखमपि सुखदुःखे भर्ता सर्वं भक्त्या आदरतयाऽनुभवति-पतिरपि रागद्वेषौ विहाय समभागेन त सुखदुःखे अनुभवेत् । इति दम्पत्योस्सुखदुःखाद्वैततत्वम् । तथा नौ समगतिः-आवयोः एवंविधानुभवो भवतीति असद्दाम्पत्ययोगः असारबाण इत्युक्तमिति स्वाभिप्रायं प्रकटिनवती सञ्जीविनी । शिखरिणी-वृत्तम् ॥१७॥

४१. एवंविधदाम्पत्ययोगः स्वकृतसुकृतविशेषेण संलब्ध इत्युक्त्वा तदनन्तरकरणीयोद्योगाय प्रवृत्तो भवति ।

॥ इति द्वितीयदृश्यव्याख्या ॥

## ॥ तृतीयदृश्यम् ॥

---

॥ ज्योत्स्नानगरम् ॥

(ततः प्रविशति जीवदेवस्सञ्जीविनी च)

जीवदेवः—१. प्रिये ! सञ्जीविनि ! अवहिता भव ।

सञ्जीविनी—२. सावधानास्मि ।

जीवदेवः—३. अत्रास्माभिर्यद्यत्कर्तव्यं तत्सर्वं सम्यक् साधितम् । यथा—

सद्विद्या विहिता सुखेन कलिता सेवा गुरूणां हिता
राज्यं चाधिगतं प्रजास्सुविहितास्सद्धर्ममार्गे स्तुताः ।
त्वद्योगाज्जनितस्सुशीलतनयश्शान्तिप्रभाभासितः
किं कार्यं न कृतं स्वजन्म फलितं शास्त्रैश्च सम्भावितम्॥१८

अतः अस्मत्पुत्रं ज्ञानसूर्यं राज्येऽभिषिच्य आवां जीवन्मुक्ताविव परोपकारपरायणौ भवावः ।

---

॥ तृतीयदृश्यव्याख्या ॥

१. वक्ष्यमाणवृत्तान्तविचाराय भार्याया अवधानमाकर्षति भर्ता जीवदेवः ।

२. सावधानं तद्वृत्तान्तविचाराय सा सन्नद्धा भवति ।

३. "कर्तव्यं सर्वं साधित" मित्यनेन ज्ञानसूर्यस्य शान्तिप्रभया सह विवाहोऽपि निर्वृत्त इति ध्वन्यते ।

सद्विद्येति—सद्विद्या विहिता आवाभ्यां शास्त्रेषु कलासु च आवश्यकविद्याभ्यासः बाल्ये निर्वर्तितः । गुरूणां हिता सेवा सुखेन कलिता-गार्हस्थ्यदशायां मातापित्रादिगुरुजनानां सुखदायिनी सेवा-परिचर्या सुसुखं साधिता-

सञ्जीविनी–४. एतादृशावसरे अस्मत्कुलवृद्धैस्तृतीयाश्रमस्स्वीकृतः खलु । आवामपि तमनुसरावः ।

जीवदेवः–५. तृतीयाश्रमसिद्धा एव जीवन्मुक्ताः ।

---

राज्यं चाधिगतं-पितुस्सकाशाद्राज्यमधिगतम्-सिंहासने आवां पितृसमक्षं पट्टाभिषिक्ताविति तात्पर्यम्, स्तुता प्रजा सद्धर्ममार्गे सुविहिता.- धर्मपराः प्रशंसनीयाः अस्मत्प्रजाः-शास्त्रविहितेषु सम्प्रदायानुबद्धेषु सद्धर्मेषु स्थापिताः।

त्वद्योगात्-त्वया सह पाणिग्रहणवशात् सुशीलतनयः जनित -सद्वृत्तो ज्ञानसूर्याख्यः पुत्रो जातः । सोऽपि शान्तिप्रभाभासितः-शान्तिप्रभाख्यवध्वा सह विवाहितस्सन् राजते । स्वजन्म फलितम्-आवयोः जन्म सफलं कर्तुं योग्यं शास्त्रैश्च सम्भावितं-वेदशास्त्रानुगृहीतं किं कार्यं न कृतं-किं वकार्यमकृतमस्ति-सर्वं कृतमेव । अनेन पुरुषार्थप्रयोजनं सम्यक् साधिता मित्यभिप्रायः । अत्र व्यञ्जनावृत्त्या - ब्रह्मचर्यगार्हस्थ्यधर्मनिर्वर्तनानन्तरं सञ्जातज्ञानप्रकाशद्वारा - शान्तिदान्त्यादिचित्तवृत्तिसाधनद्वारा च तृतीयाश्रमप्रवेशाय अधिकारप्राप्ति तद्वारा तुरीयाश्रमफलभूतमुक्तिप्राप्तये अवकाशप्राप्तिश्च सूचिता । तदर्थमेवाभिधावृत्त्या अत इत्यादिना विशदीक्रियते । शार्दूलविक्रीडितं वृत्तम् ॥१८॥

अतः-अस्माद्धेतोः अस्मत्पुत्रं ज्ञानसूर्यं राज्येऽभिषिच्य-राज्यं तदायत्तं कृत्वा-जीवन्मुक्ताविव जीवन्मुक्तानां वर्तनेन परोपकारपरायणौ भवावः लोकसेवानिरतौ भवावः। लोकोद्धार एव जीवन्मुक्तानां कार्योद्देशः।

४. एवं स्थिते वानप्रस्थाश्रमस्वीकार एव आवयोः कर्तव्यः व्यापारः । एतादृशसन्दर्भे अस्मत्पूर्वजैरपि स एवोररीकृत इति भार्ययोपदिष्टम् ।

५. जीवन्मुक्तावस्था भर्त्रऽपेक्षिता । तृतीयाश्रमवृत्तिः भार्यया । अतः जीवन्मुक्तदशापेक्षया तद्धेतुभूतः तृतीयाश्रमः अङ्गीकृत एवेति जीवदेवस्याभिसन्धिः ।

सञ्जीविनी–६. तदाश्रमस्वीकारानन्तरं हि तत्सिद्धिः। तदनन्तरं किल जीवन्मुक्तिप्रसङ्गः?

जीवदेवः–७. सुष्ठु भणितम्। आश्रमस्वीकारः न वेषनिबन्धनः। गृही गृहिणी च गृहस्थावेव वनौकसां वृत्तिमनुसर्तुं शक्तौ।

सञ्जीविनी–८. कथं ते गृहवासेऽभिनिवेशः?

जीवदेवः–९. कथं ते वनवासेऽभिरुचिः?

सञ्जीविनी—१०. यथा सीतायाः।

जीवदेवः–११. राममनुसृतायाः।

सञ्जीविनी—१२. तथा।

---

६. कारणपूर्वकं कार्यमिति न्यायेन कारणभूततृतीयाश्रमस्वीकारः प्रथममपेक्षणीयः। तत्कार्यभूतजीवन्मुक्तप्रसङ्गः अनन्तरमादरणीय इति सञ्जीविन्या आकूतम्।

७. आश्रमस्वीकारः काषायवस्त्रनिबन्धनो न भवति। गृहस्थाश्रम एव वानप्रस्थवृत्तिसाधनं भवत्येव केषांचिन्महात्मनाम्। अतः आवामपि तथा गृहस्थावेव स्थितौ तापसवृत्तिमनुसराव इति जीवदेवोऽभिप्रैति।

८. कुतस्तस्य गृहवासाभिनिवेश इति पृच्छा।

९. कुतस्तस्या वनवासाभिनिवेश इति प्रतिपृच्छा।

१०. सीतायाः यथा वनवासेऽभिरुचिर्जाता तथैव स्वस्या अपीति सञ्जीविन्या उत्तरम्।

११. पित्राज्ञापरिपालनार्थम् अरण्यवासोद्युक्तं श्रीराममनुसृत्यैव सीतायास्तादृशवनवासाऽभिरुचिर्जातेति साक्षेपोक्तिः।

१२. तद्वचनमङ्गीकरोति सञ्जीविनी तथेति।

जीवदेवः-१३. मामनुसरन्त्यास्तव न तथा ।

सञ्जीविनी—१४. कुतः ?

जीवदेवः-१५. मम वनवासे नाभिरुचिः ।

सञ्जीविनी-१६. साऽऽसीद्रामस्य ।

जीवदेवः-१७. निमित्तान्तरेण-न तु तृतीयाश्रमस्वीकारधिया ।

सञ्जीविनी-१८. सनिमित्तकोऽपि वनवासः स तृतीयाश्रम एव ।

---

१३. पतिमतमनुसृतायाः पत्न्यास्सञ्जीविन्याः पत्युरिवाभिरुचिर्न जातेति परिहासमुखादाक्षेपः ।

१४. कथमिति पृच्छति सञ्जीविनी ।

१५. स्वस्य वनवासे नाभिरुचिरिति निजचित्तवृत्तिप्रकाशः ।

१६. सासीद्रामस्येत्यादिना रामस्य वनवासेऽभिरुचिरासीत् । तमानुसृत्य सीताया अपि वनवासाभिरुचिर्जाता । अतः यदि तवापि तथ-वनवासाभिरुचिस्स्यात्त्वं रामोपमो भवसि तदभिरुचिमत्याः ममापि सीतोपमा भवेत् इत्युक्तम् । अनेन रामस्येव तवाऽपि वनौकसां वृत्त्यनुसरणं युक्तमिति सूचितम् ।

१७. रामस्तृतीयाश्रमस्वीकारबुध्या अरण्यवासं न कृतवान् किंतु पितुराज्ञापरिपालनार्थम् अरण्यवासाय चोदित इति सञ्जीविनीवाक्ये लाघवं दर्शयति ।

१८. भवतु पितुराज्ञापरिपालनं निमित्तं श्रीरामस्य अरण्यप्रवेशाय । तथापि स अरण्यवासः तृतीयाश्रम एव । यतः वनौकसां धर्माः अरण्ये रामेण पालिताः-इति रामस्य तृतीयाश्रमस्वीकारं साधयति सञ्जीविनी ।

जीवदेवः-१९. तर्हि तदनन्तरं खलु कुशलवोत्पत्तिः। पुत्रोत्पादनधर्मः गृहस्थाश्रमयोग्यः। तृतीयाश्रमाद्द्वितीयाश्रमाय प्रत्यावृत्तिश्शास्त्रनिषिद्धा। तस्माद्रामस्य वनवासः निमित्तान्तरेण न तु आश्रमचोदितेन हेतुना।

सञ्जीविनी-२०. भवतु-कुतस्तेऽरण्यवासो न रोचते?

जीवदेवः-२१ तत्र लोकानां सुखदुःखपरिज्ञानस्य वा तेषां हितसाधनकार्याचरणस्य वा अवकाशो न भवतीति।

सञ्जीविनी-२२ तर्हि जीवन्मुक्तौ कथं भवाव?

जीवदेवः-२३. मुक्तौ भूत्वा जीवन्तौ भवाव।

---

१९. तस्याः वचनं दौर्बल्यं ज्ञात्वा जीवदेवः एवमाक्षिपति। श्रीरामस्य अरण्यवासः तृतीयाश्रम इति मन्यसे त्वम्। अनन्तरं खलु कुशलवयोरुत्पत्तिः तादृशपुत्रोत्पत्तिप्रवृत्तिः प्रायशः गृहस्थाश्रमस्थितयोर्दम्पत्योरेव। तृतीयाश्रम स्वीकृत्य तदनु तं परित्यज्य द्वितीयाश्रमाय प्रत्यावृत्तिः न शास्त्रसम्मता। सम्प्रदायविरुद्धेति हेतुं प्रदर्श्य रामस्य वनवासः तृतीयाश्रमधिया न कृत इति साधयति।

२०. भवत्विति तद्धेतुमङ्गीकरोति। तथापि तस्य कुतः वनवासे नाभिरुचिर्भवतीति तन्मनोऽभिप्रायावेदनाय तं पृच्छति।

२१. वनवासिनां लोकपरिचयस्य अवकाशाभावात्-लोकानां सम्प्राप्यमानदुःखपरिज्ञानाय-तादृशदुःखपरिहारद्वारा परोपकारसाधनाय च आनुकूल्यं न भवति। अतः लोकमध्ये स्थितावावां जीवन्मुक्ताविव लोकोद्धारककार्याणि करवाव इति समाधानोक्तिः।

२२. जीवन्मुक्ताविवेत्युच्यते त्वया - कथमावयोर्जीवन्मुक्तेस्संभव इति पुनः प्रश्नोद्घाटनम्।

२३. प्रथमं मुक्तौ भवाव। अनंतरं जीवन्तौ च भवाव इत्युत्तरम्।

सञ्जीविनी २४. मुक्तस्य जीवनापेक्षा कुतः ?

जीवदेवः-२५. परोपकाराय। परेषामुपकारस्तु-तेषां सर्वापद्भ्यः समुद्धरणम्।

सञ्जीविनी-२६. ज्ञातं ज्ञातम्। तवाकूतं श्लाघ्यतमम्। त्वन्मतमेवानुसरामि।

स्वात्मोद्धारे जगति यतते प्रायशस्सज्जनोऽलं
शास्त्रज्ञोऽपि स्थिरमतिरपि स्वार्थता तत्र दृष्टा
तत्त्वज्ञाता भवतु भुवने मुक्तयोग्यो विदेही
ध्यानाद्भक्त्या तरतु जलधिं जन्ममृत्युप्रवाहम् ॥१९॥

---

२४. जननमरणात्मकप्रवाहतरणमेव मुक्तिः। तर्हि मुक्तस्य जीवनापेक्षा पुनः कथं भवेदिति तत्त्वविमर्शायायं प्रश्नः।

२५. जीवितं विना परोपकारः कथं क्रियेत। परोपकारस्तु लोकोद्धाररूपः। तत्करणे ममाभिनिवेश इत्युत्तरम्।

२६. तस्य हृद्गताभिप्रायमद्य ज्ञात्वा भार्या पतिं प्रशंसति। यथा—

स्वात्मेति-जगति-लोकेषु सज्जनः साधुमार्गावलम्बी जनः प्रायशः-सामान्यतः स्वात्मोद्धारे अलं यतते-स्वस्य वैषयिकसुखदुःखनिबर्हणपूर्वकं निरतिशयानन्दावाप्तये सम्यक् प्रयत्नं करोति। ब्रह्मज्ञानेन अज्ञाननिवृत्तिपूर्वकमात्मसाक्षात्काराय प्रवर्तते। तादृशस्सज्जनः भवतु नाम शास्त्रवेत्ता-तत्त्वमसीत्यादिमहावाक्यार्थज्ञः तत्वविद्भवतु नाम, स्थिरमतिः-निश्चलचित्तः-"योगश्चित्तवृत्तिनिरोधः" इति पतञ्जलिसूत्रानुसारेण निरुद्धसकलचित्तवृत्तिरिति यावत्। तदा किं भवति ? "तदा द्रष्टुःस्वरूपमेव स्थानम्" इति पतञ्जलिः। "ब्रह्मविद्ब्रह्मैव भवति" इति उपनिषदः। एवमपि तत्र केवलं-स्वात्मोद्धारविषये स्वार्थता दृष्टा-स्वप्रयोजनमेव दृष्टं भवति। लोकदृष्ट्या स्वार्थपरता निन्द्यापि स्वार्थता-स्वरूपसाक्षात्कार इति तत्वविदां शास्त्राणां च दृष्टिः- अभिप्रायः। भुवने-जगति यदि कश्चित्तत्वज्ञाता भवति स विदेही

ताद्दक्शीलः परहितकृते देहभागन्यजीवान्-
जीवन्मुक्तो भवगुणयुतान् भव्यमार्गेषु नीत्वा ।
तत्वान्येषां परसुखकराण्यादरात्सम्प्रबोध्य
स्वात्मारामान् ह्यभयरमणान् सार्द्रचेताः करोति ॥२०॥

---

भवति-तत्वज्ञानेन प्रारब्धदेहपातानन्तरं सायुज्यरूपं विदेहमुक्तिं-विदेहकैवल्यं वा भजतीति तात्पर्यम् । अथवा ध्यानात्-परमात्मनि तैलधारावन्निरन्तरा-विच्छिन्नलक्ष्यैकताचिन्तननिष्ठया भक्त्या-निरतिशयानन्यप्रीतिविशेषेण वा मुक्तियोग्यो भवेच्चेत् स जन्ममृत्युप्रवाहं जलधिं तरतु-जननमरणात्मकसंसृति-प्रवाहं तीर्त्वा परमपदे सालोक्य-सामीप्य-सारूप्यरूपनिरतिशयानन्दमनु-भवत्विति सङ्ग्रहार्थः । मन्दक्रान्तावृत्तम् ॥१९॥

ताद्दगिति - ताद्दक्शील'- चतुर्विधमुक्तियोग्यस्सज्जनः परहितकृते-परोपकारार्थं देहभाक्-शरीर मनुज्झित्वा अथवा स्वेष्टं देहं धरन् जीवन्मुक्तो-मुक्तोऽपि लोकोद्धारकार्यार्थं जीवन् सन् भवगुणयुतान्भवे-संसारे गुणैः-सत्वर-जस्तमोरूपत्रिगुणैः युतान्-बद्धान् अन्यजीवान्-स्वेतरप्राणिनः भव्यमार्गेषु नीत्वा-स्वीयाचरणनिदर्शनेन श्रेयस्करकार्येषु प्रवर्तयन्-एषाम् अज्ञानां परमसुखकराणि-मुक्तिदायकानि नित्यसुखप्रदानि वा तत्वानि ज्ञानभक्ति वैराग्योत्पादकविषयकानिति यावत् । आदरात्सम्प्रबोध्य-निर्व्याजमुपदिश्य सार्द्रचेतास्सन्-करुणार्द्रान्तरङ्गस्सन् स्वेतरान् जनान् स्वात्मारामान्-स्वस्य निजस्वरूपे रमणान्-सन्तोषभरितानिति यावत् । अभयरमणान्-जननमरणा-त्मकभयाद्भिन्नम्-अभयं मोक्षरूपं वस्तु तस्मिन् आसक्तान् करोति-तनुते । विदेहमुक्तात् जीवन्मुक्तो वरीयानिति सारार्थः । मन्दक्रान्तावृत्तम् । श्लोक-द्वयोक्तविषयानुसंधानेन वक्तृश्रोतृजनेषु अभिनेतरि नटे सामाजिकेषु वा शान्तिरसोदयस्संभवतीति सुस्पष्टमेतत् ॥२०॥

जीवदेवः-२७. त्वं ब्रह्मवादिनी ।

सञ्जीविनी-२८. ब्रह्मवादिसम्बन्धिनी ।

जीवदेवः-२९. शान्तिरसेऽपि शृङ्गाररसप्रसङ्गः ।

सञ्जीविनी-३०. यत्र वस्तुभेदप्रतिपत्त्या परस्परसम्बन्धेन सुखानुभवः तत्र शृङ्गारः। यत्र वस्त्वभेदप्रतिपत्त्या तादात्म्यसम्बन्धेन सुखानुभवः तत्र शान्तिरित्यनयोर्वस्तुतो न विशेषभेदः ।

---

२७. एतत्तत्त्वोपदेशं श्रुत्वा जीवदेवः स्वभार्यां सञ्जीविनीं ब्रह्मवादिनीति साकूतं तां प्रशंसति ।

२८. यदा जीवदेवः ब्रह्मवादी तदा तत्सम्बन्धात्सा सञ्जीविनी ब्रह्मवादिसम्बन्धिनी - ब्रह्मवादिनीत्यङ्गीकरोति अत्र शृङ्गारहास्यरसयोश्छाया प्रस्फुरति ।

२९ अत एव शान्तिरसेऽपि-पूर्वोक्ततत्त्वविमर्शद्वारा शान्तिरसोदय-सन्निवेशेऽपि शृङ्गाररसप्रसङ्गः- तव भार्या भूत्वैवाहमेतानि तत्त्वानि जानामि इदं मे भाग्यं इत्यादिशृङ्गाररसद्योतकसरसवचनप्रयोग इति भावः ।

३०. सम्भोगशृङ्गारो वा विप्रलम्भशृङ्गारो वा भवतु तत्र शृङ्गार-रसोदयाय नायिकानायकादिपदार्थद्वयसन्निधानमावश्यकमनिवार्यं च । यत्र ज्ञाता ध्याता-कर्ता वा प्रशान्तचित्तेन ज्ञेय-ध्येय-कारणरूपं वस्तु अनन्य-चिन्तया परिभावयति तदा त्रिपुटैकीकरणेन वस्त्वेकमात्रं तिष्ठति । अथवा नायिकानायकौ परस्परमनन्यबुध्द्या सर्वदा प्रवर्तेते तत्र शान्तिरसोदयः । नवरसेषु शान्तिरस नाटकादिषु नाङ्गीकुर्वन्ति केचिदालङ्कारिकाः । अन्ये केचित् शान्तिरस एव प्रधानतम इति साधयन्ति । अस्मिन् विचारे विशेषां-शावगमः भवति शास्त्रावलोकनेन भावप्रकाशन-भरतशास्त्रादिग्रन्थपरिचय-मुखाच्च सुशकमिति दिक् । यदा अन्तःकरणं प्रशान्तं सत्त्वप्रधानं भवति तदैव रत्यादिभावः स्थायी भवति । स विभावानुभाव-व्यभिचारिभावैस्सम्पुष्टः

जीवदेवः-३१. अस्तु तावत्तत्ववादः, प्रकृतमनुसरामः ।

सञ्जीविनी-३२. किं प्रकृतम् ?

जीवदेवः-३३. ज्ञानसूर्यस्य पट्टाभिषेकमहोत्सवः ।

सञ्जीविनी-३४. प्रचलत्वसौ ।

जीवदेवः ३५. सेवक !

सेवकः-३६. अवहितोऽस्मि आज्ञापयतु देवः ।

जीवदेवः-३७. मन्त्रिसचिवानाह्वय ।

सेवकः-३८. तथा । (इति निर्गत्य मन्त्रिसचिवपुरस्सरं पुनः प्रविश्य) प्रभो ! मन्त्रिसचिवास्सन्निहिताः ।

---

शृङ्गारादिरसात्मना परिणमति इति रसविदां मतेनापि शान्तिशृङ्गारयोः परस्परसम्बन्धं विदित्वात्र कविस्तयोस्समप्राधान्यं संविधानप्रयोग चमत्कारेण निरूपितवान् । अन्तरङ्गे-शान्ते खलु यः कोऽपि भावस्स्थायी भवेत् तस्मिन् विक्षिप्ते यस्य कस्यापि भावस्य तथा भवितुं नावकाशः ।

३१. एतत्तत्वानुचिन्तनं प्रकरणवशादायातमिति मन्त्रिकृष्टधिया प्रकृतकार्यानुसन्धानायैवमुक्तिः ।

३२. तत्प्रकृतकार्यविचारणाय प्रश्नः ।

३३. पूर्वोक्तरीत्या ज्ञानसूर्यस्य पट्टाभिषेकसमारम्भस्य सूचना ।

३४. तं समारम्भं सम्पादयेत्यभिप्रायः ।

३५. सेवकस्य सम्बोधनं आनन्तर्यकार्यारम्भाय ।

३६. आज्ञाधारकोऽस्मि । किमाज्ञापयति देव इति सेवकवचनम् ।

३७, मन्त्रिसचिवाह्वानाय राजाज्ञा ।

३८. तानानीय सेवकः राज्ञे तदागमनमावेदयति ।

मन्त्रिसचिवाः—३९. अभिवादयामहे प्रभुवर्यम् ।

जीवदेवः—४०. शुभं भवतु वः । भो मन्त्रिसचिवाः । अस्मत्पुत्रवर्यस्य राज्यधौरन्धर्यविषये प्रजानुमतिः कीदृशी ?

मन्त्रिसचिवाः—४१. सर्वाः प्रजास्तमनुमोदन्ते ।

जीवदेवः—४२. तर्हि सकलसम्भारान् सज्जीकुरुत ।

मन्त्रिसचिवाः—४३. अचिरात्सर्वं सज्जीक्रियते । आह्वानानि सर्वत्र प्रेष्यन्ते ।

जीवदेवः–४४. तथा कुरुत । (मन्त्रिसचिवाः निर्गच्छन्ति) सेवक ! कुमारमानय ।

सेवकः—४५. प्रभो कुमारोऽत्रागतः ।

जीवदेवः—४६. पुत्र ! ज्ञानसूर्य ! अचिरादेव ते शान्तिप्रभापाणिग्रहोत्सवस्सम्पन्नः । इदानीं राज्यलक्ष्मीपरिग्रहोऽपि भवति ।

---

३९. साम्प्रदायिकमिदं राजप्रणामाचरणम् ।

४०. आशीराशंसापि साम्प्रदायिका । ज्ञानसूर्यस्य राज्याभिषेकविषये प्रजासम्मतिः किंरूपेति राजा मन्त्रिसचिवान् पृच्छति ।

४१. सर्वसम्मतमिदं कार्यमिति ब्रुवन्ति मन्त्रिसचिवाः ।

४२. तदर्थं सकलपरिकरसञ्जीकरणाय राजा आज्ञापयति ।

४३. तथेति तेषामङ्गीकारः ।

४४. तथा कुरुतेत्युक्त्वा तान् प्रेषयति । ज्ञानसूर्यस्यानयनाय सेवकमाज्ञापयति ।

४५. सेवकः कुमारमानयति ।

४६. त्वमचिरादेव यथा शान्तिप्रभया विवाहितः तथेदानीं राज्यधौरन्धर्ययोगेन राज्यलक्ष्मीयुतोऽपि भवसीति तस्य पट्टाभिषेकसमारम्भं सूचयति ।

ज्ञानसूर्यः—४७. गुरुजनाशीर्बलेनैव मङ्गलपरम्परासम्भवः।

जीवदेवः ४८. त्वं पुरोहितोपदेशं गृहीत्वा मङ्गलस्नानादिकं सम्पाद्य यथाविधि होमादिकर्मनिरतो भव।

ज्ञानसूर्यः—४९. यथाज्ञापयति तीर्थपादः। (निर्गच्छति)

जीवदेवः ५०. प्रिये। सञ्जीविनि! त्वमपि वधूं शान्तिप्रभां अभ्यञ्जनपट्टवस्त्रधारणनवरत्नखचितभूषणालङ्कारादिना सिंहासनालङ्काराधिगमाय सज्जीकुरु।

सञ्जीविनी—५१. तथैव करोमि। (शान्तिप्रभाया अन्तःपुरं प्रविश्य यथोक्तं करोति)

५२ (महासभामण्टपे दिव्यरत्नखचितसिंहासने ज्ञानसूर्यं शान्तिप्रभां चोपवेश्य तीर्थोदकैः अभिषेकमन्त्रैश्च तावभिषिञ्चन्ति ब्राह्मणोत्तमाः महाराजमन्त्रिसचिवादयश्च। दिव्यवाद्यान्वादयन्ति-आतोद्यकाः। गायन्ति वनिताः। स्तुवन्ति वन्दिनः। शंसन्ति मागधाः। शुभमाशंसन्ति सर्वे जनाः)

---

४७. एवं शुभपरम्पराप्राप्तिः गुरुजनाशीर्बलेन भवतीति स्वपितरि सविनयं पितृभक्तिं प्रदर्शयति।

४८. मङ्गलस्नानादिकं कृत्वा पुरोहितानुमत्या सनियमः विध्युक्तानि होमादिशुभकार्याणि निर्वर्तस्वेति राजा पुत्रमादिशति।

४९. पितुराज्ञां शिरसि धारयन् कर्तव्यसम्पादनाय गच्छति कुमारः।

५०. वधूं शान्तिप्रभामपि समुचितवस्त्रभूषणाद्यलङ्कारैर्महिषीपदसंपादनार्हां कुर्विति स्वभार्यामादिशति जीवदेवः।

५१. तथैव करोमीति निर्गत्य अन्तःपुरं प्रविश्य यथोपदेशं सर्वं सम्पादयति सञ्जीविनी।

५२. "महासभामण्टपे दिव्यरत्नखचितसिंहासने ज्ञानसूर्यं शान्तिप्रभां चोपवेश्य तीर्थोदकैः अभिषेकमन्त्रैश्च तावभिषिञ्चन्ति ब्राह्मणाः"

पुरोहिताः—

स्वस्त्यस्तु राज्ञे नृपवर्य तुभ्यं राज्यस्य रक्षास्तु यशस्विनी ते ।
दीर्घायुरारोग्यसुसम्पदस्तु स्वेष्टार्थसिद्धिं कलयन्तु देवाः ॥२१॥

ज्ञानसूर्यः—५३ अनुगृहीतोऽस्मि ।

प्रद्योतः—

भासन्तां तव राज्यशासनपरास्सन्नीतयस्सौख्यदा
वर्तन्तां त्वयि राजभक्तिमहिता धर्माश्रितास्सत्प्रजाः ।
सेवन्तां पितृवत्सुवत्सलगुणं त्वां भृत्यवर्गाः प्रिया-
देश्वन्तां परदेवताकरुणया सर्वत्र सर्वे जनाः ॥२२॥

---

इत्यादिना पट्टाभिषेकाय यद्यद्विहितं यद्यदावश्यकं तत्सर्वं साधितमित्यव-गम्यते । "आतोद्यकाः" इत्यनेन गीतकनर्तकादयोऽपि गृह्यन्ते । ततः प्रचलति मङ्गलाशीः- जयाशीः- प्रशंसाशीश्च । यथा-पुरोहिताः वेदमन्त्रैरेवं प्रकारेणाशासते ।

स्वस्त्यस्त्विति-हे नृपवर्य ! - राजश्रेष्ठ ! राज्ञे तुभ्यं-राज्यधुरंधराय ते स्वस्त्यस्तु-समस्तमङ्गलं भवतु । राज्यस्य-मार्ताण्डदेशस्य ते रक्षा त्वया करिष्यमाणं राज्यशासनं यशस्विनी अस्तु-कीर्तिपात्रं भूयात् । दीर्घायुरा-रोग्यसुसम्पदस्तु-चिरकालिकमायुष्यं शारीरकमानसिकशान्तिः- सकलैश्वर्य-प्राप्तिश्च भवतु । देवाः- इष्टदेवता, कुलदेवतास्सर्वे स्वेष्टार्थसिद्धिं कलयन्तु-तव मनोरथान् सर्वान् सफलान् कुर्वन्तु । इन्द्रवज्रावृत्तम् ॥२१॥

५३. अनुगृहीतोऽस्मीति ब्राह्मणाशीर्वादान् परिगृह्णाति । वृद्धराजः प्रद्योतः पट्टाभिषिक्तं पौत्रमेवमनुशास्ति-

भासन्तामिति-तव राज्यशासनपराः-राज्यस्य शासनार्थं त्वयोद्दिष्टाः, सौख्यदाः- प्रजानुकूलकारिण्यः सन्नीतयः- श्लाघ्याः राजनीतयः भासन्तां-सर्वत्र निरन्तरायाः प्रकाशन्ताम् । त्वया एवं कृते, त्वद्देशे विद्यमानाः जनाः सत्प्रजास्सन्तः- स्तुत्यवर्त्मगाः सन्तः त्वयि राजभक्तिमहिताः तव विषये

ज्ञानसूर्यः—५४. कृतज्ञोऽस्मि ।

जीवदेवः—

श्रिया जुष्टं सर्वं भवतु सुखदं स्वाश्रितवताम्
  धिया युक्तं शक्तं वदतु हितदं त्वां परिजनः ।
त्वया लब्धं सत्यं लसतु यशसा भव्यकलितम्
  मया दत्तं राज्यं वहसि निभृतं श्रेष्ठमधुना ॥२३॥

---

राजभक्तिभरिताः धर्माश्रिताश्च - स्वस्वधर्मपालनपराश्च वर्तन्तां-भवन्तु । भृत्यवर्गाः-राजद्वारे नियुक्तास्सेवकजनाः पितृवत्सुवत्सलगुणं त्वां-सुतान् पितरो यथा तथा प्रजाः वात्सल्येन पालयन्तं त्वां प्रियात् सेवन्ता-प्रीति-पुरस्सरं तवाज्ञां पालयन्तु । सर्वत्र-अस्मद्देशे विद्यमानाः सर्वेजनाः-अखिलाः प्रजाः परदेवताकरुणया जगदीश्वरानुग्रहेण एधन्तां-सकलाभ्युदयैरभिवर्धन्ताम् । शार्दूलविक्रीडितं वृत्तम् ॥२२॥

५४. अनुगृहीतोऽस्मीति विनयेन प्रणमति ।

इदानीं जीवदेवो राज्ये अभिषिक्तं स्वसुतमेवमाशिषाऽनुगृह्णाति—

श्रियेति—स्वाश्रितवतां-त्वामाश्रितवतां त्वत्प्रजानामिति यावत् । सर्वं यद्यदभीष्टं तत्सर्वं श्रिया जुष्टं-सम्पत्करं सुखदं च भवतु-सुखकरं च भूयात् । प्रजाहितार्थं यद्यदपेक्ष्यते तत्सर्वं त्वं सम्पादयेति भावः । परिजनः-मन्त्रिसचिवामात्यलेखकगणकभृत्यादिसेवकवर्गाः त्वां प्रति यद्यदावेदितव्यं तत्सर्वं धिया युक्तं-सम्यगालोचितम् शक्तं-कार्यकारि हितदं प्रयोजनकरं यथा भवेत्तथा वदन्तु । अनेन भृत्यवर्गाः राजाज्ञापरिपालकाः हितैषिणश्च भवन्त्वित्यभिप्रायः द्योत्यते । त्वया लब्धं सत्यं-त्वयानुवर्त्यमाना सत्यपरिपालनधोरणी भव्यकलितं शुभोदर्केण युना यशसा लसतु-कीर्तिप्रदा प्रकाशताम् । अनेन सत्यधर्मपरिपालनरीतिरुपदिष्टा । मया दत्तं श्रेष्ठं राज्यं-अद्य मया त्वयि निवेशितं-एतावत्कालपर्यन्तमकलङ्कं परिपालितं अतः अनर्घमिदं राज्यं अधुना निभृतं वहसि-निश्चलमनस्कस्सन् इदानीं वहसि । मद्राज्यमिदानीं तवाधीनम्

ज्ञानसूर्यः-५५. गुरुजनानुग्रहः मम सर्वत्र शुभोदर्कसम्पादकः । कृतज्ञोऽस्मि ।

कलानिधिः—

वरगुणगणसीमा वेदशास्त्रार्थधामा
पितृकरकृतराजः पारिजातः प्रजानाम्
दिशतु तव हितार्थान् देवबृन्दं समोदम्
चिरमव तव राज्यं चारु कीर्तिं भजस्व ॥२४॥

ज्ञानसूर्यः—५६. मातामहस्याशिषमहं सातिशयं मन्ये ।

सुधांशुः—

माधवं त्वमुमाधवं भज सन्ततं निजसन्तति-
र्जायतां तव जायया सहजायतां सहजायतिः ।
राजशेखर राजतां तव राजनीतिजरञ्जनम्
जीव जीवज जागरो भव जीविजीवनजन्मने ॥२५॥

---

नीतम् । त्वद्राज्यमिह त्व स्थिरमनसावहन् पूर्वोक्तप्रकारण परिपालयेति पुत्रस्य पितुरनुशासनम् । शिखरिणीवृत्तम् ॥२३॥

५५. गुरुजनानुग्रहबलान्मम सर्वत्र कार्यसिद्धिर्भवतीतिविनयोक्तिः । राज्ञः कलानिधेराशीरेवम्—

वरगुण इति—त्वं वरगुणगणसीमा-श्रेष्ठगुणानामाश्रयः, वेदशास्त्रार्थधामा-श्रुतिस्मृत्युदितविधिवदाचारप्रचारनिपुणः, पितृकरकृतराजः- पित्राऽद्यदत्तस्य राज्यस्य वोढा, प्रजानां पारिजातः-पञ्चानां देवतरूणां मध्ये पारिजात इव त्वं प्रजानां सकलेष्टार्थप्रदः । ईदृशस्य तव देवबृन्दं-सर्वे देवाः- हितार्थान् दिशतु अभीष्टसिद्धिं कुर्वन्तु । तव राज्यं चिरमव त्वद्राज्ये बहुकालं सुस्थिरो भव । चारु कीर्तिं भजस्व-प्रशस्तयशसा प्रसिद्धो भव । मालिनीवृत्तम् ॥२४॥

५६. इदं गुरुजनेषु प्रीतिगौरवं व्यनक्ति ।

**ज्ञानसूर्यः—५७. श्वशुरकृतशुभा शंसनं जामातरि सफलं भवत्विति प्रार्थये। (इदानीं पुरुषजनाः यथा ज्ञानसूर्यमाशीर्भिः प्रशंसन्ति तथा स्त्रीजनाः ज्ञानसूर्यस्य पट्टमहिष्याः शान्तिप्रभायाश्शुभमाशंसन्ति। यथा-)**

---

इय सुधाशोराशसा—

माधवमिति—त्वं सन्तत माधव उमाधव च भज-त्वं विष्णुं शिवं च सर्वदा पूजय, तावकत्वेन भावय-न तु तयोरन्तर पश्येति भावः। जगत्सृष्टिस्थितिलयहेतुः परमात्मा एक एवेति भावनया भगवद्ध्यानपरो भव। त्वत्प्रजा अपि "यथा राजा तथा प्रजाः" इति न्यायेन यदा त्वामेवानुसरन्ति, तदा देवताविषयको मतकलहो विलयं याति। तेन राज्ये सर्वे ऐकमत्येन वर्तन्त इति बहुमतमतिनिरासायायमुपदेश.। तव जायया सह पत्नीसहितस्य-तव निजा सन्ततिः-प्रकृतिसिद्धा पुत्रसन्ततिः जायतां-भूयात्। वंशाभिवृद्धिरस्तु इति तात्पर्यम्। वैराग्येण गृहस्थाश्रमं मा परित्यजेति ध्वनिः। सहजा आयतिः जायतां-सर्वत्र सम्पदभिवृद्धिस्स्वभावाद्भवतु। यत्र राजा सुराजा प्रजाश्च सत्प्रजाः तत्र स्वभावेन सकलश्रेयोभिवृद्धिर्भवतीति तात्पर्यम्। हे राजशेखर!-राजाधिराज! तव राजनीतिजरञ्जन राजताम्-ते राजनीति पुरस्कृतं प्रजानुरञ्जनं सर्वत्र प्रसिद्धं भवतु। अन्येषामादर्शकं भूयादित्याशसा। हे जीवज-हे जीवदेवसुत जीवि-जीवनजन्मने-प्राणिनां जीवनकल्पनायैव त्वं जीव-प्राणान् धारय। तदर्थं जागरो भव तत्सम्पादनायाप्रमत्तो भव। त्वद्देशे सर्वे सुखेन जीविकां सम्पादयन्तु एकोऽपि दरिद्रो मा भूदित्याकूतम्। इदं पद्यं हरिचक्रमवृत्तनिबद्धम्। तल्लक्षणम्-"रात्सजौ जभरा विरुर्वसुदिग्यतिर्हरिचक्रमः"। इति।

५७. सुधांशोः प्रशंसा स्वस्मिन् सार्थिका भवत्विति प्रत्याशां प्रदर्शयति।

प्रभावती—

शान्तिप्रभे त्वं बहुभाग्यशालिनी त्वं ज्ञानसूर्ये भव भूतिकारिणी।
कान्तप्रमोदं तनु शान्तवर्त्मना भूया नितान्तं जनवत्सलाऽनिशम् ॥

शान्तिप्रभा—५८. महाराज्ञ्यास्सदुपदेशमनुपालयामि।

सञ्जीविनी—पतिसेवा निरता त्वं हितकार्यं कुरु मोदा-
त्तव देवा वितरन्तु स्थिरभाग्यं भुवि योग्यम्।
भव राज्ञी वरराज्ये कुरु सौख्यं सुजनाना-
मव कीर्तिं रविवंशे प्रथिता स्वा स्स्तुतवृत्तैः ॥२७

---

पितामही प्रभावती शान्तिप्रभामेवं प्रशंसति—

शांन्तीति—हे शान्तिप्रभे! त्वं बहुभाग्यशालिनी-अत्यन्तादृष्टशालिनी त्वं ज्ञानसूर्ये भूतिकारिणी भव-भर्तृहितचिन्तका भव। त्वं शान्तवर्त्मना भर्तृप्रमोदं तनु कदाचित्क्रुद्धमपि पतिं त्वं क्षमायुक्ता शान्तमार्गेणैव तस्य सन्तोषमभिवर्धयस्व। त्वं नितान्तं जनवत्सला भूया.-विशेषेण जनानुरञ्जनपरा भव। पुत्रवती स्वपुत्रे इव त्वं प्रजासु पुत्रवात्सल्य कुर्विति वध्वाः हितोपदेशः। इन्द्रवंशावृत्तम् ॥२६॥

तल्लक्षणम्—"स्यादिन्द्रवंशाततजैरसंयुतै." । इति।

५८. महाराज्ञ्या यदुपदिष्टं तदहं परिपालयामि।

श्वश्रूस्सञ्जिविनी स्नुषामेवमुपदिशति—

पतिसेवेति—त्वं पतिसेवानिरता सती-पतिमतानुर्गिनी भूत्वेत्यर्थः। मोदात् हितकार्यं कुरु-सहर्षं तस्य प्रियमेवाचर। देवाः-सर्वा देवताः तव भुवि योग्यं-तेऽत्र सम्भावितं स्थिरभाग्यं वितरन्तु-शाश्वतैश्वर्यमनुगृह्णन्तु। वरराज्ये त्वं राज्ञी भव-असत्पूर्वजैरुपभुक्तश्रेष्ठराज्येऽद्य ममस्थाने त्वं श्रेष्ठराज्ञी भव। सुजनानां सौख्य कुरु साधवो ह्यस्मत्प्रजाः तासां सुखापादककार्याणि राजमुखात् कारय-युक्तकाले त्वमपि तथा कुरु। कीर्तिं अव-एतावत्पर्यन्तं पूर्वाभीराज्ञीभिरार्जितां सत्कीर्तिं त्वमपि पालय। स्तुतवृत्तैः रविवंशे प्रथिता स्वाः-अस्मिन् सूर्यवंशे त्वं गुणशीलवृत्तैः प्रसिद्धा भव। गुणभूषावृत्तम्॥२७॥

शान्तिप्रभा—५९. मातृजनाशीर्मे मङ्गलसन्ततिमातनोति। कृतज्ञा भवामि।

चन्द्रिका—

सुमते भव सुमुखी जनपरिपालनविषये
स्वपतिर्यदि विमुखो बहुकृतितोऽस्ति तदुदये।
सकलापदि पतिमाश्रय हितदं निजसुखदम्
मम वर्त्मनि चर सद्मनि हृतछद्मनि वसतात् ॥२८॥

शान्तिप्रभा—६०. सर्वत्र भवत्या वृत्तमनुसरामि।

---

५९. श्वश्रूं मातृभावनया एव वदति। अननास्याः सौजन्य सौहार्दं च स्पष्टं भवति।

शान्तिप्रभायाश्चन्द्रिकया कृता प्रशंसा—

सुमत इति—हे कुमारि सुमते ! - अयि बुद्धिमति ! जनपरिपालनविषये प्रजानां बन्धुजनानां च संरक्षणविषये सुमुखी भव त्व प्रसन्ना भव। कदाचित्स्वपतिः बहुकृतिनः-कार्यबाहुल्यात् यदि तदुदये विमुखोऽस्ति-प्रजारक्षणकार्यं यदि कथंचिदुपेक्षते तदा त्वं सुमुखी भव-प्रसन्ना भूत्वा तत्कार्यं निर्वाहय। सकलापदि सर्वेषु आपत्समयेषु हितदं निजसुखदं पतिं आश्रय-प्रियकरस्सुखकरश्च यस्तव भर्ता तमेव परमगतिकत्वेन भज। न कदापि स्वार्थहितैषिणी तं त्यजेति भावः। मम वर्त्मनि चर-मम मार्गमनुचर। हृतछद्मनि सद्मनि-निष्कपटवति गृहे वसतात्-वस। अथवा हृतछद्म यथा-तथा गृहे निवसतात् निवासं कुरु। करिणी वृत्तम् ॥२८॥

६०. त्वं यथा सर्वमान्यतया वर्तसे तथाहं वर्त इत्यभिप्रायः।

सुप्रभया मात्रा एवमाशासिता दुहिता—

अङ्गनेति-अयि अङ्गनामणे-हे नारीमणे ! मङ्गलाङ्गि-शुभाङ्गि त्वं मङ्गलैस्सङ्गता भव-समस्तमङ्गलभाग्भव। मङ्गलाङ्कररङ्गवत्पतिसङ्गतः- मङ्गलस्वरूपो यो रङ्गः-रङ्गनाथः-पदैकदेशे पदग्रहणं जगन्नाटकरङ्गस्य प्रभुः महा-

सुप्रभा—

अङ्गनामणिमङ्गलाङ्गि सुसङ्गता भव मङ्गलै-
    र्मङ्गलाङ्गकरङ्गवत् पतिसङ्गतस्तनु मङ्गलम् ।
इन्दिरा हरसुन्दरी विधिसुन्दरी त्वयि सुन्दरि !
    स्यन्दयेदिह सुन्दरानभिनन्दनान्दशनन्दनान् ॥२९॥

शान्तिप्रभा—६१. एतादृशी खलु जननीजनस्याशीः। त्वं प्रियवत्सला त्वदाशीर्मे मङ्गलमनवरतमातनोति ।

सर्वे—६२. हे जीवदेव ! किमन्यदपेक्षसे ?

जीवदेवः-६३. सर्वमपेक्षितमत्र समधिगतं भगवदनुग्रहेण, भवदीशिर्बलेन च। इतोऽपि किमन्यदस्त्यपेक्षितव्यम्। तथापीद-मस्तु-(भरतवाक्यम्)

---

विष्णुः स इव स्थितस्य तव भर्तुस्सहवासेन मङ्गलं तनु । सर्वेषामित्यध्याहारः । "नाविष्णुः पृथिवीपति" रित्यादिना विष्णुसाम्यं समुचितमित्यवधेयम् । हे सुन्दरि ! अयि कोमलाङ्गि ! इन्दिरा-लक्ष्मीः, हरसुन्दरी-गौरी, विधिसुन्दरी-सरस्वती च, सुन्दरान्-रूपलावण्ययुक्तान् अभिनन्दनान्-गुणशिलवृत्तैरभिनन्दनकरान् दशनन्दनान्-दशसंख्याकान् पुत्रान् त्वयि-त्वद्गर्भात् स्यन्दयेत्-उत्पादयतु । देवताप्रसादेन तव गर्भे गुणाढ्याः दश पुत्राः जायन्तामिति तात्पर्यम् । "दशास्यां पुत्रानाधेहि"-इति श्रुतिवचनानुसारेण इयमाशीः कृतेति ध्वनिः । हरिचक्रमवृत्तम् ॥२९॥

६१ प्रायशः जनन्यः एवमेव दुहितृः आशासते । मयि तव प्रीतिरन्यादृशी । तवाशीर्बलेनाहं पतिमती पुत्रवती च भवेयमिति प्रत्येमि । एतदर्थं अहं ते कृतज्ञा भवामीति पुत्र्याः प्रेमभरितविनयोक्तिः ।

६२ किमन्यदिच्छसीति नायकं प्रति बन्धुजनानां प्रश्नः ।

६३. परेशप्रसादेन-भवतां द्विजादीनां बन्धुजनानां कृपाविशेषेण च अपेक्षितं स॰ समधिगतम् । सर्वाभीष्टं फलितमिति भावयामि । इतोऽपि वाञ्छितव्यं न किमपि विद्यते । तथापीदं लोककल्याणमपेक्ष्यते—

आर्योद्भूतकलावितानमधुना भूयोऽपि सन्धार्यता-
मायुर्वेदपरप्रभावमहिमा जेगीयतां भूतले ।
आयुर्दीर्घमुदात्तबुद्धिरतुला सम्पाद्यतां सज्जनै-
रार्यैर्भूतिपरम्परात्र सततं ज्ञानेन सम्भुज्यताम् ॥३०॥

---

आर्येति—आर्योद्भूतकलावितानं-सनातनैः प्राचीनार्यैः ये ये शिल्प-वैद्यचित्रकवितासङ्गीतकलादिलौकिकग्रन्थाः- धर्मशास्त्रादिस्मृतिग्रन्थाः- अर्थ-शास्त्रादिराजनीतिप्रधानग्रन्थाः- तेषां प्रकरः, अधुना भूयोऽपि सन्धार्यतां-अधुनेत्यनेन एतावदवधि तन्नष्टप्रायमेव पुनरपि तैरेवोज्जीव्यतामित्यर्थः । आर्यविद्यामूलानि ज्योतिश्शास्त्रादीनि देशान्तरेष्वप्यद्य यथा प्रथां प्राप्तानि तथा आर्यैरेवात्र पुनः प्रसिद्धिं नीतानि भवन्त्विति तात्पर्यम् । आर्यसंस्कृतिः तेजोहानादार्यावर्ते, अवनतिभागभवत्तीदानीम् । तत्तेजोबलं पुनस्सम्पाद्य अवनतिमुत्सार्य समुन्नतिं प्राप्नुवन्त्वार्या इति कविहृद्गतभावः । भूतले-लोकेषु आयुर्वेदपरप्रभावमहिमा-चरकधन्वन्तरिसुश्रुतादिकालेषु आयुर्वेदस्य सर्वो-त्कृष्टःप्रभावः- शक्तिः महिमा, प्रयोजनं यथा आसीत् तथैव पुनः जेगीयतां-महोन्नतिमारूढस्सर्वत्र वरीवर्ततामित्याशयः । दीर्घं आयुः- चिरायुष्कत्वं अतुला-असमाना उदात्तबुद्धिः- उदारमतिश्च सज्जनैः- सर्वैरास्तिकैः आर्य-संस्कृतिसमुन्नतिरतैः सम्प्राप्यतां इत्यभिप्रायः । आयुर्वेदोन्नतिकाले जनाः दीर्घायुषः भूतहितचिन्तया उदारबुद्धयोऽभूवन् । कारणान्तरैरिदानीमनेके तत्प्रतीपवर्तिनो भवन्ति । पुनः पूर्वदशासम्पन्ना भवन्त्विति प्रत्याशासूचकोक्तिः । आर्यैः प्राचीनार्यवंशोद्भवैः अत्र-अस्मिन् लोके सततं-सर्वदा ज्ञानेन-वेदशास्त्रकलाप्रभावज्ञानवैभवेन भूतिपरम्परा - सकलैश्वर्यसम्भूतनिरतिशयसुखं सम्भुज्यता-अनुभूयताम् । सुखसम्पादकसर्वैश्वर्ययुक्ता भवन्तु ते इति तात्पर्यम् । शार्दूलविक्रीडितवृत्तम् ॥३०॥

सर्वे—६४. तथास्तु तथास्तु ।

— इति निष्क्रान्तास्सर्वे —

इति श्री वेङ्कटरमणार्यविरचिते 'जीवसञ्जीविनी'नाटके

पञ्चमोऽङ्कः

॥ समाप्तमिदं नाटकम् ॥

जीवसञ्जीविनीनाम नाटकं रचितं मया ।
वेङ्कटरमणार्येन जीयादेतन्महीतले ॥

विक्रमाब्दे (कलि ५०४१) शुचौ मासे कृष्णपक्षद्वितीयके ।
दिवसे भानुवारेऽस्मिन् संपूर्णासीदियं कृतिः ॥

— समस्तसन्मङ्गलानि भवन्तु —

---

६४. एतद्भरतवाक्यार्थं सर्वेऽनुमोदन्ते ।

— इति तृतीयदृश्यव्याख्या —

इति श्री वेङ्कटरमणार्यविरचिते जीवसञ्जीविनीनाटके
पञ्चमाङ्कस्य स्वेनैवकृता रसोल्लासिन्याख्या व्याख्या समाप्ता ।

— समाप्ता च सम्पूर्णनाटकव्याख्या —

॥ शुभं भूयात् ॥

विक्रमाब्दे मार्गकृष्णतृतीयाभौमवासरे ।
या रसोल्लासिनी व्याख्या स्वीया पूर्णा जयत्यसौ ॥

— शुभं भवतु —

---

( Appendix I )

# प्रथमः परिशिष्टः

A

## श्री वेङ्कटरमणीयां सम्कृतग्रन्थावलिमधिकृत्योप· लब्धाः केषांचित्पण्डितानामभिप्रायाः ।

---

श्रीमत्परोपकार श्रीसुब्रह्मण्यसन्निधानसद्गुरुपीठमहाविद्वान् ज्योतिष-रत्नाकरं श्रीमहामहोपाध्यायश्रीशिवसुब्रह्मण्यराजयोगि सिद्धान्तिशिवशंकर-शास्त्रिसमनुगृहीतमंगळानुशासनम् । स्वाशयानन्दसूक्तिः श्री कुमारस्वामिशैले वेङ्गळूरु. (८-१-३९)

१. स्तुतिकुसुमाञ्जलिरेषा श्रुतिहितचितभावरमविशेषाऽशेषा ।
नुतिपदसरणिरदोषा गतिदेह परत्र चेति सज्जनभाषा ॥

२. परिवतनकवितायाश्चातुर्य भावपुष्टिमाधुर्यम् ।
कमलाजयरूपकजा परिपाटी सरसवाग्वधूटीपेटी ॥

३. समवृत्तसरसरचना कमनीया कविजनेषु कल्याणकरी ।
वेङ्कटरमणार्योदितसांकल्पिककृतिषु सूक्तिरुचितोक्तिस्स्यात् ॥

४. विमर्मत्वाद्दतविदुषा शिवशंकरनामकेन सत्वजुषा ।
विनयविवेकत्वपुषा शिवमस्त्विति विरचिता प्रशंसैषा ॥

---

# प्रशस्तिपत्रम् ।

---

१९४४ क्रिस्ताब्दीयाक्टोबरमासस्य सप्तत्रिंशदिवसीया लिपिरेषा । श्री कालीपदतर्काचार्यस्य (महामहोपाध्यायस्य) कलिकताराजकीय संस्कृत-महाविद्यालय-प्राच्य विभागीय-प्रधानाध्यापकस्य ।

सुललितरीतिपरीतः परितप्तानां मुदां दाता ।
काव्यसमुच्चयग्रन्थः कविना दत्तो विलोकितोऽस्माभिः ॥

श्रीमद्वेङ्कटरमणः कविरस्य जयत्यतिप्राज्ञः ।
वैदिकविषयालम्बं य इदं व्यदधान्महागुणं काव्यम् ॥

काव्ये चात्र पवित्रा रसगुणचित्रा प्रिया रीतिः ।
जनयति मनसो ह्लादं सुनिपुणमनसां सदा निराबाधम् ॥

सहजां कविताशक्तिं कविरयमेति प्रतिश्लोकम् ।
यस्मादस्य निबन्धाः सौष्ठवमापुः समन्ततो दीप्तम् ॥

विद्याप्रकटनहेतोरत्र न किञ्चिद् वृतं विनैवार्थम् ।
सौष्ठवबीजं यद् यत्रापि च तत्तद् धिया परित्यक्तम् ॥

इत्थं वैदिकविषयानवलम्ब्य ललितकाव्यनिर्माता ।
कविरतिविरलो लोके वचनं यस्य प्रियं सतां ग्राह्यम् ॥

एतत्काव्यविमर्शाद् वैदिकविषये क्वचिज्ज्ञानम् ।
आयासेन विना स्यात् काव्यं भजतां सदा सनिर्बन्धम् ॥

नवयुवतीव रसाढ्या सगुणा सालङ्कृतिः प्रियाकारा ।
रचनात्र सप्रसादा सुखाय भवति स्वयं समायाता ॥
सम्प्रति सुरभाषाया विषमे प्राप्तेऽभितो दशाभेदे ।
ईदृशकविताशक्तिं विरलां लोके समालोके ॥
उमादर्शकाव्ये चितो दर्शनार्थः, कवित्वप्रकर्षोऽपि तत्रातिकृष्टः ।
उमादर्शकाव्यं ततः सत्कवीनां मनस्तत्त्वसन्तर्पणं भूरि जीयात् ॥
रीत्यानया दयितया यदि सत्कवीनां यत्नः कृतौ भुवि भवेदिह भाग्ययोगात् ।
गीर्वाणवाङ् न खलु जीवति सा मृतेति लुप्तो भवेद् वितथ एष तदा प्रवादः ॥
एवं रीत्यानेककाव्यप्रणेता दीर्घं जीव्याद् वेङ्कटः प्राज्ञरत्नम् ।
प्राचीनानां येन धारा कवीनां नो विच्छिन्ना सम्प्रदायं विलुम्पेत् ॥

शुद्धिपत्राद् बहि· किञ्चित् स्खलितं क्वचिदीक्ष्यते ।
तत्र ग्रन्थकृता दत्तमवधानमिहार्थ्यते ॥ इति

॥ श्री· ॥

**सि आर. रामचन्द्र आचार्य, बि.ए ,**
सिरस्तेदार, मुन्सिफ्कोर्ट, (रिटैर्ड),
नं. ३६ व्यासराव स्ट्रीट,
कुम्भकोणम्

अचिरादद्राक्षमहं वेंकटरमणार्यकोविदाख्यस्य ।
काव्यचतुष्टयलसिता कृतिमेतां सर्वविद्वदभिनन्द्याम् । ॥१॥
पद्यमयी कृतिरेषा श्राव्यग्रन्थेषु माननीयाऽऽस्ते ।
गुणयुक्तपदविभूषा रीतिर्यस्या लसत्यनिन्द्यार्था ॥२॥
सुव्यक्तार्थपदात्र श्लाघ्या शैली सुशब्दसंश्लिष्टा ।
काव्यालंकृतिविहिता शोभा यस्याश्चकास्ति सर्वत्र ॥३॥
काव्यानामेतेषां वस्तून्यात्तानि वेदशाखाभ्यः ।
इतिहासपुराणेभ्यः कतिपयकविभिर्हितानि काव्येषु ॥४॥
कविरेष तेषु मान्यः चातुर्यात्तत्कथासुविन्यासे ।
काव्यचतुष्टयमेतत् मान्यं संसत्सु यत्सतां नित्यम् ॥५॥
श्रितजननुतनामशैललक्ष्मी-
नृहरिपराध्यवरप्रसादयोगात् ।
कविकृतिलतिका सतां हृदीयं
विलसतु हृद्यफला च पुष्पिताग्रा ॥६॥
इत्येवं संस्तुतं काव्यचतुष्टयमिदं मुदा ।
कंभालुरामचन्द्रेण कुंभघोणनिवासिना ॥७॥

कुंभघोण
२५-८-४४

कुं. रा. रामचन्द्राचार्यः ॥

श्रीमद्भिः निवृत्त तहशील्दार्पदैः रमाकांताचार्यैः
बापट्ल १-१-१९४४
प्रशंसारत्नपञ्चकम्

---

श्रीवेङ्कटरमणकवे ! तावककविता स्वभावरमणीया ।
विद्वत्कविराण्मानससरोवरमरालिकेव सञ्चरति ॥

आम्नायगर्भजनिता यज्ञीयामलपरिमलोल्लसिता ।
ललितपदन्यासध्वनिरुचिरालंकारसुभगतन्वंगी ॥

भवदीयकाव्यसमुदयनवविकचशिरीषकुसुममञ्जुलता ।
तत्रोक्तकथादर्शिततारोज्वलकान्तिमाशु लघयति ॥

मृतकल्पानां दृक्पथि न कदा साक्षात्करोति गीर्वाणी ।
अमृतमयी सुरवाणी नैगमवेणी कलाढ्यसुश्रोणी ॥

जयतु भवदशेषज्ञानविज्ञानवाटी
प्रवचनपरिपाटी शारदारत्नपेटी ।
जयतु ऋषिकुमारागाधवेदानुरोध-
प्रसृमरबहुगाधामूल्यदिव्यप्रबोधः ॥

युष्मत्काव्यरसास्वादात् धन्योऽस्मीति समर्पये ।
काश्यपोऽहं रमाकान्तः प्रशंसारत्नपञ्चकम् ॥

---

मंजूलाल दवे प्रिन्सिपाल
श्यामसुन्दरम्म्यमोरियल कालेज्
चान्दोसी. यु. पि. ८-११-३९

---

श्री वेङ्कटरमणार्येण विरचिताः कमलाविजयसर्वमप्रवृत्तप्रभावस्तुति-
कुसुमांजलिनामकाव्यो ग्रन्था मया विहङ्गमदृष्ट्या परिशीलिताः

परीक्षिताश्च ।ताननुशील्य नितान्तमन्तस्सन्तोषमन्वभूवम् । तेषु कमलाविजय नामैकमद्वितीयं नाटकमस्ति । काव्येषु नाटकमेव रम्यतरं काव्यमिति विदितमेव सर्वेषां सहृदयानाम् । यद्यप्येतत् "आल्फ्रड् टेनिसन्" विरचितस्य "कप्" नामकस्य नाटकस्य परिवर्तनमेव, किन्तु तद्दुःखान्तमासीत् । एतत्तु सुखान्तत्वपूर्वकं भारतीयनाटकाचारसमन्वितं स्वप्रतिभाकल्पितनूतनविषयपरिवर्धितञ्च सुष्ठु निर्मितमिति विदांकुर्वन्तु काव्यप्रणयिनो विद्वांसः । अत्रागता अबाधितरसास्वादनालङ्कारा. एतत्पठतां चेतसि कमप्यनिर्वचनीयमानन्दमुद्भावयन्ति । अत्रत्यः प्रसादगुणस्तु कालिदासमन्वीकृतपरिपाटीमनुसरति । अत एवैतत् संस्कृतप्रणयिविद्यार्थिनां हितं विधास्यतीति निर्विवादमेव ।

सर्वसमवृत्तप्रभावस्तु छन्दोविषयको ग्रन्थः "छन्दः पादौ तु वेदस्येति" छन्दः शास्त्रस्य साहित्यरसिकाना कृते महदुपयोगित्वमिति विदितमेव सर्वषाम् । यद्यपि छन्दश्शास्त्रे, वृत्तरत्नाकर-छन्दोमंजरीत्यादयो बहवो ग्रंथास्सन्त्येव, किंतु पुनरपि ह्यस्मिन् ग्रन्थे एकवर्णात्मकवृत्तमारभ्य षड्विंशतिवर्णात्मकवृत्तं यावत् सर्वेषामपि वृत्तानां बहूनि सरळानि स्वप्रतिभया विरचितानि नूतनान्युदाहरणानि संयोजितानि सन्ति । एतदतिरिक्तं ग्रन्थकर्त्रा स्वकृतोपोद्घाते छन्दोमाहात्म्य गुरुलघुज्ञानोपायं वृत्तस्वरूपम्, वृत्तानां प्रयोग इत्यादीनि बहूनि वस्तूनि सम्यगुपवर्णितानि सन्ति । एतस्यावलोकनेनानुशीलनेन च विद्यार्थिनो महालाभमधिगमिष्यन्ति इत्याशास्यते ।

"स्तुतिकुसुमांजलिः" ईश्वराराधनविषयको ग्रन्थः । परमपदप्राप्त्यर्थमुद्भवस्थितिलयकारिणः परमपितुः परमात्मनः प्रसादनार्थं वा, ज्ञानध्यानादिसाधनानां मध्ये स्तुतिरपि एकं परमं साधनमस्ति । अस्मिन् ग्रन्थे प्रकृतिपुरुषादिविभिन्नपदवाच्यस्य परमात्मनो द्वैततत्वमुद्भावयन्त्यश्चतस्रो देवताप्रार्थनादय एकादश सुब्रह्मण्यादयस्स्तुतयः सरससरळमधुरत्वादिरूपेणास्तिकजनाना चेतस्यमंदमानन्दमुत्पादयन्ति । एतदुपर्युक्तग्रन्थत्रयमनुशील्य सर्वे विद्वद्वराः परमानन्दमनुभविष्यन्तीति शम् ।

अ. कुप्पस्वाम्यार्यः (अय्यर्)

संस्कृतपण्डितः। (राजकीय महापाठशाला) गवर्नमेण्ट कालेज

(कोयमुत्तूरु)

१३-११-१९३९

आर्याः अभिरूपमणयः। सन्तु नमांसि भूयांसि। दृष्टा भवत्पत्रिका। प्राप्तं च सदयं प्रेषितं पुस्तकानां त्रयम्। कृतज्ञोऽस्मि।

मनोहरसुमनोगुम्भित स्तुतिकुसुमाञ्जलिर्वाचित. चित्तवैकल्यं व्यपोह्य मनस्सशान्तिमातनोति। भक्तिं च द्रढयति।

समवृत्तप्रभावो भवता प्रतिभा प्रकटयति। अन्ते निबद्धा अनुबन्धाः खलु विविधवृत्तकान्तारपाथोधिमवगाहतां नितरामुपकुर्वन्ति।

अभिनववस्तुरचनालंकृत कमलाविजयनाटकं मनो विनोदयति। शुभोदर्कमिदं नाटकं भारतीयनाटकलक्षणलक्षितं मंजुळपदनिबद्धं सादरं पठितं मया नितान्तमानन्दमजनयत्।

---

श्रीमती ज्योतिर्मयी भारती काव्यव्याकरणसांख्यतीर्था,

चट्टग्रामः (बेङ्गाल्)

जगत्पुराश्रमः १३४६ वङ्गाब्दीयसौराश्विनमासस्य

षड्विंशदिवसे (१३-१०-३९)

परमसम्मानास्पदानां श्रीमतां वेङ्कटरमणार्यमहोदयानां सविधे ससमादरसंभाषणानंतरमेतदग्रे निवेदनीयम्।

महाभागाः!

समासादितं सांप्रतं मया भवतां स्तुतिकुसुमाञ्जलिः-सर्वसमवृत्तप्रभावः-कमलाविजयनाटकं चेति निबंधत्रयम्। ममवलोकिना च तत्र तत्र निबन्धानां

सरसभावशब्दविन्यासवैदग्धी। यदेतेषु भवन्तः-पुरातनगीत्यनुसारेण स्वलेखनीं रसपरिवेशने नियोजितवंतः, मन्ये तेन निरीक्षकाणां सर्वेषामेव सा स्वान्तं समाकर्ष्टुमलं भवितेति। निबन्धान्तरमपि भवतामायतौ संस्कृतभाषाकोविदानां नयनगोचरीस्यादिति नेयमन्याय्यकल्पना।

यतश्चैवमादिवचनजातमनिशमेव भवन्निबधगुणसंदोहप्रकाशने, धार्ष्ट्यमेव वा प्रकटयिष्यति नः समालोचकपदवीमारुरुक्षुशेमुषी। ततस्तु तत्पथे पदमव्यापारयन्ती भवदुपायनग्रहणेन चिरायाधमर्णायमानाया गीर्वाणवाणीपरिचारिकाया मे तन्वी लिपिकेयं ग्रंथरसास्वादनानन्दवार्त्तां भवद्भ्यो विज्ञापयतु। कृत भवदनर्घसमयव्ययविधायिवाग्वितानेन। इति शम्।

---

## नागेशशास्त्री मुख्याध्यापकः।

श्री शंकराचार्यसंस्कृतपाठशाला, धारवाड.

नूनं सातिशय धिनोति नश्चित्तं लौकिककार्यधूर्वहाणामपि भवतां निरंकुशं संस्कृतभाषाप्रभुत्वम्। नाटके संविधानसौष्ठवं वृत्तप्रभावे बालबोधनक्षमा मधुरतरा शैली कुसुमांजलौ ललितपदवेद्यस्तत्तद्देवतालंबन' शुद्धो भावश्च समाकर्षन्त्यन्तरंगं पठितॄणाम्। सर्वथा समादरणीयतां भजतु जनानामेतत्प्रबंधत्रयम्, भवदीयपरिश्रमश्च फलेग्रहित्वमित्याशास्महे।

---

## हाराणचन्द्रभट्टाचार्यः

राजकीयसंस्कृतमहाविद्यालयः, कलकत्ता.

१०-१०-३९

अस्मिन्नतिदारुणे काले प्रायेण सर्वेषां भारतीयजनानां चित्तानि पाश्चात्यसभ्यताप्रभावविमथितानि जातानि ; स्वदेशभाषानुरागश्च विलुप्तः।

परं तु सांप्रतं भवादृशानां संस्कृतवाङ्मयानुरागोऽतीव प्रशस्तियोग्यो दृश्यमानोऽस्माकं प्रमोदभरं नितरामाविर्भावयति ।

भवदीया सरस्वती सुमधुरा सुप्रसन्ना चेति सर्वेषां सहृदयाना हृदयमवश्यमावर्जयिष्यतीति मदीयो विश्वासो न कदाचिद्विफलमेष्यति । विदुषामनुग्रहाकांक्षी ।

---

मैसूरु. संगीतशास्त्ररत्न

२८-११-३८ के. वासुदेवाचार्यः

ससौहार्दं युष्मत्प्रेषितपुस्तकानि सावधानेनावलोक्य तत्रत्यसुललितपदविन्यासादिकं च विलोक्य नितरां मुमुदे । इमं चैकं विषयं समावेदयितुं त्वरते मे मनः । पुस्तकेष्वेतेषु विद्यमानस्तोत्ररूपपद्यानि कानिचित् संगीतरूपेण गातुं साधु वर्तन्ते । गायतां श्रोतॄणां च मनोहराणि भवन्तीति विद्वज्जनपदानुयायी ।

---

आस्थानविद्वान् न्यायतीर्थः काव्यतीर्थश्च ।

**के. जिनराज शास्त्री.**

श्रवणबेळगोळ (२४-८-३९)

भवन्महामतिमथितविद्यासागरोद्धृतामृतं ग्रन्थत्रयमास्वाद्य आनन्दसागरनिमग्नोऽहं ततो निस्सर्तुं न पारये इति आवेदयितुं तुष्यतितरां मे चेतः। गीर्वाणवाण्यामितोऽपि महत्कृतीः विरचय्य समस्तविद्वत्परिषत्स्तूयमानकीर्तिपूरितभुवनोदरा आयुरारोग्यधनसमृद्धिभाजः चिरं भारतभूमिमलंकुर्वन्तु भवन्त इति करुणाकरपरमेश्वरसन्निधौ प्रार्थये ।

---

श्री शृंगेरि जगद्गुरुसंस्थानम्. गुरुसेवाप्रवीण
कालटी (३-८-३९) यन्. श्रीकण्ठ शास्त्री.

भवद्भिः सम्प्रेषितं स्वकर्तृकं 'सर्वसमवृत्ताख्यग्रन्थं' यथाशयं भवतां तत्रभवता गुरुवराणां सन्निधौ समर्पितम्। श्री श्रीगुरुवरा अपि सादरं तत्र तत्र ग्रंथस्य रीतिं सारल्यं भवत्कौशल तेन गीर्वाणभाषाध्येतॄणा संभाव्यमानप्रयोजनं च प्रत्यक्षीकृत्य संतुष्टान्तरंगाः अन्वगृह्णन्भवत' इत्यावेदयितुमानन्दतुंदिलितोऽस्मि।

---

चामराजनगर, आस्थानविद्वान् ज्योतिर्विद्वान्
१९-१-३९ सिद्धान्ति **तम्मय्यशास्त्री**

तत्रभवद्भिर्भवद्भिः कृपापूर्वकं प्रेषितोमादर्शकमलाविजयनाटकसर्वसमवृत्तप्रमावस्तुतिकुसुमांजल्याख्यग्रन्थचतुष्टय सादरमवापि। अतीव सन्तोषमेति मच्चेतः। तत्रस्थ. स्तोत्रग्रन्थो निगमांतमारगुंभितस्सरसशैल्यालंकृतः अपूर्वपदनिचयचयः अपूर्वपदव्याख्यासमलंकृतश्च राजते। इतरान्ग्रंथांश्च सावधानेनालोकयिष्यामि।

शैशवेभ्यस्तविद्यानां यौवने विषयैषिणां। वार्धके मुनिवृत्तीनामित्यादिकाळिदासोक्तेः आदर्शीभूता भवन्तः लोकोपकृत्यै ग्रन्थावलोकनरचनादिकार्यपरम्परासु निष्णाता' कृतकृत्याः खलु। एवं लोकोपकारकृद्भ्यो भगवान् वः आयुरारोग्यादिकं दत्वा पालयत्विति आशास्तेऽयं जनः।

---

**एम्. रामकृष्णभट्**
आर्यभाषाध्यक्षः संस्कृतोपाध्यायश्च,
१३-१२-३९ सेंट्. जोसफ्स कालेज बेङ्गळूरु.

अयि महाभागाः, समासादितं मया ग्रन्थत्रयं सदयं भवद्भिः प्रेषितं कतिपयदिनेभ्यः पूर्वम्।

भवद्भिर्विरचिताः ग्रन्थमणयो विपश्चितां कर्णिका भवितुमर्हन्तीति बाढं विश्वसिमि। यतस्त्रिष्वपि मधुरिमा शैल्याः, गरिमा वस्तुनः महिमा च प्रतिभायाः सर्वांगीणपरिपोषचणोऽञ्जसा प्रदर्शितः। तत्रत्यशय्या पाकरीति-गुणरसोत्कर्षः समाकर्षति मनांसि सहृदयानाम्।

'सर्वसमवृत्तप्रभावे' प्रतिभोन्मेषो दरीदृश्यते। स्वोपज्ञं विपुलमुदाहरणं च समेषां विद्यार्थिनामध्यापकानां चोपयोगाय समीचीनतया न्यास्थन् भवन्तः। ग्रन्थान्ते प्रदर्शितः प्रस्तारक्रमः पाश्चात्यानामपि विपश्चितां सशिरःकंपां श्लाघामधिगच्छेदित्यत्र नास्ति संशयलेशोऽपि। तत्र गणितज्ञानपूर्वकं भवद्भिरपूर्वा विस्मयजननी विद्वद्धितकारिणी संशोधनक्रिया व्यधायि। स्तुतिकुसुमांजलिरपि रसवत्पदोल्लासेन रुचिरेण गेयपद्यवृन्देन सहृदयस्य चमत्कृतिमातनोति। आस्तिकानां देवताभक्तिं च द्रढयति। दर्शनतत्त्वसारांश्च बोधयति बालान्।

'कमलाविजयनाटकम्' आलंकारिकसमयमनुसृत्य भवद्भिः सुखपर्यवसायि कृतम्। नैतत्संस्कृतसाहित्यविदुषां न शोभामावहति। अत्रस्थाः पद्यभागाः गद्यभागाश्च सुललितपदनिबद्धाः द्राक्षापाकं वैदर्भीरीतिं कैशिकीवृत्तिं च साधु प्रकाशयन्ति। लोकवृत्तानुसारि पाश्चात्यरूपकाणां दुरंतानामपि गीर्वाण्यां वाण्यां विना विपरिणामं विन्यासः- लक्षणविरुद्धोऽपि- भगवत्याः सरस्वत्या उरोजमुक्ताहारो भवेदिति संभावयामि। इदं केवलं। मदीयं वैयक्तिकं मतम्। मनीषिणामत्र विषये विप्रतिपत्तिः स्यादेव।

भवतां कवित्वमाधुनिकानां संस्कृतपरिपंथिनां प्रत्ययोत्पादकं बलवदुत्तरं भवति। यथा गीर्वाणी भाषा नाद्याप्युपरता। किन्तु सर्वाभरणभूषिता प्रियंवदा तरुणीव सहृदयान् संमोहयत्युज्जीवयति च।

सारस्वतसेवानिरतानां लोकोपकारगृध्नूनां भवतामाधिव्याधिरहितं सुखैकतानं दीर्घमायुरस्तु भगवतो राधाननांबुरुहभृङ्गस्य गोपालपाकस्य कारुण्येनेति मनसा आशासे।

## विश्वेश्वरनामपण्डितः, जोधपुर.

२७-६-४४

काव्यसमुदयः ।

अयं शिक्षाप्रदप्राचीनकथामयः काव्यचतुष्टयात्मको ग्रन्थः कस्य नाम सहृदयस्य हृदयं नाह्लादयेत् ? श्रीमता कविवरेण श्री वेङ्कटरमणार्यमहोदयेनैनमारचय्य सरलया भाषयातीवोपकृतः संकृतसाहित्य सौधं प्रविविक्षुच्छात्रवर्गः । विषमस्थलदिपिका दीपिकावच्च टिप्पन्यपि स्थाने कृताऽमुनैव महाभागेन । प्रशस्योऽयं यथालक्ष्यं संपादितो यत्नः ।

सोऽयं निबन्धुः प्रयासः सफलो भूयादित्याशासे ।

---

## सी. कुन्हन् राजा.

युनिवर्सिटि आफ् मद्रास्, तिरुवल्लिकेणि

८-८-४४

प्रसीदन्तु तत्रभवन्तः । तत्रभवद्भिः प्रेषितः काव्यसमुदयाख्यो ग्रन्थः अद्य मामागच्छत्; कालविलम्बं विनैव अवहितेन मया पठितश्च । एतादृशेषु ग्रन्थरत्नेषु इदानीमपि विरच्यमानेषु संस्कृतभाषा मृतेति किमिति वार्ता प्रायेणैषु कालेषु प्रसरतीति न वेद्मि । इयमेव काचनोपपत्तिः मे प्रतिभाति । मृता एव स्वर्गे वसन्ति । इयं च गैर्वाणी स्वर्गोत्था भाषा भवादृक्षिभिः प्रयुक्ता भूमावपि केवलं स्वर्गे इव विराजते इति स्वर्गसंबन्धात् भ्रान्त्या मृतत्वभाषणं संजातम्-इति । पद्यानि सर्वाण्यपि मधुराणि । शुद्धान्येव पदानि स्फुटव्युत्पत्तीनि च । ललिता ओजःस्विनी च वाक्यघटना । एवं च लघ्वी टीका अतिमन्दधिषणैरेव अपेक्ष्यते । बहून्येतादृशानि काव्यरत्नानि उद्धर्तुं चिरं जीवन्तु तत्रभवन्त इति आशंसनया ग्रन्थप्रेषणे कृतज्ञतया च विरमामि विधेयः ।

## पि. नारायणभट्टशर्मा.

कासरगोडु ।

२६-६-१९४४

श्रीमतां श्री वेंकटरमणार्यमहोदयानां संनिधौ

सविनया विज्ञप्तिः

अयि महाभागाः,

अनुगृहीतोऽस्मि च तत्रभवद्भिः सदयं सानुकंपं च प्रेषितेन काव्यसमुदयाख्येन ग्रंन्थेन। ललितपदबद्धं तत्वार्थसंरूढमूलं चैतद्ग्रंन्थरत्नमवलोकयतो मे चेतः तुष्यति पुष्यति च ।

एतच्च ग्रंथरत्नं विरचयद्भिरत्रभवद्भिः न केवलं प्रतिपादितं अमरभाषायाः अमरत्वं, किं तु भूषिता च वागूदेवी नवनानेन भूषणेन इति सुदृढो मे अभिप्रायः ।

प्रशसनीयश्च भवतां परिश्रमः ग्रंथस्यास्य प्रकाशने, यत् संग्रामसंक्षुब्धे चास्मिन्नवसरे अतीव खलु पुस्तकनिर्माणसामग्रीणां च अभावः ।

विजयतां गीर्वाणसरस्वती ।

---

## वासुदेवशर्मा, त्रिशिरःपुरम्

९-८-४४

स्वस्ति । आर्यमान्य ।

प्रणामसहस्रपूर्वकं विज्ञाप्यते त्रिशिरःपुरदेशीयविद्यालयसंस्कृतद्राविडसेवापरेण उतथ्य श्री वासुदेवशर्मणा एवम् :- पुनः पुनः समावितोऽस्मि मान्यैः भवद्भी रचितानां प्रबन्धरत्नानामुपहारेण । तान् दृष्ट्वा तद्विशदीकृताभिरार्यस्य गीर्वाणभाषाभक्त्या, अनितरसाधारणप्रतिभया, चिरन्तनविश्वसाहितीनिपुणतया च चमत्कृतः विस्मयपरवश एव वर्ते । किन्तु तान् ग्रन्थानिवम्रष्टुं वा गुणगणानीदृशानिति व्याचष्टुं वा नालमस्मि । विरली-

भूते गीर्वाणभाषामाधुरीनिषेवणसमथे जने, संस्कृताभ्यासे च निष्फलप्राये, भवतां सुरभारतीकाव्यरचनसंमुद्रणादिव्यापारं महत्साहसमिव समर्थये। तथाऽपि तत्वतः स व्यवसायः प्रशस्य एव। "चित्र वा एतत्कर्म"। "भवो हि लोकाभ्युदयाय तादृशाम्"। इत्येवाभिनन्दितुं शक्यते। अतः सश्लाघं समाप्यते लेखोऽयम्।

---

## APPENDIX II

### 1 The Indian Pen, May 1940

" Pandit C Venkataramanaiya is the author of two works reviewed by K. N. Watve in the January issue of 'Oriental Literary Digest' The one is a play entitled Kamalavijaya Natakam which is based on Tennyson's 'The Cup'. The author has adopted the original, writes Sri Watve not only to the Sanskrit dramatic technique but also to the Oriental Outlook, and reveals a wonderful command over classical Sanskrit the other work is one on Sanskrit prosody entitled "Sarvasamavritta Prabhava" which is a compendium of almost all the Samavrittas usually given in standard works. The introduction and indices provide useful information and the author has in many cases illustrated his definitions by original verses The Government Branch Press, Mysore, is responsible for both volumes ".

---

2. Mr. B K. R. Iyengar, B A., LL.B., Vakil, "Krishna Bhavan", Maradipalli, Secunderabad—Dn 2—4—1940.

"The drama 'Kamala-Vijaya Natakam' is really a masterpiece production and is a book best fitted to adorn a good library The English Original was my Text during my College days and reading of your adoption to Sanskrit now reminds me that the rendering has been done by the ablest of our poets who should be as famous or excel, the original authors".

The 'Sarvasamavritta Prabhava is a book which can guide and throw very good light for those who are in quest of thoroughness in Prosody.

The last but not the least, viz., 'Stutikusumanjali' is a very handy and a very useful book for the use of every one who are still following the traditions of ancient form of prayers The stotras useful for all creeds of Hindus are very rythmical and very easy to be learnt by heart, and I am sure that by daily meditation over it, it will surely have its effect viz., manifesting the glories of Diety dedicated to by a person of first rate scholar in the Sanskrit language"

---

3 Mr. B. K. K Chettiyar, Chief Auditor of E. I. Railways, Calcutta 11—2—1940.

"The books reveal your wonderful mastery over the Sanskrit language. It is indeed a source of gratification for us to find that even in the present age there are scholars who can compose such beautiful poems in Sanskrit. I beg to tender my great regard to your literary merits".

---

4 K Srikantaiya, Esq, B A., B. N Railways, Calcutta.

20—12—1936

I cannot help paying my humble tribute of admiration for your profound learning and deep culture which is prompting you even at this age to enlighten the hybrid products of East and West whose God is their brain and whose universe ends with their senses, with the result of your vast experience, ripe wisdom and mature scholarship in the shape of literary and scientific or devotional publications purely for the love of it. This is real 'Nishkamya Karma' for the 'Lokasangraha'

Opinion by Dr. Ganganatha Jha, Ex-Vice Chancellor of Allahabad University—

I have had the pleasure of meeting Pandit C. Venkataramaniya of Bangalore, and listening to his poems. It is a great consolation to find among us such writers of Sanskrit His poems bear true mark of the true poet and bear testimony to his wonderful command over the language and its niceties. I hope he will find a publisher for his works. Works like his deserve to live. It would be a pity if they are lost for want of publicity.

*28th. August 1933* GANGANATHA JHA.

Haradatta Sarma Esq., M.A, Ph D, Professor of Sanskri, S. D College, Cawnpore, writes —

I have had the great honour of reading with you, your compositions in Sanskrit. Your drama 'Kamalavijaya" is not only replete with the technique of drama, but is full of poetic excellence and charm. Your command over the language, grammar and metrics is wonderful It would be a great loss to Sanskrit literature if your work remains unpublished for lack of funds. It is only people like you who entirely disprove the malicious slur that our own brothren cast on Sanskrit by calling it a *dead language.* If new poetry and drama like your's are being daily created, then who can deny that Sanskrit is a living learruage ? I pray to God that ways and means be found to enable others also to taste the sweetness of your poetry.

In the end I tender my homage to your learning and remain ever.

7th. November 1933

Yours sincerely,
H SHARMA.

---

**Dr. Shama Sastry, B A, Ph.D.,** Retd. Curator of Oriental Library, Mysore, writes —

Like many other things in the world, Sanskrit has her own share of likes and dislikes towards her While there are many who not merely dislike, but hate her, the number of those who adore her is a legion. Besides these two classes, there are some who always work with zeal and contribute what they can to the store of her riches she has acquired through ages. It is to this last class that Mr. C. Venkataramaniah, Retired Inspector of Sanskrit Schools in Mysore, Bangalore, belongs By publishing his Sanskrit hymns in praise of Gods first, then a treatise on Sanskrit metrics with illustrative examples of his own composition, and lastly "Kamalavijaya", a Sanskrit drama in five Acts, adapted from Tennyson's "The Cup", he has made himself widely known to the world of Sanskrit scholars in India. His latest work entitled "Kavyasamudaya" or "Collection of Sanskrit Poetical Works", now presented to the public, bids fair to establish

his reputation as a distinguished Sanskrit scholar and poet The present volume contains four different works entitled 1 "Harischandra" 2 "Nabhanedishtha" 3 "Visvamitra", 4 "Uma's Mirror"

The style of the author is simple and lucid The diction is sweet and dignified and free from such fancies and conceits as are found in the works of latest Sanskrit poets. What is more attractive is the author's own glossary on almost all difficult terms and phrases, and rare usages of words. Regarding the appreciation of his work by scholars, the author may rest content with saying in the words of Poet Bhavabhuti that the world is full of scholars who share the views of the author and appreciate his work

Mysore
27-8-1942.

**R. Shama Sastry**

---

KIRAN CHUNDER DUTT, M. R. A S. (Lond) "Lakshmi Nibas," Lord Sinhe Road, MADHUPUR (S.P.) E. I Ry

25th November 1944.

Dear Mr Venkataramanaiya,

I very much appreciate your high "Sankalpa" not only in writing these Sanskrit poems, dramas and treatises to enlighten your fellow-men, but the spirit of "Niskam Karma" embodied in it. Nothing is more laudable for an oriental scholar than to explore the avenues of our sacred heritage of Sanskrit learning and to distribute the same in a new and at the same time an original garb.

The very little that I have been able to find in the two books now in hand has convinced me of your deep learning of the most ancient language of the world,—the "Deva Bharati of the Punyabhoomi of the land of the Bharathas."

Dr. Ganganatha Jha and Prof. Haradatta Sharma have really noted what every one interested in Sanskrit literature will opine in lestening to and reading of your works. Surely it would have

been a loss to the country if these gems, though little in comparison to the vast treasure of oriental learning, had not seen the daylight.

In reality, 'Sanskrit' is not a dead language. We, Europeanised Indians, are at present fascinated by western culture and, therefore, our hoary headed language of the Rishis seems to us to be morbid, as we cannot find our ways to go and explore the treasure that lies embedded in it Books of this kind will surely remove such a misconception

Your rendering of Tennyson's "Cup" into a Sanskrit Drama of five acts, is indeed charming and a better translation of that famous book of one of the Poet Laureattes of the world is most probably not to be found in any language.

---

K. S. SHASTRI. Hooghly Mohsin College,
Lecturer, Chinsura, 16 ix 44.

I have great pleasure in testifying to the high opinion I have formed about the KAVYA-SAMUDAYA, a collection of four poetical works in Sanskrit by Mr. C. Venkataramaniah, retired Inspector of Sanskrit Schools in Mysore, Bangalore. The themes of the work under review relate to three vedic episodes narrated in the first three pieces and in the last one to a Vedantic idea versified in Sanskrit from the English lyric originally composed by Mr. Krishnaswami Iyer. These subject-matters have been very aptly put with a view to giving a clear idea in lucid poetical style There are many good sayings in the book which can well pass on as SUBHASHITAS. It is not possible to quote them here, but instances like 'PREMAIVA BADHNATI MANAMSI DEHINAM' (on p 47), 'YOSHID YATHA PUSHPAVATI, PHALEGRAHIH' (on p. 51) and so on are quite enough to show that there is a real poet in him. His handling of metres not ordinarily used such as SVAGATA, CANCARIKAVALI, MATTAMAYURA and so forth shows that he is an expert on metrics At places so mnch excellences have been revealed from his pen as to set us thinking that he would fall in the category of the

SARASVATA type of poets He has himself written an exposition (VYAKHYA) on the important words technically known as TIPPANI It is indeed gratifying to note that even after his retirement from active service he has devoted himself to the enrichment of Sanskrit lore by composing these works and particularly by publishing them in these hard days of war emergency

---

Dakshinaranjan Shastri, M A., Lecturer, Sanskrit College, Calcutta, writes—

From time immemorial the Deccan has the reputation of being a seat of Sanskrit learning Poets like Bharavi and Bhababhuti, rhetoricians like Dandin, philosophers like Sankara and Ramanuja, compilers like Hemadri and Madhavacharya and commentators like Mallinatha and Sayanacharya flourished in South India. What is most striking is that although a Dravidian country, South India is uptil-now a centre of Vedic studies and culture Even in these days Vedic sacrifices are duly performed and Vedic hymns are recited by the Vedicists with great accuracy in this part of India.

A correct elucidation of Vedic myths may hence be expected from the pen of a South Indian Scholar.

Sri Venkataramanayya, a South Indian poet, has elucidated Vedic myths in his poetical work 'Kavya Samudaya'. In an age in which Sanskrit scholars are tired of Pouranic myths and are not in direct touch with the Vedic texts, the author has rendered a valuable service by popularising Vedic myths through his poems This unique character of his work, the simplicity and lucidity of his style and his sweet and dignified diction are however the great assets or assets on which this literary execution will count and for which it will have a permanent claim upon the indulgence of the readers who find an abiding interest in the study of Sanskrit literature. The elegant and graceful style of the book convinces its readers to a great extent that Sanskrit is still living, it is not yet dead.

---

Cohesion, lucidity, evenness, sweatness, tenderness, explicitness of meaning, pregnancy of expression, floridity, grace and transference, these ten poetic excellences are considered by Dandin as the soul of the style of the poetical contributions of the South Indian poets It is very pleasant to note that almost all the requisite qualities of the Vaidarbhi or South Indian style, enumerated by Dandin are present in the work of Mr Venkataramanayya. He has disproved very sucessfully the disparaging observation of Bana that the South Indian poets are fond of poetical fancy only–Utpreksa dakshinatyanam'

We can safely commend this book of poetry to the lovers of Sanskrit literature for perusal not only for the elegance of its language but for the intrinsic worth of its subject matter.

---

J G SHAH,
Principal,
S L U. College for Women
(Gujerat Mahila Pathasala)

Vallabhai Road-
Ahmedabad,
dated 20-6-1944

I am indeed very thankful to you for this I have gone through the book and I form very high opinion about your poetic glories I entirely associate myself with what has been written about your poetic powers by Dr Ganganath Jha, Prof H Sharma and Dr R Shama Sastry In my opinion the book deserves to be prescribed as a text book for any of the Collegiate examinations in Arts Course by any University, which wants to patronise the Sanskrit learning.

---

ARJUNA NATHA MATTU,
M.A.,

Panchavati
Khalsa College P O.
Amritsar, 9-6-44

Your labour is laudable and deserves praise.

The foot-notes in easy and simple Sanskrit are a great asset and add to the dignity of the work When Sanskrit scholars of your zeal and reputation live to guard its life and honour, Sanskrit can't possibly be called a 'Dead Language'.

Sri A. SANKARAN, M. A., Ph. D.,
Curator, Govt. Oriental
Manuscripts Library

Tirupati,
dated 11 6 1944.

It is very heartening to learn that good poetry is being written in the old classical style even in these days.

गुरूपदेशादध्येतु शास्त्रं जडधियोऽप्यलम् ।
काव्यं तु जायते तस्मात्कस्यचित्प्रतिभावत. ॥

May Venkataramana bless you.

---

P. K. ACHARYA,
The University

Allahabad,
Dated 17th May 1944.

Your poems are well-written, showing both a mastery of language and depth of poetic thoughts. I congratulate you heartily The world of Sanskrit-loving people will appreciate your poems I feel proud that there are still poets of your ability. I hope a time will come when poets like you will be sufficiently rewarded and encouraged by the country

---

K. MADHAVAKRISHNA SARMA, M O L.,
Curator, Anup Sanskrit
Library & Director of Oriental
Publications,

Fort, Bikaner,
24 - 6—1944.

Your poems contained in this Kavyasamudaya are excellent. Your command over the language is extraordinary. Your work which is especially praiseworthy in view of the fact that original productions in Sanskrit are fast becoming a thing of the past, has shown that Sanskrit is still full of life and vigour, and should earn the gratitude of the entire Sanskrit loving world.

---

N. P Chakravarthi, Dy Director General of Archaeology in India, Simla, 19—5—1945 writes—

I had a glance through the work and I am charmed with the command you possess over the Sanskrit language and metres. I hope more will follow your example in spending their leisure in such a way during retirement.

---

Siddheshwar Varma, Retd. Professor of Sanskrit, C/o the Post Master, Jammu (Kashmir), 17—5—1944 writes—

Pray accept my cordial thanks for a copy of your valuable work काव्यमुदय Its language is chaste, diction lofty and yet simple, themes elevating, and metres aggreeable.

---

D. P Khathry, Honorary Secretary, All-India Federation of Educational Associations, Cawnpore 6—6—1944 writes.—

Yout efforts are laudable and would be welcome to all who love Sanskrit and ancient Hindu Culture. Your mastery of diction is superb and I have derived considerable pleasure by the perusal of your composition

---

VISVA-BHARATI

Vidhusekhara Bhattacharya, China-Bhavana, Prof., Tan Yun-Shan, Santiniketan, Bengal, India, 3—11—1944 writes—

So far as I know you are the first poet who is the author of a *Kavya* based on a vedic story and I am really glad to note that your success is remarkable

---

Vidyaratna P. S. Subrahmanya Sastri, M.A., Ph.D, Professor of Sanskrit, Annamalai University, Annamalainagar, 8—7—1944.

It is a great pleasure to go through it (your work). It reveals how the *rasanubhavi* of the ancient Sans krit poets runs

through your veins. It is a divine blessing to spend the days of retirement in such pursuits and to enable the Sanskrit scholars reap the fruits of your experience. I wish that *Brahmanas* who are now prepard to do anything for gold resort to their original life of sacrifice. I have given your book to my students in the Sanskrit Honours class to read

---

Sri Ram Sharma, M.A., F R Hist S. (London), Principal, Dayanand Anglo Vedic College, Srinagar, 5—6—1944 writes—

Thanks very much for your sending me a copy of your Sanskrit work, '*Kavya Samudayah*' I have no doubt that I will find it interesting

---

The Educational Officer, Kutch, 31—5—1944, writes—

I beg to acknowledge with many thanks receipt of your publication, "Kavya-Samudaya" I am really grateful for your goodness to remember one of your fraternity working in a corner of India like Kutch

---

Pramathabhushan Paul Choudhury, M.A., B.L., F.R.S. (Lond.)(R) Krishnagar, Nadia, 30—6—1944 writes—

Your poems are merely splendid. I could not believe before I got your book that a poet of this century can write such lucid poetic correct masterly Sanskrit. You have infused life into this language which was dead long ago. Please accept sincere thanks of Nadia (Bengal) which was once the seat of Sanskrit learning.

---

॥ श्री. ॥

# ॥ जीवसञ्जीविनी नाटकम् ॥

## शुद्धाऽशुद्धपत्रिका ।

---

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ८ | माय मोहा | मायामोहा |
| ३ | १५ | पापानोद् | पापापनोद् |
| ४ | २२ | शम | शम् |
| ,, | ,, | स्वभक्तभ्यः | स्वभक्तेभ्य· |
| ५ | २० | मयिनम् | मायिनंतु |
| ७ | २२ | सत्रधर | सूत्रधार |
| ९ | २३ | प्राधानं | प्रधानं |
| १० | ७ | हतजन्यादिम् | श्रितजन्यादिम् |
| ,, | ,, | दवादि | दवेदि |
| १८ | १० | मितित्यज्ञ | मित्यज्ञ |
| १८ | १२ | सुषुत्पि | सुषुप्ति |
| २८ | ११ | जन्म | जन्मा |
| २९ | १३ | वसन्तातिलका | वसन्ततिलका |
| ३१ | ९ | रूढ्या | ऊढ्वा |
| ३१ | १९ | महादाश्चर्य | महदाश्चर्य |
| ३३ | ५ | भवाम्यह | भवाम्यहं |
| ३८ | १० | न शक्ताः | शक्ताः |
| ४५ | २३ | परारिहरेनि | परिहरेति |
| ४६ | ८ | सामाधानोक्तिः | समाधानोक्तिः |
| ५० | १३ | योगाविदां | योगविदाम् |
| ५१ | १८ | नमस्कारोमि | नमस्करोमि |

| | | | |
|---|---|---|---|
| ६१ | १० | अयुर्वेदे | आयुर्वेदे |
| ६३ | ४ | १ | ३ |
| ७९ | १९ | मम मगच्छता | मगच्छता |
| ८१ | १६ | तमोरा - | वीतमोदाः |
| ९० | २६ | अलमितिना | अलमित्यनेन |
| ९४ | १९ | कीमिति | किमिति |
| १०५ | ११ | परमहष | परमहर्ष |
| १२४ | ९ | स्वग | स्वर्ग |
| १२७ | १२ | भूया | भूय |
| १२८ | १५ | कुष्टस्वर | कुष्टस्वर |
| १३० | ८ | सवा | सर्वा |
| ११ | १० | व | वा |
| ,, | १९ | मिर्नी | मनी |
| १३१ | १५ | सौन्दर्य | सौन्दर्य |
| १३२ | १६ | यस्यासा | यस्यास्सा |
| १३३ | १ | कि ते | किं ते |
| १३१ | ११ | समान | समान |
| १३७ | १९ | ऽज्जीवित | मज्जीवित |
| १४२ | १ | सूप्रतः | प्रसृतः |
| १५२ | १८ | सङ्क्लिपते | सङ्क्लिपते |
| १५२ | २५ | उद्दिपन | उद्दीपन |
| १५३ | २१ | दंपती | दपति |
| १५५ | २ | शिरासां | शिरसा |
| १६२ | १२ | श्वश्रूवाः | श्वश्रवा (श्रूवाः) |
| १६५ | १७ | भूतायः रतेः | भूताया रतेः |

| | | | |
|---|---|---|---|
| १६६ | १९ | व्यभिचरि | व्यभिचारि |
| १६८ | ८ | श्वेष्ठः | श्रेष्ठः |
| १६८ | १९ | त्मे | मे |
| १६८ | २० | कंचि कालं | कश्चित्कालं |
| १६१ | २२ | गीर्मणी | गर्भिणी |
| १६९ | २२ | पुमत्या | पुमपत्या |
| १७५ | १९ | भावः ते | भावः। |
| १८२ | ७ | स्थातव्य | स्थातव्यम् |
| १८४ | १३ | भूत्वा | भूत्वा |
| १८६ | १७ | तपापि | तथापि |
| १८७ | ९ | प्रयोगेणपि | प्रयोगेणापि |
| १८७ | १२ | मन्यसः | मनसः |
| १८९ | २२ | चूर्णम् करञ्जचूर्णम्, | चूर्ण-करञ्जचूर्णम् |
| १९४ | ११ | ताऽत्रः | ताऽत्र |
| १९५ | ४ | सप्राथ्र्य | संप्राथ्र्य |
| १९५ | १८ | दॆवाता | देवता |
| १९७ | १ | एव | एवं |
| १९८ | १९ | पुना पुनः | पुन पुनः |
| १९९ | ९ | वगानामिति | वंगानामिति |
| २०० | १४ | शोणः | शोषः |
| २०० | २० | श्चीकित्सा | श्चिकित्सा |
| २०८ | ८ | सुमारण | समीरण |
| २२७ | १५ | लब्ध्वाऽऽनिन्दी | लब्ध्वाऽऽनन्दी |
| २२८ | १६ | भर्तुगीत्रं | भर्तुर्गोत्रं |
| २२८ | २५ | कालानिधि | कलानिधि |
| २३० | २ | सेवकः | सेवक |

| | | | |
|---|---|---|---|
| २३२ | २१ | ३ लोक | श्लोक |
| २३५ | ५ | संन्धाय | सन्धाय |
| २३९ | ९ | त्घ | त्व |
| २३९ | १२ | गृहिणी | गृहिणी |
| २४१ | १० | भावतीति | भवतीति |
| २४६ | २४ | समुचित्त | समचित्त |
| २४९ | ११ | साधिता | साधित |
| २४९ | २४ | हेतुमतः | हेतुभूतः |
| २५१ | १२ | तमानुसृत्य | तमनुसृत्य |
| २५१ | १३ | तथ | तथा |
| २५४ | १७ | काििति | कानीति |
| २५९ | २० | अनुमृहीतोऽस्मि | अनुगृहीतोऽस्मि |
| १६० | १६ | तत्मर्व | तत्सर्व |
| २६२ | १५ | वद्धि | वृद्धि |
| २६३ | १९ | नुर्तिनी | नुवर्तिनी |
| २६५ | १० | दीशिर्बलेन | दाशीर्बलेन |
| i | ११ | परिवतन | परिवर्तन |
| ii | १९ | दर्शनाथ· | दर्शनार्थः |
| v | १३ | सवषाम् | सर्वेषाम् |
| v | १६ | नू त, | नू त- |
| xi | ७ | टिप्पन्यप्रि | टिप्पण्यपि |
| ,, | १७ | भवाहक्षिभिः | भवाहग्भिः |
| xii | १३ | सुहदौ | सुहदो |
| xiii | १६ | Sanskrit the | Sanskrit. The |
| xiv | ४ | are | is |
| xv | १३ | Leanuage | Language |

MR C VENKATARAMANAIYA
RETIRED INSPECTOR OF
SANSKRIT SCHOOLS IN MYSORE

Aryavasa NO 6 CENTAL BANK ROAD
CHAMARAJPET,
BANGALORE CITY

श्रीवेङ्कटरमणार्यः
निवृत्तमैसूरुदेशीयसंस्कृतविद्याशालोपद्रष्टा

आर्यावास,
६, सेंट्रल्बॅांक् वीथी, चामराजपेटे
बेंगलूरुनगरम्

# प्रसिद्धपात्रिका

## अनेन कविना विरचिताः ग्रंथाः

### संस्कृतभाषात्मकाः-

काव्यसमुदयः- (चतुस्सर्गात्मकम्-हरिश्चन्द्रकाव्यम्, द्विसर्गात्मकं, नाभानेदिष्टकाव्यम्, चतुस्सर्गात्मकं विश्वामित्रकाव्यम्, द्विसर्गात्मकम् उमादर्शकाव्यम्) प्रकाशितः ।

विज्ञानसमुदयः-(सनातनभौतिकविज्ञानम्, सनातनभूविज्ञानम्, सनातन-वनस्पतिविज्ञानम्, सनातनप्राणिविज्ञानम्) प्रकाशितः।

स्तोत्रसमुदय.-नवकुसुमाञ्जलिः, स्तुतिकुसुमाञ्जलि जगद्गुरुस्तोत्रशारदा-ष्टकादिस्तुतिनिचयसमन्वित.- पुनः प्रकाश्यते ।

प्रकीर्णग्रन्थसमुदयः- मैसूरुदेशीयसंस्कृतविद्याभ्युदयचंपूः- प्रकाशितः । कमलाविजयनाटकम् - प्रकाशितपूर्वम् । जीवसंजीविनीनाटकम् - प्रकाशितम् । सर्वसमवृत्तप्रभावः- प्रकाशितः । आर्यादिवृत्तप्रभाव.- प्रकाश्यमानः- एतैः प्रत्येकं सघटितः ।

### कर्णाटभाषात्मकाः-

नाट्यप्रयोगसारसंग्रहः
नीतिधर्मसंग्रह.
विद्यारण्यचरित्रम्

एतेषां सर्वेषां पुनर्मुद्रणप्रकाशनादिकार्येषु लोकोपकारनिरतानां विद्याप्रणयिनां सर्वेषां भवत्यधिकार इति पुनरत्र विज्ञाप्यते ॥